त्त्वात्'' ( १-१-२५ पू० मी० ) इति ।

भाष्यञ्च पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि । अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थमवगमयन्ति इति ।

नात्र नैयायिकस्य काचनानुपपत्तिः । पदज्ञानं करणं ज्ञायमानं पदं वेति वदतः पदार्थस्मृतिर्व्यापारः स्मर्यमाणपदार्था व्यापार इति वा विनिगमकाभावेन वक्तुं शक्यत्वात् । तदयमर्थः । पदानां पदार्थस्वरूपमेवाभिधेयम् । अन्वितरूपस्तु पदार्थः पदार्थगम्यः । अत एव वाक्यार्थो लाक्षणिक इति मीमांसकाः, अभिहितार्थसम्बन्धादभिधीयमानत्वात् । न च पदार्था वाक्यार्थविशेषेणाविनाभावरहिताः कथं तत्र लक्षणेति शङ्कनीयम् । नावश्यमविनाभावनिमित्तैव लक्षणा । एकवाक्यतादि तत्र निमित्तम् । एकवाक्यता प्रत्यक्षा सोमेन यजेत इत्यादौ, क्वचिदनुमेया यथा दर्शपूर्णमासवाक्यस्य समिधो यजतीत्याद्यङ्गबोधकवाक्यस्य चेति ।

अभिहितान्वयाङ्गीकारे मन्त्राणां तत्प्रतिपाद्यार्थानुष्ठाने अङ्गत्वबोधः फलमिच्छन्ति खण्डदेवाचार्याः । तथाहि कदाचन स्तरीरसि इत्यश्वाभिधानीमादत्ते इति वाक्यजन्यबोधे मन्त्रः इतिशब्दार्थः सन् तादृशवाक्यजन्यबोधे कारणम् । ततश्च तज्जन्यप्रमाविषयत्वान्मन्त्रस्य धर्मप्रमाजनकत्वरूपं धर्मे प्रामाण्यं सिद्धमिति ।

## लिङर्थे विशेषः

मीमांसका भावनामुख्यविशेष्यकबोधं स्वर्गकामो यजेत इत्यादिवाक्याद् भवतीति वदन्ति । भावनायाः किं केन कथमिति चांशत्रयाकाङ्क्षायां स्वर्गकामो यजेत इत्यादौ स्वर्गो भाव्यत्वेन, यागः करणत्वेन, प्रकरणोपस्थितान्यङ्गानि इतिकर्तव्यतात्वेन चीयन्त इति स्वर्गकामशब्दस्य काम्यमानस्वर्गे लक्षणया तस्य भावनान्वयमाहुः ।

न्यायमते तु इष्टसाधनत्वं लिङर्थः, तस्य यागेऽन्वयः, इष्टसाधनीभूतयागानुकूलकृतिमानिति च बोध इत्याहुः । अत्र तादृशमिष्टं स्वर्ग इति कथमवगन्तुं शक्यते कामपदार्थविशेषणतयोपस्थितस्य स्वर्गस्य इष्टे

अभेदान्वयस्याव्युत्पन्नत्वात् । एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणत्वायोगादित्याक्षिपन्ति । नैयायिकाग्रेसराः श्रीगदाधरभट्टाचार्यास्तु समभिव्याहृतपदोपस्थापितकामनाविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नसाधनत्वमेव लिङर्थः । इष्टतावच्छेदकत्वञ्च न पदवाच्यम्, अपि तु स्वर्गत्वपशुत्वादीनामनुगमकमुपलक्षणम्, अतस्तस्य वाच्यकोटौ प्रवेशो नास्ति, तदादिपदानां बुद्धिविषयतावच्छेदत्ववत् । तथा च स्वर्गकामपदसमभिव्याहारे तादृशधर्मो विजातीयस्वर्गत्वं तदवच्छिन्नसाधनत्वबोधात् कर्मणि प्रवृत्त्युपपत्तिरित्याहुः ।

### आत्मनः प्रत्यक्षत्वानुमेयत्वयोर्विप्रतिपत्तिः

अत्र श्रीजयन्तभट्टो योऽहं गजादिवस्तु पूर्वमनुभूतवान्, स एवेदानीं तत्स्मरामीति प्रत्यभिज्ञानविषय आत्मैव । स च शरीरादिभिन्नः, शरीरस्य उपचयापचयादिना भेदात् । येषु भिद्यमानेषु यदभिन्नमनुभूयते, तत्तेभ्यो भिन्नं यथा कुसुमेभ्यः सूत्रमिति न्यायेनात्मा पृथगेवानुभवविषयः प्रत्यक्षश्चेति ब्रवीति । वाचस्पतिमिश्रा अपि भामत्याः प्रारम्भ एव पूर्वपक्षे जीवः प्रत्यक्षः शरीरादिभिन्नत्वेनापीत्याहुः । सिद्धान्तिनस्तु शरीरादिविशिष्टस्यैवात्मनस्तादृशानुभवगोचरत्वं न तु केवलस्येत्याहुः । भामतीकारोऽपि शास्त्रचिन्तकानां खलु अनुमानादिव्यवहारो न तु प्रतिपत्तॄणामिति वदन् शरीरमेवाहंबुद्ध्यालम्बनमिति स्पष्टमाह ।

आनन्दबोधाचार्यास्तु अनुमानेनापि न शरीरव्यतिरिक्तात्मसिद्धिः । तथाहि, अनुमानप्रयोगः चैत्रशरीरावच्छिन्नभोगवान् मैत्रशरीरावच्छिन्नभोगवद्भिन्नो मैत्रशरीरावच्छिन्नभोगानधिकरणत्वादित्यनुमानं भेदसाधकं चैत्रमैत्रयोर्वक्तव्यम् । अत्र पृच्छामः कथं हेतुज्ञानमनुमितेः पूर्वं जायेत ? मैत्रशरीरावच्छिन्नसुखादेः चैत्रशरीरावच्छिन्नेऽप्यात्मनि उपाधिभेदमात्राद् भिन्नत्वेन सन्दिह्यमाने सद्भावसन्देहाच्चैत्रमैत्रकर्णयोर्भिन्नयोरेकाकाशगतविभिन्नशब्दवत् । ततश्च चैत्रमैत्रात्मनोर्भेदनिश्चये सति हेतुसिद्धिः, हेतुनिश्चये सति भेदानुमानमिति स्पष्टमितरेतराश्रयत्वम् ।

अत एव बृहदारण्यकभाष्योपोद्घाते श्रीशङ्कराचार्या आत्मभेदो नानुमेयः, जन्मान्तरसम्बन्धस्यात्मन्यग्रहणात् । यद्यपि उत्पन्नस्य बालस्य क्षीरपानोपयोगि इष्टसाधनत्वस्मरणं जन्मान्तरीयानुभवजन्यसंस्कारं कल्पयेत्; तथापि सम्बन्धाग्रहणात् न व्याप्तिनिश्चयः, स्वभाववाददर्शनात् । आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्च अहंप्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवानीति कल्पयन्तो वदन्ति प्रत्यक्षश्च अनुमेयश्चात्मेति ।

अतोऽस्मिन् विषये न्यायसिद्धान्तो विचारणीयो विदुषाम् ।

वाराणस्याम्<br>विजयादशम्याम्,<br>वि० सं० २०४०

विदुषां वशंवदः<br>**सम्पादकः**

## विषयसूचिका

इति-अष्टममाह्निकम्



॥ श्रीः ॥

# न्यायमञ्जरी

## प्रमाणप्रकरणम्

प्रपन्नाय विपन्नानां दुःखितानां सुखात्मने ।
सम्पूर्णाय दृढाशानां नमोऽकारणबन्धवे ॥

### शब्दार्थस्यावास्तवत्वखण्डनोपक्रमः

अथ यदुक्तं वास्तवस्य शब्दार्थस्याविद्यमानत्वादर्थासंस्पर्शिनः शब्दा इति तत्प्रतिविधीयते । द्विविधः शब्दः पदं वाक्यञ्च । तत्र पदार्थपूर्वकत्वाद् वाक्यार्थस्य प्रथमं पदार्थो निरूप्यते । 5

### पदार्थनिरूपणे पदस्वरूपम्

पदञ्च द्विविधं नाम आख्यातञ्च । उपसर्गनिपातकर्मप्रवचनीयानामपि नामान्तर्भावमाचक्षते । तदुक्तं सुप्तिङन्तं पदमिति । इहापि सूत्रकृदाह 'ते विभक्त्यन्ताः पदम्' इति । तत्र तिङन्तपदार्थचिन्ता वाक्यार्थविचारावसर एव करिष्यते तदौपयिकत्वात् । 10

सुबन्तानां त्वर्थोऽयमुच्यते । ते च चतुर्विधाः सुबन्ताः पदात्मानः शब्दा भवन्ति, जातिशब्दाः, गुणशब्दाः, द्रव्यशब्दाः, क्रियाशब्दा इति । तत्र गवादिजातिशब्दानां गोत्वादिजात्यवच्छिन्नं व्यक्तिमात्रमर्थो यस्तद्वानिति नैयायिकगृहे गीयते । 15

ननु शुक्लादिगुणाधिकरणं क्रियाश्रयश्च द्रव्यं व्यक्तिः, सास्नाद्यवयवसन्निवेशात्मिका आकृतिः, शाबलेयादिसकलगोपिण्डसाधारणं रूपं जातिरिति व्यक्त्याकृतिजातिसन्निधाने समुच्चारित एष गोशब्दः कथमितरतिरस्कारेण तद्वन्मात्रवचनतामवलम्बते, आह विंतता त्वियं कथा वर्तयिष्यते तावत् ।

इदन्तु चिन्त्यताम्, जातेरेव प्रमाणातीतत्वेन शशशृङ्गवदविद्यमानत्वात् कथं तद्वान् पदार्थो भविष्यति । तथा हि न तावत्सामान्यग्रहणनिपुणमक्षजं ज्ञानं भवितुमर्हति, तस्य पूर्वापराननुस्यूतस्वलक्षणमात्रपरिच्छेदपरिसमाप्त-व्यापारत्वात् ।

5 समानवृत्तिता नाम सामान्यस्य निजं वपुः ।
कथं स्पृशति सापेक्षमनपेक्षाक्षजा मतिः ।।

समानेष्वाकलितेषु तद्वृत्तिसाधारणरूपमवधार्य सामान्यं गृह्यत इति सापेक्षं तत्स्वरूपग्रहणम्, इयञ्च प्रथमनयनसन्निपातसमुद्गतमतिः पूर्वापरानु-सन्धानबन्ध्या निरपेक्षा कथं तद्ग्रहणाय प्रभवेत् । तत्पृष्ठभाविनस्तु विकल्पाः 10 स्वभावत एव वस्तुसंस्पर्शकौशलशून्यात्मान इति तद्विषयीकृतस्यापि सामान्यस्य न परमार्थसत्त्वं भवितुमर्हति, न चानुमानं शब्दो वा सामान्यस्वरूप-वास्तवत्वव्यवस्थापनसामर्थ्यमश्नुते, शब्दलिङ्गयोर्विकल्पविषयत्वेन वस्तु-ग्राहित्वासम्भवात् । तत्प्राप्त्यादिव्यवहारस्तु प्रकारान्तरेण दर्शयिष्यते ।

**व्यक्तिव्यतिरिक्तजातिखण्डनम्**

15 अतश्च न व्यक्तिव्यतिरिक्तं सामान्यं भेदेनानुपलम्भात् । तथाहि, कुवलयामलकबिल्वादीनि करतलवर्तीनि पृथगवलोक्यन्ते न जातिव्यक्ती इति न तयोर्भेदः । देशभेदस्य चाग्रहणाद् यत्खलु यतोऽतिरिक्तं तत्तदधिष्ठितदेशव्यति-रिक्तदेशाधिष्ठानमवधार्यते, घटादिव पटः । न चैवं जातिव्यक्ती इति न तयोर्भेदः । अतश्चैवं तदग्रहे तद्बुद्ध्यभावात्; यद्धि यतो व्यतिरिक्तं तस्मिन्न-20 गृह्यमाणेऽपि गृह्यते घटादिव पटः । न च व्यक्तावनुपलभ्यमानायां जातिरुप-लभ्यते तस्मान्न ततोऽसौ भिद्यते । तद्वृत्तित्वात्सामान्यस्य तदग्रहे तदनुप-लब्धिरिति चेन्न, वृत्त्यनुपपत्तेः ।

**जातिव्यक्त्योः सम्बन्धासिद्धिः**

किं प्रतिपिण्डं कार्त्स्न्येन वर्त्तते जातिरुतैकदेशेनेति । द्वयमपि चानुपपन्नम् ।

25 पिण्डे सामान्यमन्यत्र यदि कार्त्स्न्येन वर्त्तते ।
तत्रैवास्य समाप्तत्वान्न स्यात् पिण्डान्तरे ग्रहः ।।

एकदेशेन वृत्तौ तु गोत्वजातिर्न कुत्रचित् ।
समग्रास्तीति गोबुद्धिः प्रतिपिण्डं कथं भवेत् ॥

जातेश्च निरवयवत्वान्न केचिदेकदेशाः सन्ति यैरेषा प्रतिपिण्डं वर्त्तेत । न चैकत्र पिण्डे समाप्त्या वर्त्तमाना पिण्डान्तरे समाप्त्यैव वर्त्तितुमर्हति, समाप्तस्य पुनरुत्पत्तिं विना समाप्त्यन्तरानुपपत्तेः, तथाभूतस्य वृत्तिप्रकारस्य क्वचिदप्यदर्शनात् । 5

**वैशेषिकसिद्धसमवायखण्डनम्**

या च समवायात्मिका पिण्डेषु वृत्तिः सामान्यस्य औलूक्यैरुच्यते तामपि न बुद्ध्यामहे वयम् ।

अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवाय 10 इति यदुच्यते तद्विप्रतिषिद्धम् । अयुतसिद्धता च सम्बन्धश्चेति कथं सङ्गच्छते । पृथक्सिद्धे हि वस्तुनी कुण्डबदरवदन्योन्यं सम्बध्येते स्त्रीपुंसवद्वा । अयुतसिद्धे तु तदेकत्वात् किं केन सम्बध्यते । द्रव्यगुणयोरपृथक्सिद्धयोरपि सम्बन्धो विद्यत एवेति चेत्, तदिदं मन्ये उन्मत्तस्योन्मत्तसंवर्णनम् । गुणिनोऽपि गुणव्यतिरिक्तस्यानुपलम्भाद् अयं गुणी रूपादिभ्योऽर्थान्तरत्वेन नात्मानमुपदर्शयति 15 व्यतिरेकञ्च तेभ्यो वाञ्छतीति चित्रम् ।

यदपि नित्यानित्यविभागेन युतसिद्धेः स्वशास्त्रे परिभाषणं कृतम्, नित्यानां परमाणूनां पृथग्गतिमत्त्वं युतसिद्धिरनित्यानान्तु युताश्रयिसमवायित्वम्, विभूनान्तु परस्परमाकाशादीनां सम्बन्ध एव नास्तीति तदपि प्रक्रियामात्रम् । नानात्वेन सिद्धिर्निष्पत्तिर्ज्ञप्तिर्वा युतसिद्धिरित्युच्यते तद्विपर्ययादयुत- 20

---

॥ ॐ नमः शिवाय ॥

**उन्मत्तस्योन्मत्तसंवर्णनमिति ।** यथा उन्मत्त उन्मत्तान्तरं श्लाघत एवमलब्धवृत्ति सामान्यं तथाविधमेवालब्धवृत्ति द्रव्यं प्रदर्शयतीति ।

**अनित्यानान्त्विति ।** तन्तुपटादीनां युतेषु भिन्नेष्वाश्रयेषु समवायित्वं तन्तूनामंशुषु समवायात् पटस्य तन्तुष्विति । **विभूनान्तु परस्परमाकाशादीनामिति ।** पृथग्ग- 25 तिमत्त्वयुताश्रयसमवायित्वयोरभावात् ।

सिद्धिरैक्येन सिद्धिरवतिष्ठते, तथा च सति सम्बन्धो दुर्वचः। अवयवावयविनो-रपि समवायात्मा सम्बन्ध एवमेव परिहर्त्तव्यः। यथाह भट्टः 'नानिष्पन्नस्य सम्बन्धो निष्पत्तौ युतसिद्धता।' इति।

परमाण्वाकाशयोः परमाणुकालयोश्च सम्बन्ध इष्यते नाकाशकालयो-रन्योन्यमिति प्रक्रियैवेति अलमवान्तरचिन्तनेन। तस्मान्न जातिव्यक्त्योः काचिद् वृत्तिरुपपद्यते।

**प्रभाकरमतविवेचनम्**

**सुशिक्षितास्तु** रूपरूपित्वलक्षणमाचक्षते जातिव्यक्त्योः सम्बन्धम्। सोऽपि नोपपद्यते। रूपशब्दः किं शुक्लादिवचनः, आकारवचनः, स्वभाववचनो वा? शुक्लादिवचनत्वे नीरूपाणां पवनमनःप्रभृतीनां द्रव्याणां गुणकर्मणाञ्च सामान्यशून्यता स्यात्। आकारवचनत्वेऽपि अवयवसन्निवेशरहितानां तेषामेव गुणादीनां सामान्यवत्ता न प्राप्नोति। स्वभाववचनत्वे तु जातिजातिमतोर-व्यतिरेक एव भवेत्।

अवभाति हि भेदेन स्वभावो न स्वभाविनः।
शब्दातिरिक्ततैवेयं न तु वस्त्वतिरिक्तता॥

किञ्चेदं रूपं नाम, किं वस्त्वेव वस्तुधर्मो वस्त्वन्तरं वा? वस्त्वन्तरं तावन्न प्रतिभातीत्युक्तम्। वस्तुधर्मोऽपि तद्व्यतिरिक्ततया स्थितो न चकास्त्येव।

---

**नानिष्पन्नस्य सम्बन्ध** इत्यस्य पूर्वमर्धम् 'न चाप्ययुतसिद्धानां सम्बन्धित्वेन कल्पना' इति।

**सुशिक्षितास्त्विति** प्राभाकराः। ते हि सामान्याकारं रूपं पदार्थस्याहुः। न च रूपं रूपिशून्यमुपलभ्यते। पदार्थान्तराणां हि स्वरूपेण लब्धात्मलाभानामवगतानाञ्च परस्परसम्बन्धचिन्ता क्रियमाणोपपद्यते, रूपस्य त्वाकृष्टरूपिप्रतिपत्तेरेव प्रतिपत्तिरिति अन्य एव सम्बन्धान्तरविलक्षणोऽयं सम्बन्ध इति का अनयोः सम्बन्धं प्रति विमतिः "कथं वृत्तिः" इत्यादिकेति। तथा चाहुः 'सम्बन्धितया ह्यनवगम्यमानं सामान्यं सामान्यम् इति नावगम्यते। सम्बन्ध्यन्तरसव्यपेक्षा हि सम्बन्ध्यन्तरबुद्धिः। विशेषतश्चात्र रूपतया सम्बन्धितावगम्यते। न च रूपिशून्या रूपबुद्धिरस्ति। रूपतैव तदा न स्यात्' इति।

अव्यतिरेके च सम्बन्धवाचोयुक्तिरनुपपन्नेत्युक्तम् । न च रूपरूपित्वलक्षण-सम्बन्धः संयोगसमवायव्यतिरिक्तः कोऽपि श्रोत्रियैर्विविच्य व्याख्यातुं शक्यते यथा ईदृगिति । तस्माद्वाचोयुक्तिनूतनतामात्रमिह कृतं न त्वर्थः कश्चिदुत्प्रेक्ष्यत इत्यलं प्रसङ्गेन ।

**व्यक्तेर्जात्याश्रयत्वेऽनुपपत्तयः**　　5

अपि चेयं जातिः

सर्वसर्वगता वा स्यात् पिण्डसर्वगतापि वा ।
सर्वसर्वगतत्वे स्यात् कर्कादावपि गोमतिः ॥
अश्वधीः शाबलेयादावुष्ट्रबुद्धिर्गजादिषु ।
पदार्थसङ्करश्चैवमत्यन्ताय प्रसज्यते ॥　　10
अथापि व्यक्तिसामर्थ्यनियमान्नैष सङ्करः ।
न हि कर्कादिपिण्डानां गोत्वादिव्यक्तिकौशलम् ॥
मैवं खण्डाद्यभिव्यक्तमपि गोत्वमनंशकम् ।
सर्वत्रैव प्रतीयेत न वा सर्वगतं भवेत् ॥
तद्देशग्रहणे तस्य न हि किञ्चिन्नियामकम् ।　　15
दीपवद् व्यञ्जकः पिण्डो न तु तत्पिण्डवृत्ति तत् ॥
सर्वत्र गृह्यमाणञ्च सर्वत्रास्तीति मेऽन्वयः ।
सर्वसर्वगतं तस्मान्न गोत्वमुपपद्यते ॥
पिण्डसर्वगतत्वे तु काममेतददूषणम् ।
किन्तु नैवाद्य जातायां गवि गोप्रत्ययो भवेत् ॥　　20
पिण्डे नासीदसञ्जाते जातिर्जाते च विद्यते ।
सङ्क्रामति न चान्यस्मात् पिण्डादन्यत्र निष्क्रिया ॥
आयान्त्यपि न तं पिण्डमपोज्झति पुरातनम् ।
न चांशैर्वर्त्तते तत्र कष्टा व्यसनसन्ततिः ॥

**तत्र भट्टमतम्**　　25

भट्टास्तु ब्रुवते भिन्नाभिन्नमेकम् ।

वस्तुबुद्धिर्हि सर्वत्र व्यावृत्त्यनुगमात्मिका ।
जायते द्व्यात्मकत्वेन विना सा च न सिद्ध्यति ।।

केवलविशेषात्मकपदार्थपक्षे सामान्यप्रतीतेर्निरालम्बनत्वं सामान्यमात्रवादे विशेषबुद्धेरनुपपत्तिः ।

5 न चाप्यन्यतरा भ्रान्तिरुपचारेण गम्यते ।
दृढत्वात् सर्वदा बुद्धेर्भ्रान्तिस्तद्भ्रान्तिवादिनाम् ।।

न हि मिहिरमरीचिनिचयनीरप्रतीतिवत् सामान्यप्रत्ययोपमर्देन विशेषप्रतीतिः, विशेषप्रत्ययोपमर्देन वा सामान्यप्रतीतिरुदेति, किन्तु अविरोधेनैव युगपदुभयावभासः । अत एव निर्विकल्पबोधेन द्व्यात्मकस्यापि वस्तुनो
10 ग्रहणमुपेयते ।

**तन्मतनिरसनम्**

तदेतदभिधीयमानमेव न मनोज्ञमिवाभाति ।

नानारूपं त्वयैकस्य विरुद्धं वदता स्वयम् ।
दूषणादानमौखर्यमस्माकमपवारितम् ।।

15 तदेव सामान्यं स एव विशेषः, तदेवैकं तदेव नाना, तदेव नित्यं तदेवानित्यम्, तदेवास्ति नेति चादृष्टमिदमुच्यते, उच्यमानमपि न शोभते ।

दृष्टत्वान्न विरोधश्चेन्न तथा तदवेदनात् ।
उक्तं हि नानुवृत्तार्थग्राहिणी नेत्रधीरिति ।।

विचित्रविकल्पप्रबन्धविप्रलब्धबुद्धयः खल्वेवं मन्यन्ते, भवन्तु ते ; न
20 त्वेकं वस्तु बहुरूपं भवितुमर्हति ।

---

**न चाप्यन्यतरेति ।** बुद्धिरध्यवसिततद्भावत्वेन भ्रान्तिः, शुक्ताविव रजतरूपत्वेनाध्यवसितायाम् । अतद्रूपस्य ज्ञात्वापि केनचित् सादृश्यादिना तद्रूपाध्यारोपणमुपचारो 'गौर्वाहीकः' इति यथा ।

**विचित्रविकल्पप्रबन्धेति ।** निर्विकल्पोत्तरकालं योऽयं गौर्गौरित्यादिरबाह्यस्पर्शी
25 विकल्पप्रबन्धः ।

एकं हि वस्तुनो रूपमितरत्कल्पनामयम् ।
नानुवृत्तविकल्पेषु विस्रम्भ उचितः सताम् ॥
द्रागितो ह्यन्यसंस्पर्शनैरपेक्ष्येण दृश्यते ।
स्वलक्षणमतो भेदस्तात्त्विकोऽनुगमो मृषा ॥
दृढादृढत्वमक्षुण्णमपरीक्ष्यैव संविदाम् । 5
द्वयप्रतीतिमात्रेण द्वयाभ्युपगमो भ्रमः ॥
न नेति प्रत्ययादेव मिथ्यात्वं केवलं धियाम् ।
किन्तु युक्तिपरीक्षापि कर्त्तव्या सूक्ष्मदर्शिभिः ॥
न चैकं शबलं वस्तु निर्विकल्पकगोचरः ।
व्यक्त्यन्तरानुसन्धानाद् विनानुगमधीः कुतः ॥ 10

येष्वनुगतं तत्सामान्यं तेषु बुद्ध्याननुसन्धीयमानेषु तद्वृत्तिसामान्य-ग्रहणासम्भवान्न चानुसन्धानसामर्थ्यं बुद्धेरस्ति ।

अत एव न ते सम्यगक्षजज्ञानवेदिनः ।
अभेदवृत्तिप्रत्यक्षमाहुरद्वैतवाञ्छया ॥

तस्माद्भेदविषयत्वात् प्रत्यक्षस्य न तद्गतं सामान्यम् । 15

**जात्यनङ्गीकारेऽप्यनुगतबुद्धिः**

नन्वेवमपह्नूयमाने सामान्ये गौर्गौरिति शाबलेयादिषु योऽयमनुवृत्तः प्रत्ययः स कथं समर्थयिष्यते ? उक्तमत्र विकल्पमात्रमेष प्रत्ययो विकल्पाश्च नार्थाधीनजन्मान इति । तथा च परपरिकल्पितेषु सत्तादिसामान्येष्वपि निःसामान्यानि सामान्यानीत्यभ्युपगमाद्, औपाधिक एषु सामान्येष्वनुगत- 20

---

**अत एव न ते सम्यगिति ।** यथास्तीत्येव वस्तुस्वलक्षणमवभाति पश्चात् गौरिति विकल्पोदयस्तथा वस्तुग्रहणोत्तरकालमभेदस्य सत्तायाः प्रथा न प्रथमेति; एवं चाभेदवृत्ति सन्मात्रग्राहि प्रत्यक्षम् । सत्तायामगृहीतायां घटादिविकल्पानुदयादिति सत्ताद्वैतवादिनो न सम्यग्वादिनः ।

**औपाधिक इति ।** एकस्यानेकवृत्तित्वादिरुपाधिः, तत्कृतः । यथा गोत्वमेकमनेक- 25 वृत्ति च तथा अश्वत्वाद्यपीति ।

विकल्प इति चेत्, आयुष्मन् ! गवादिष्वपि कञ्चिदुपाधिलेशमवलम्ब्य गौर्गौ-रित्यनुस्यूतविकल्पो भविष्यति । कः पुनरसावुपाधिरिति चेत्, एकार्थक्रिया-कारित्वमिति ब्रूमः ।

यदेव वाहदोहादि कार्यमेकेन जन्यते ।
गोपिण्डेन तदेवान्यैरिति तेष्वनुवृत्तिधीः ॥

**तुल्यार्थक्रियाकारित्वे शङ्कातत्समाधानश्च**

ननु प्रतिव्यक्ति कार्यं भिन्नमेव, सत्यम् ।

भेदबुद्धिभयात् तत्तदेकमित्युपचर्यते ।
कर्कादिकार्यादन्यत्वं यथा ह्येतस्य दृश्यते ।
न तथा खण्डकार्यस्य मुण्डकार्याद्विभिन्नता ॥

ननु तथा मा भून्न त्वभिन्नमेव खण्डमुण्डयोः कार्यम्, दर्शनमेव तर्हि तयोरेकं कार्यं भविष्यति तच्चाभिन्नम् । ननु दर्शनमपि प्रतिव्यक्ति भिन्नमेव, सत्यम्, तत्तु स्वपृष्टभाविप्रत्यवमर्शाख्यकार्यैक्यादेकमित्युच्यते । यथैव शाबले-यादिपिण्डदर्शनेऽपि गौरित्येवावमर्श इति तदेकत्वमुच्यते । तदुक्तम्,

एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी ।
एकधीहेतुभावेन व्यक्तीनामपि भिन्नता ॥ इति ।

तस्मादौपाधिकत्वादनुवृत्तबुद्धेर्न सामान्यं किञ्चिद्वास्तवमस्तीति ।

**सम्बन्धानङ्गीकारे शब्दानुमानयोरप्रवृत्तिरिति शङ्कानिरासः**

तत्राह,

अनिष्यमाणे सामान्ये ननु शब्दानुमानयोः ।
कथं प्रवृत्तिः सम्बन्धग्रहणाधीनजन्मनोः ॥
न हि व्यक्तिषु सम्बन्धो ग्रहीतुमिह शक्यते ।
स हि व्यक्तिषु गृह्येत सर्वास्वेकत्र वा क्वचित् ॥

न तु सर्वासु, देशकालादिभेदेन तदानन्त्यादशक्यत्वात् । नैकस्यां व्यभिचा-रात् ततोऽन्यत्रापि स शब्दः प्रवर्त्तमानो दृश्यते । अगृहीतसम्बन्धे च न शब्द-लिङ्गे तत्प्रतीतिमुत्पादयितुमुत्सहेते इति । उच्यते । स्यादेतदेवं यदि प्रत्यक्ष-

---

एकप्रत्यवमर्शेति । धीर्भेदिन्यप्येकावमर्शजननादभेदिन्युच्यत इति ।

विषये स्वलक्षणे शब्दलिङ्गयोः प्रवृत्तिः स्यात् । ननु प्रत्यक्षविषये तयोर्वृत्ता-वनिष्यमाणायामनवस्थादिदोषोपघातादप्रवृत्तिरेव स्यात् ? मैवं वोचः, कथम-सकृदभिहितमपि न बुद्ध्यसे ?

विकल्पविषये वृत्तिरिष्टा शब्दानुमानयोः ।
अवस्तुविषयाश्चैते विकल्पा इति वर्णितम् ॥　　5

**विकल्पानामवस्तुविषयत्वे शब्दानुमानयोरुच्छेद इति शङ्काया निरासः**

ननु विकल्पानामपि विषयो यद्यनुगामी कश्चिन्नेष्यते तदुत्सीदेतामेव शब्दानुमाने । बाढम्, अस्ति विकल्पानामनुस्यूतो विषयः, स तु न वास्तवः । कः पुनरसाविति चेत्,

अतद्रूपपरावृत्ति-स्वभावमबहिर्गतम् ।　　10
बहिःस्थमिव सामान्यमालम्बते हि विकल्पः ॥
या च भूमिर्विकल्पानां स एव विषयो गिराम् ।
अत एव हि शब्दार्थमन्यापोहं प्रचक्षते ॥

तथा हि न विकल्पा वस्तु स्पृशन्ति । कुतः ?

एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम् ।　　15
कोऽन्यो न दृष्टो भागः स्याद् यः प्रमाणैः परीक्ष्यते ॥

तस्माद् भ्रमनिमित्तसमारोपिताकारान्तरनिषेधाय तेषां प्रवृत्तिः । यथा रूपसाधर्म्यसमारोपितरजताकारनिवारणाय शुक्तौ प्रमान्तरं प्रवर्त्तते नेदं रजत-मिति, तथेहापि शाबलेयादिस्वलक्षणे निर्विकल्पकेन सर्वात्मना परिच्छिन्ने कुतश्चिन्निमित्तादारोपितमगोरूपमिव व्यवच्छिन्दन्ति विकल्पाः, अगौर्न　　20

---

**एकस्यार्थस्वभावस्येति** । एकस्येति निरंशस्य । **कोऽन्यो न दृष्टः** । प्रत्यक्षदृष्टात् स्वभावात् कोऽन्यः स्वभावो न दृष्टो यः प्रमाणैर्भवतः प्रमाणतयाभिमतैर्विकल्पैरनुमानैश्च परीक्ष्यते । प्रमाणैरिति विकल्पव्यक्त्यनुमानव्यक्त्यपेक्षया बहुवचनम् ।

**तस्माद् भ्रमनिमित्तेति** । तदुक्तम्,

'नो चेद् भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम् ।　　25
शुक्तौ वा रजताकारो रूपसाधर्म्यदर्शनात्' ॥ इति ।

भवतीति, न तु गोः स्वलक्षणग्रहणे तेषां व्यापारः; प्रागेव गृहीतत्वात् ।

अथ ब्रूयात् नानाविशेषणनिकरकल्माषितवपुषस्तस्यार्थस्य किञ्चिद् विशेषणं गृहीतं विकल्पैर्गृह्यत इति, तदप्ययुक्तम् । विशेषणनिकररूषितस्यापि वस्तुनः तद्विशेषणोपकारशक्तिव्यतिरिक्तात्मनोऽनुपलम्भात् तदभेदे सति
5 तद्विशेषेणोपकार्यवस्तुस्वरूपग्रहणवेलायामेव तत्त्वात् तच्चित्रग्रहणासिद्धेर्विकल्पान्तराणामानर्थक्यमेव । तदुक्तम्,

यस्यापि नानोपाधेर्निर्वाहिकार्थस्य भेदिनः, तस्यापि

नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मनो ग्रहे ।
सर्वात्मनोपकार्यस्य को भेदः स्यादनिश्चितः ।। इति ।

10 तस्मादपोहविषयाः शब्दा विकल्पश्चेति ।

---

**नानाविशेषणनिकरेति** । नानाभूतानि विशेषणानि गोत्वशाबलेयत्वद्रव्यत्वादीनि । **तद्विशेषणोपकारशक्तिव्यतिरिक्तात्मनोऽनुपलम्भादिति** । अस्यायमभिप्रायः । धर्मिणः सकाशादमी भिन्ना अभिन्ना वा, भिन्नाश्चेदभ्युपगम्यन्ते तदा भिन्नानां सम्बन्ध उपकारं विना न घटत इति धर्मिणस्तदुपकारिका शक्तिः कल्प्या । सा च कल्प्यमाना एका
15 अनेका वा कल्प्येत । अनेकाश्चेत् तासामपि शक्तीनां ततो भेदोऽङ्गीकर्तव्यः, न ह्येकस्यानेकात्मकत्वं सम्भवतीति । भिन्नानाञ्च सम्बन्ध उपकाराभावे न सम्भवतीत्यपरापरोपकारशक्तिकल्पनायामनवस्थाप्रसङ्गः । अथैका अभिन्ना चेति पक्षस्तदपेक्षयेदमुक्तं **तद्विशेषणेति** । **यस्यापि नानोपाधेरिति** । यस्यापि वैशेषिकादेः परस्परमाश्रयतश्च भिन्ना नानाभूता उपाधयो द्रव्यत्वादयो विशेषणानि यस्य तस्य नानोपाधेरर्थस्योपाधि-
20 भेदादेव भेदिनो निश्चयात्मिका धीर्विधिमुखेनैव ग्राहिका, प्रत्युपाधि च भिन्नेति मतम्, तस्यापि पक्षे नानाभूतानामुपाधीनां द्रव्यत्वादीनामुपकारस्याङ्गं कारणं या शक्तिस्तदभिन्नात्मन उपाधिमत एकेन निश्चयज्ञानेन ग्रहे निश्चये सर्वात्मना कृते सत्युपकार्यस्योपाधिकलापस्य मध्यात् को भेदः क उपाधिविशेषोऽनिश्चितः स्यात् । सर्व एव निश्चित इत्यर्थः, इत्येवमिदं धर्मकीर्त्तिवार्त्तिकं व्याचक्षते । अस्मिंश्च व्याख्याने तद्विशेषणोपकार्य-
25 वस्तुस्वरूपग्रहणवेलायामेवेत्यत्र तानि विशेषणान्युपकार्याणि यस्य वस्तुनस्तद्विशेषणोपकार्यमिति विग्रहः कर्तव्यः ।

**भट्टमतेनापोहः शब्दार्थं इति मतनिरासः**

नन्वपोहशब्दार्थपक्षे महतीं कृपाणवृष्टिमुत्ससर्ज भट्टः । तथा हि अपोहो नाम व्यावृत्तिरभाव इष्यते । न चाभावः स्वतन्त्रतया घटवदवगम्यते । तदयमन्याश्रितो वक्तव्यः, कश्च तस्याश्रय इति चिन्त्यम् । न तावद् भोः स्वलक्षणमाश्रयः, तस्य विकल्पभूमित्वाभावात् । नाप्यवान्तरसामान्यं शाबलेयत्वादि तदाश्रयः, तद्धि अशाबलेयनिवृत्तेराश्रयतां प्रतिपद्यते, न ह्येवमुपपद्यते अशाबलेयो भवतीति गौः किं तु शाबलेय इति, शाबलेयव्यावृत्तिर्हि गोष्वपि बाहुलेयादिष्वस्ति ।

अथ वा शाबलेयादिस्वलक्षणसमुदायमगोव्यावृत्तेराश्रयं ब्रूयुः, सोऽप्यघटमान एव, समुदायिव्यतिरेकेण तस्यानुपलम्भात् । समुदायिनाञ्च स्वलक्षणानां देशकालादिभेदेनानन्त्याद्वर्गीकरणं पुरुषायुषशतेनापि न शक्यक्रियमिति समुदायोऽपि न तदाश्रयः । तस्मात् सर्वसाधारणं प्रतिपिण्डं परिसमाप्तं किमपि नूतनमगोव्यावृत्तेरधिकरणमभिधातव्यम् । तच्च गोत्वमेव । तस्मिन्नङ्गीकृते वा किमगोव्यावृत्तिकल्पनायासेन ।

अपि च न केवलमाश्रयाभावात्तदग्रहणं सम्भवति, न च वर्गीकरणे निमित्तमेषां किंचिदस्ति । अश्वादयश्च विधिरूपतया भवन्मते न गृह्यन्ते, किन्त्वन्यव्यवच्छेदेनैवेति । तेषामपि व्यवच्छेदग्रहणे सैव वार्त्तेति, नेदानीं विकल्पैः क्वचिदपोहो विषयीकर्त्तुं शक्यते, निर्विकल्पेन च न कश्चिद् व्यवहार इति सकलयात्रोत्सादप्रसङ्गः । किञ्च य एते शाबलेयादिशब्दास्ते सर्व एवापोहवाचित्वाविशेषात् पर्यायाः स्युः । अपोहभेदाददोष इति चेन्न । अपोहानां भेदा-

---

महतीं कृपाणवृष्टिमिति । तथाहि भट्ट आह,

अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम् ।
गोत्वं वस्त्वेव तैरुक्तमगोऽपोहगिरा स्फुटम् ॥
भावान्तरमभावो हि पुरस्ताद् प्रतिपादितः ।
तत्राश्वादिनिवृत्त्यात्मा भावः क इति कथ्यताम् ॥ इत्यादि ।

न च वर्गीकरणं निमित्तमिति । एकदेशकालादि । अपोहानां भेदाभावात् । अभावरूपत्वादिति भावः ।

भावात्, भिद्यमानत्वे वा स्वलक्षणवदेषां वस्तुत्वप्रसक्तिः। भवत्पक्षेऽपि सामान्यमात्रवाचित्वाविशेषात्पर्यायत्वं समानो दोष इति चेन्न। सामान्यानां विधिरूपत्वात् परस्परसंरहितस्वभावतया नानात्वावगमात्। अपोहस्त्वभाव-मात्ररूपविशेषान्न परस्परं भिद्यते। कर्कादिशाबलेयाद्याधारभेदादपोहभेद इति चेन्न। तेषामाधारत्वस्य निरस्तत्वात्, आधारभेदेन वा तद्भेदाभ्युपगमे प्रतिस्वलक्षणमपोहतद्भेदप्रसङ्गः। ततश्च सामान्यात्मतास्य हीयते।

अथापोह्यभेदेनापोहभेदमवधार्य पर्यायिता पराणुद्यते, तदप्यसारम्। भवन्न-पोहिभेदाद् भेदो न पर्यायत्वमपहन्ति, भाक्तो ह्यसौ न मुख्यः। न चापोह्यभेदा-द्भेदोऽपोहस्यावकल्पते, यो हि सम्भाव्यमानसंसर्गैराधारैरपि न भेत्तुं पार्यते स दूरवर्त्तिभिरलब्धसम्बन्धैरतिबाह्यैः कथं भिद्येत ?

अभ्युपगम्यापि ब्रूमः। यद्यपोह्यभेदादपोहभिन्नत्वमपोह्यैक्यात्तर्हि तदै-क्येनापि भवितव्यम्, अतश्च गवाश्वयोरन्यापोहेन व्यवस्थाप्यमानयोरगावो-ऽनश्वाश्च हस्त्यादयोऽपोह्यास्तुल्या भूयांसो वा भवन्ति, असाधारणस्तु एको गौरश्वे गवि चाश्वोऽतिरिच्यते तत्र। इहापोह्यभेदाद् गवाश्वयोर्भेदो भवतु भूयसामपोह्यानामभेदादभेदो भवत्विति विचारणायां 'विप्रतिषिद्धधर्मस्य समवाये बहूनां स्यात्सधर्मत्वम्' इत्यभेद एव न्याय्यो भवेत्।

अथ साधारणत्वादश्वापोह्य एव गौरपोहेन व्यवस्थाप्य इष्यते ? स तर्हि सिंहादावप्यस्तीति सोऽपीदानीं गौर्भवेत्। अथाश्वादिविशेषोद्घोषरहितमगो-रूप्यं व्यवच्छेद्यमुच्यते, तत् प्रत्येकं ग्रहीतुमशक्यम्, आनन्त्यात्, वर्गीकरण-कारणञ्च किञ्चिन्नास्त्येव। न हि सर्वेषामगवामश्वादीनामेकदेशत्वमेक-कालत्वं वा समस्ति।

अथ गोप्रतिषेध एव वर्गीकरणहेतुरिष्यते, हन्त ! तर्हि गौः पूर्वसिद्ध एषितव्यः, यत्प्रतिषेधेनागावः प्रतीयेरन्। पूर्वसिद्धे च गवि लब्धे किमगोभिः

---

**अपोहभेदादिति।** केषाञ्चिद् अगोऽपोहोऽर्थः, केषाञ्चिद् अनश्वापोह इति।

**विप्रतिषिद्धधर्मेति।** विप्रतिषिद्धधर्माणां विरुद्धधर्माणामेकत्र समवायप्राप्तौ सत्याम्। **बहूनां सधर्मत्वम्।** बहूनां ये धर्मास्ते ग्राह्या इत्यर्थः।

किं तदपोहेन प्रयोजनम् । पूर्वसिद्धं गोस्वलक्षणमस्त्येवेति चेन्न, व्यवहारा-भावात् । गोसामान्ये तु पूर्वसिद्धे मुधापोहप्रयत्न इत्युक्तम् ।

अथ गोसामान्यमगोप्रतिषेधेन सिद्धयति, तदा दुस्तरमितरेतराश्रयत्वम् । अगोनिषेधेन गोसिद्धिः, गोसिद्धया चागोनिषेधसिद्धिरिति । तस्मादपोहस्यैव निरूपयितुमशक्यत्वान्न तद्भेदादपोहभेदः सिद्धयति । 5

अपि च अश्वादयः सामान्यरूपेण वापोह्येरन् विशेषात्मना वा ? न विशेषात्मना, तदनङ्गत्वाद् अशब्दवाच्यत्वाच्च । सामान्यात्मना तु तेषामप्यपोहरूपत्वादभावत्वम् । कथञ्चाभावस्यैवाभावः क्रियते, करणे वा प्रतिषेधद्वययोगाद् विधिरवतिष्ठत इति विधिरूपः शब्दार्थः स्यात् । अपोह्यात्मनश्च तुरगादेर्योऽपोहः स तस्माद्विलक्षणः, अन्यथा वा ? वैलक्षण्ये तस्य भावात्मता भवेत्, 10 अवैलक्षण्ये तु यादृश एव अपोह्यस्तादृश एव तदपोह इति गौरप्यगौः स्यात् ।

किञ्च अपोहशब्दार्थपक्षे नीलमुत्पलमित्यादौ विशेषणविशेष्यभावसामानाधिकरण्यादिव्यवहारा विलुप्येरन् । न ह्येकस्मिन्नर्थे द्वयोरपोहयोर्वृत्तिरुपपद्यते । न चैकः कश्चिदर्थोऽस्ति यत्र तयोर्वृत्तिः, स्वलक्षणस्याशब्दार्थत्वाद् अन्यस्य चासम्भवात् । 15

न च वृत्तिरपि काचिदस्ति । सञ्ज्ञेयादिशब्दानामपोहनिरूपणासम्भवान्नापोहवाचित्वम् । न ह्यसदज्ञेयं वा किंचिदवगतं यद् व्यवच्छिद्यते । ज्ञातञ्चेत् सदेव तज्ज्ञेयञ्चेत्यतः कथं सच्छब्देन सदेव ज्ञेयशब्देन च ज्ञेयमेवापोह्यते । अज्ञातन्तु नितरामनपोह्यम् । कल्पितन्तु तद्वक्तुमशक्यम्, कल्पनयैव सत्त्वाज्ज्ञेयत्वाच्च । 20

अपोहशब्दस्य च किं वाच्यमिति चिन्त्यम् । अनपोहो न भवतीत्यपोहः, कश्चायमनपोहः ? कथं वा असौ न भवति, अभवन् वा किमवशिष्यत इति सर्वमवाचकम् । प्रतिषेधवाचिनाञ्च नञादिशब्दानां का वार्त्ता ? अत्रे न भवतीति, नेति कोऽर्थः ?

---

तस्माद् विलक्षणः । तुरगादेरपोहरूपाद् विलक्षणः । न च वृत्तिरपि काचिदस्ति । 25 अभावरूपत्वात् । कल्पनयैव । कल्पितेनैव रूपेण ।

उपसर्गनिपातानाञ्च कथमपोहविषयत्वम्, आख्यातशब्दानाञ्च पचतीत्यादीनामपोहो दुरुपपादः। नाम्नामेव जातिशब्दानामपोहविषयत्वमिष्यते, येषां भवन्तो जातिवाचित्वं तद्वद्वाचित्वं वा प्रतिपद्यन्त इति चेत्। ततोऽन्येषां तर्हि का वार्त्ता? बाह्यार्थवाचित्वे जातिशब्देषु को द्वेषः? निरालम्बनत्वे
5 ज्ञानांशालम्बनत्वे वा जातिशब्दानामपि तदेवास्तु किमपोहवादप्रमादेन।

यथैव प्रतिभामात्रं वाक्यार्थ उपकल्पितः।
पदार्थोऽपि तथैवास्तु किमपोहाग्रहेण वः॥
इत्यादि दूषणौदार्यमपोहे बहु दर्शितम्।
अतः शब्दार्थतामस्य वदेयुः सौगताः कथम्॥

10 **अपोहपदार्थनिरूपणम्**

उच्यते। तदेतदविदितबौद्धसिद्धान्तानामभिधानम्।

अपोहो यदि भावात्मा बहिरभ्युपगम्यते।
ततो भवति भावत्कं वाग्जालं, न त्वसौ तथा॥

किन्तु खल्वयमान्तरो ज्ञानात्मा सौगतानामपोहः सम्मतः। तथाभ्यु-
15 पगमे केयमपोहवाचोयुक्तिः। स्वांशविषयं पदार्थज्ञानमित्येतदेव वक्तुमुचितम्। एतदपि नास्ति, नायमान्तरो न बाह्योऽपोहः, किन्तु ज्ञानार्थाभ्यामन्य एव।

---

**उपसर्गनिपातानामिति।** प्रादिचादीनामपोह्यस्यादर्शनादस्वतन्त्रप्रयोगत्वात् तेषाम्। तथा चाह भट्टः "चादीनामपि नञ्‌योगो नैवास्तीत्यनपोहनम्" इति। **आख्यातशब्दानाञ्चेति।** पचत्यादौ हि नञ्‌योगे पाकाभावप्रतीतिर्न पाठादेवेति। तथा चाह,

20 आख्यातेषु च नान्यस्य निवृत्तिः सम्प्रतीयते।
न पर्युदासरूपं हि निषेध्यं तत्र विद्यते॥
न नेति ह्युच्यमानेऽपि निषेधस्य निषेधनम्।
पचतीत्यनिषिद्धन्तु स्वरूपेणावतिष्ठते॥ इति।

**ज्ञानार्थाभ्यामन्य एवेति** धर्मोत्तरः। तथा चाहासौ
25 बुद्ध्या कल्पिकया विविक्तमपरैर्यद्रूपमुल्लिख्यते
बुद्धिर्नो न बहिर्यदेव च वदन् निस्तत्त्वमारोपितम्।
यस्तत्त्वं जगतो जगाद विजयी निःशेषदोषद्विषां
वक्तारं तमिह प्रणम्य शिरसापोहः स्म विस्तार्यते॥ इति।

ननु यद् विद्यते नान्तर्न बहिः परमार्थतः ।
न तु विद्यत एवेति कथं शब्दार्थ उच्यते ॥
पारमार्थिकशब्दार्थसमर्थनपिपासिताः ।
नेहागताः स्मो येनैवमनुयुज्येमहि त्वया ॥

यत एव तन्नान्तर्बहिरस्ति तत एव मिथ्येति काल्पनिकमिति च गीयते । 5
किं पुनस्तत् ? आरोपितं किञ्चिदाकारमात्रं विकल्पोपरञ्जकम् । ननु बाह्यार्थ-व्यतिरेकेण किमीय आकारः आन्तरान्तरस्य ज्ञानस्योपरञ्जक उच्यते । दृश्य-च्छायैवानुरञ्जिका विकल्पना, नेदृशोऽर्थः । व्यावृत्तं हि वस्तु दर्शनानां विषयः, तच्च स्प्रष्टुमक्षमा विकल्पा इत्युक्तम् । अथ तच्छायामवलम्बमाना विकल्पा व्यावृत्तस्याग्रहणाद् व्यावृत्तिविषया इत्युच्यन्ते । 10

ननु व्यावृत्तितद्वतोरभेदाद् व्यावृत्तिर्यच्च व्यावृत्तं स्वलक्षणं तदेकमेवेति व्यावृत्तिग्राहिभिर्विकल्पव्यावृत्तमपि गृहीतं स्यादिति दर्शनतुल्या भवेयुः ? नैतदेवम् । न विकल्पैर्व्यावृत्तं वस्तु गृह्यते न च पारमार्थिकी व्यावृत्तिः, अपि तु कश्चिदारोपित आकारः । वास्तवत्वे हि व्यावृत्तेः वस्तुसंस्पर्शिन एव दोषाः प्रादुःष्युः, न त्वसौ तथेत्युक्तम् । अत एव यत् केचन पर्यचूचुदन् किल व्यावृत्त- 15
ग्रहणपक्षे त्रितयग्रहणं प्राप्नोति यद्व्यावृत्तम्, येन निमित्तेन व्यावृत्तम्, यतश्च व्यावृत्तमिति; न च त्रितयमस्तीत्यतः कथं व्यावृत्तग्रहणमिति, तदप्यपास्तं

---

**ननु बाह्यार्थव्यतिरेकेणेति** । विकल्पो हि ज्ञानविशेषस्तस्य योऽयं ग्राह्या-नुरागः स कथं बाह्यं विना सम्भवति । स्वत एव तथात्वे निर्विकल्पेऽपि तथा भावाद् बाह्यार्थभावप्रसङ्गात् । **दृश्यच्छायैवानुरञ्जिकेति** । स्वलक्षणग्राहिदर्शन- 20
समनन्तरभावेन विकल्पानां लाक्षानन्तरस्फटिकशकलसमनन्तरवर्तिन इव स्फटिक-शकलान्तरस्य लाक्षाच्छायाधारित्वं दृश्यच्छायाधारिता । **तच्च स्प्रष्टुमक्षमा** । अस्पष्टत्वात् प्रतीतेः, प्रमाणान्तरवैयर्थ्यप्रसङ्गाच्चेति । **व्यावृत्तस्याग्रहणादिति** । यदि हि व्यावृत्तिमपि न विषयीकुर्युः कथं प्रकारान्तरस्याभावात् तच्छायावलम्बिनः स्युः । तच्छायानवलम्बित्वे च सादृश्याभावात् तदध्यवसायेन बाह्ये प्रवृत्तिर्न स्यात् । 25

**अपि तु कश्चिदारोपित आकार इति** । यदेव च तस्यारोपितस्याकारस्य ग्रहणं स एव तेन रूपेण बाह्याध्यवसाय इत्यतो बाह्यव्यावृत्तिविषयत्वाभिमानः ।

भवति । यदि हि व्यावृत्तं गृह्णीम इत्येवमुल्लेखो भवेद् व्यवहर्तृजनस्य तदैव-
मसौ पर्यनुयुज्येत । न त्वेवमस्तीत्यचोद्यमेतत् ।

नन्वेवमारोपिताकारविषया विकल्पा युक्ता भवन्ति, व्यावृत्तिविषयत्व-
वाचोयुक्तिरनन्वितेत्युक्तम् । समाहितमेतत् । दर्शनपृष्ठभाविभिर्गौरित्यादि-
5 विकल्पैरतत्कार्यपरावृत्त आकार उल्लिख्यते । न हि गोविकल्पैरतत्कार्याणाम-
श्वादीनामुल्लेखः स्वलक्षणञ्च न स्पृश्यते, सामान्यञ्च वास्तवं नास्ति ।
तस्मादतत्कार्यपरावृत्तिविषयत्वमेव विकल्पानामवतिष्ठत इत्येवं युक्त्या तेषाम-
पोहविषयत्वमुच्यते न प्रतिपत्तितः ।

नन्वतत्कार्यपरावृत्तमिव सजातीयव्यावृत्तमपि दृश्यस्वरूपम्, तत्र विजातीय-
10 व्यावृत्तिः, स्वलक्षणञ्चान्यद्, न चैकतराकारोल्लेखननियमहेतुमुत्पश्यामः ।
धीमन्! मैवं मंस्थाः । निश्चयात्मनो निर्विकल्पाः । सजातीयविजातीयव्यावृत्ता-
कारोल्लेखे च सर्वात्मना तन्निश्चयाद् विकल्पान्तराणां शब्दान्तराणां प्रवृत्तिः
स्यात् । तथा च गौरिति शब्दादुत्पद्यमानो विजातीयव्यावृत्ताकारोल्लेखीव
विकल्पः संवेद्यते, न सजातीयव्यावृत्तोल्लेखी । तुल्यविषयाश्च विकल्पैः शब्दा
15 इत्यन्यापोहविषया उच्यन्ते । सोऽयमारोपिताकारो न बहिरारोपितत्वादेव ;
नान्तः, अबोधरूपत्वात् । अतश्चासौ न किञ्चिदेव, न किञ्चिदपि भवन्नपोह
इति फलत उपचर्यते । अतश्च बाह्यमभावात्मकमपोहमाश्रित्य स्वरूपे दूषणो-
पन्यासे कण्ठशोषमनुभवन्नस्थाने क्लिष्टो देवानां प्रियः ।

अपि च विकल्पभूमिरर्थो विकल्पान्तरसन्निधापितभावाभावाक्षेपी
20 नियतरूपो बाह्यसदृशश्च प्रतीयते । न चेदं रूपत्रयमपि बाह्ये वस्तुनि युज्यते ।
बाह्यस्य हि वस्तुनः स्वरूपेणावगतस्य न विकल्पान्तरोपनीतभावसम्बन्ध उप-
पद्यते, वैयर्थ्यात् । नाप्यभावसम्बन्धी विप्रतिषेधात् । नियतरूपता च विकल्प-

---

**न प्रतिपत्तितः** । प्रतिपत्तिर्हि विधिमुखेन ।

**फलत उपचर्यते** । प्रागुक्तयुक्त्या दर्शनपृष्ठभाविनां विकल्पानां विजातीयपरा-
25 वृत्तावेवावस्थानात् ।

**विकल्पान्तरसन्निधापितेति** । अस्तीति नास्तीति च विकल्पाभ्यां सन्निधापितौ
यौ भावाभावौ ।

विषयस्य गौरेव नाश्व इत्येवमवगम्यमाना वस्त्वन्तरव्यवच्छेदमन्तरेण नावकल्पत इति बलाद् व्यवच्छेदविषयत्वम्, अन्यथा नियतपरिच्छेदाभावात् । सन्दिग्धञ्च वस्तु न गृह्यते । एवं बाह्यवस्तुविषयत्वे च निरस्ते विकल्पानामेकस्यार्थस्वभावस्येति न्यायेन पौनरुक्त्याद् अबाह्यविषयत्वं न्याय्यम् । अबाह्यान्तरारोपितं रूपं तच्च बाह्यवदवभासते । न च व्यावृत्तिच्छायामपहाय 5 बाह्यारोपितयोः सादृश्यमन्यदस्तीति व्यावृत्तिविषया एव विकल्पाः फलतो भवन्ति ।

यद्यपि विधिरूपेण गौरश्व इति तेषां प्रवृत्तिस्तथापि नीतिविदोऽन्यापोहविषयानेव तान् व्यवस्थापयन्ति । यथोक्तं "व्याख्यातारः खल्वेवं विवेचयन्ति न व्यवहर्तारः" इति । सोऽयं नान्तरो न बाह्योऽन्य एव कश्चिदारोपित 10 आकारो व्यावृत्तिच्छायायोगादपोहशब्दार्थ उच्यत इतीयमसत्ख्यातिगर्भा सरणिः ।

### ज्ञानाकारवादमवलम्ब्यापोहपदार्थनिरूपणम्

अथ वा विकल्पप्रतिबिम्बकं ज्ञानाकारमात्रकमेव तदबाह्यमपि विचित्रवासनाभेदोपाहितरूपभेदं बाह्यवदवभासमानं लोकयात्रां बिभर्त्ति । व्यावृत्ति- 15 च्छायायोगाच्च तदपोह इति व्यवह्रियते । सेयमात्मख्यातिगर्भा सरणिः ।

---

**अन्यथा नियतपरिच्छेदाभावादिति ।** वस्त्वन्तरव्यवच्छेदनमन्तरेणेति शेषः । गौरेवायमिति या नियतरूपतया गृहीतिः सा अन्यव्यवच्छेदमन्तरेण नेति यद् उक्तं तन्न । प्रथमं तावद् विकल्पैर्नियतस्य रूपस्य ग्रहणं ततोऽन्यव्यावृत्तिनिश्चय इति चेन्नेत्याह **सन्दिग्धञ्च वस्तु न गृह्यत इति ।** यावद् व्यवच्छेदो न गृहीतस्तावदसौ 20 नियततया न गृहीतः, संदिग्धतयैव गृहीतः स्यात् । न च विकल्पैस्तथा गृह्यते, नियततयैव ततः प्रतीतिसमुत्पादात् । अतोऽस्मात् कारणत्रयादन्यव्यवच्छेदनमेव विकल्पानां विषय इति निश्चीयते ।

**व्याख्यातारः खल्विति ।** ते हि विधिमुखेन प्रवृत्तिं युक्त्यानुपपद्यमानां पश्यन्तोऽपोहविषयतया व्यवस्थापयन्ति । व्यवहर्तारः पुनर्दृश्यविकल्प्ययोर्भेदाग्रहणेन 25 प्रवर्तन्ते । **असत्ख्यातिगर्भा ।** एवं ह्युच्यमाने असत एवाकारस्य विकल्पबुद्धौ प्रतिभास इत्युक्तं भवति ।

ननूभयथापि वस्तुविषयत्वाभावे विकल्पानां कथं वस्तुनि व्यवहाराः प्रवर्त्तन्ते, दृष्टेऽपि क्वचिद्वस्तुनि तृणादौ प्रवृत्त्यभावाद् । अर्थित्वन्तु प्रवृत्तेः कारणं कथमिति वक्तव्यम् । उच्यते । प्रवृत्तिस्तावद् दृश्यविकल्पयोरेकीकरण-निबन्धना, दृश्यदर्शनानन्तरमुत्पन्ने विकल्पे विकल्प्य तेन प्रतिपद्यते प्रमाता ।
5 दर्शनानन्तर्यविप्रलब्धस्तु दृश्यमेव गृहीतं मन्यते तदभिमानेन च प्रवर्त्तते । इदं तदेकीकरणमाहुः । दृश्यविकल्पयोर्भेदो यन्न गृह्यते न पुनर्भिन्नयोरभेदाध्यव-साय एकीकरणमिष्यते । दृश्याद् विभिन्नस्य विकल्पस्य शुक्तेरिव रजतस्य निर्देष्टुमशक्यत्वाद्, भेदाध्यवसाये चोभयाभावान्न भेदाध्यवसाये दर्शनमुपायो विकल्पाविषयत्वान्न विकल्पो दृश्याविषयत्वात् । तस्माद् भेदानध्यवसायादेव
10 प्रवृत्तिः । प्राप्तिरपि दृश्यस्यैवार्थक्रियाकारिणो वस्तुनः पारम्पर्येण, तन्मूलत्वात् कार्यप्रबन्धस्य, दृश्याद्दर्शनं ततो विकल्पः, ततः प्रवृत्तिरिति ।

अर्थं हि मूलवर्तिनमुपलभ्य प्रवर्त्तमानस्तमाप्नोति । अपवरकनिहितमणि-प्रसृतायां कुञ्चिकाविवरनिर्गतायामिव प्रभायां मणिबुद्ध्या प्रवर्त्तमानः । यत्र तु मूलेऽप्यर्थो नास्ति तत्र व्यामोहात् प्रवर्त्तमानो विप्रलभ्यते, दीपप्रभाया-
15 मिव तथैव मणिबुद्ध्या प्रवर्त्तमानः । एवञ्च बाह्यवस्तुसंस्पर्शशून्येष्वपि विकल्पेषु समुल्लसितेषु बाह्योऽर्थो मया प्रतिपन्नः, तत्र चाहं प्रवृत्तः, स च मया प्राप्तः इत्यभिमानो भवति लौकिकानाम् । न त्वयमर्थाध्यवसायमूलः । तदुक्तं "यथाध्यवसायमतत्त्वाद् यथातत्त्वञ्चानध्यवसायात्" इति, स्वप्रति-भासेऽनर्थेऽर्थाध्यवसायात् प्रवृत्तिरित्यत्रापि ग्रन्थेऽर्थाध्यवसायो भेदानध्यवसाय
20 एव व्याख्येयः । एवं दृश्यविकल्पावर्थावेकीकृत्य प्रवर्त्तते, प्राप्नोति चार्थमिति ।

---

**ननूभयथापीति** । यत् पूर्वमुक्तमारोपिताकारविषयत्वम्, यच्च 'अपि च' इत्यादिनोक्तं तेनापि । अथ वा बुद्ध्याकारापोहपक्षे आरोपिताकारापोहपक्षे चेति ।

**यथाध्यवसायमिति** । अबहीरूपस्य बहीरूपतयाध्यवसायाद् अबहीरूपस्याबहीरूप-
25 तयानध्यवसायाच्च ।

**स्वप्रतिभास इति** । प्रतिभासत इति प्रतिभासो ग्राह्याकारस्तस्मिन् स्वस्मिन्ना-त्मीये विकल्पसम्बन्धिनि ।

तदेवमेष लोकस्य व्यवहारोऽवकल्पते ।
विवेकेनापि वोढव्या लोकयात्राथ लोकवत् ।।
तस्माद् विकल्पप्रतिबिम्बनस्य शब्दार्थतामाहुरपोहनाम्नः ।
प्रतीतिमार्गस्त्वविविच्यमानो जनस्य जातिभ्रममातनोति ।।
यावांश्च कश्चिन्नियमप्रकारः प्रवर्त्तते जातिषु वृत्त्यवृत्त्योः । 5
तावानपोहेष्वपि तुल्य एव भवत्यवस्तुत्वकृतस्तु भेदः ।।
तुल्येऽपि भेदे शमने ज्वरादेः काश्चिद् यथा वौषधयः समर्थाः ।
सामान्यशून्या अपि तद्वदेव स्युर्व्यक्तयः कार्यविशेषयुक्ताः ।।
विशेषणादिव्यवहारक्लृप्तिः तुच्छेऽप्यपोहे न न युज्यते नः ।
अतश्च मा कारि भवद्भिरेषा जात्याकृतिव्यक्तिपदार्थचिन्ता ।। 10

**अपोहस्य शब्दार्थत्वखण्डनारम्भः**

अत्राभिधीयते । किं जात्यादेर्बाह्यस्य शब्दार्थस्य असत्त्वादपोहपक्षपातः उत प्रतीतिबलादेवेति । प्रतीतिस्तावदपोहविषया भवद्भिरङ्गीकृतेति किमत्र

---

**विकल्पप्रतिबिम्बनस्येति** । विकल्पप्रतिबिम्बनं विकल्पाविनाभूतो ग्राह्याकारः, विकल्पप्रदर्शितो वा धर्मोत्तरपक्षे । **यावांश्च कश्चिदिति** । यथा निमित्तान्तरं विनैव 15 कासुचिद् व्यक्तिषु सामान्यं समवैति कासुचिन्नेति तव नियमः निमित्तान्तराभ्युपगमे अनवस्थापाताद्, एवं ममाप्यपोहे भविष्यति तत्कारिष्वेव गौरिति प्रत्यय इति । अथैकं सामान्यं विना कथमेककार्यकारित्वमेवेत्याह **तुल्येऽपि भेद इति** । तदुक्तम्,

ज्वरादिशमने काश्चित् सह प्रत्येकमेव वा ।
दृष्टा तथैवौषधयो भिन्नत्वेऽपि न चापराः ।। इति । 20

**विशेषणादिव्यवहारक्लृप्तिरिति** । बुद्धिरेव नीलावच्छिन्नमुत्पलमबाह्यं बाह्यमिव संदर्शयन्त्युत्पद्यते न पुनर्बाह्यानां पदार्थानां निरंशत्वादेवंरूपता समस्ति । आदिग्रहणात् सामानाधिकरण्यपरामर्शः, तत्राप्यनेकधर्मवन्तं धर्मिणं बाह्यमिव प्रदर्शयन्ती बुद्धिरेव तथाभूतोदेति । यदाह,

संसृज्यन्ते न भिद्यन्ते स्वतोऽर्थाः परमार्थतः । 25
भिन्नं रूपमभिन्नञ्च तेषु बुद्धेरुपप्लवः ।। इति ।

कलहेन । नापि जात्यादेरसत्त्वम् इन्द्रियार्थसन्निकर्षोत्पन्नबाधसंदेहरहित-प्रत्ययगम्यत्वात् स्वलक्षणवत् ।

आद्यमेव हि विज्ञानमर्थसंस्पर्शि चाक्षुषम् ।
न तदुत्तरभावीति किमिदं राजशासनम् ॥
5 तदेवास्तु प्रमाणं वा तेनापि त्ववगम्यते ।
व्यावृत्तं वस्तुनो रूपं नानुगामीति का प्रमा ॥

तथा हि निर्विकल्पकालस्यातिसूक्ष्मत्वात् किं प्रतिभासते, किं न प्रतिभासत इति कथमेष कलिरावयोरुपशाम्यतु । भवान् ब्रूते व्यावृत्तमेवावभातीति, अहं ब्रुवेऽनुवृत्तमपि प्रतिभातीति। एवं कलहायमानयोरावयोः कः परिच्छेदः । 10 न खलु शपथस्य शपमानस्य वैष विषयः ।

तस्मान्निर्विकल्पकानन्तरोत्पन्नस्थूलकालकार्यपर्यालोचनया तद्व्यवस्था कर्त्तव्या तत्र च

भवेद्यदि विशेषैकविषयं निर्विकल्पकम् ।
सामान्याध्यवसायोऽयमकस्मात् तत् कथं भवेत् ॥

15 शब्द एष विकल्प इति चेत्, मैवम् ।

पश्यत्यनुगतं रूपमविज्ञातेऽपि वाचके ।
दाक्षिणात्य इवाकस्मात् पश्यन्नष्टपरम्पराम् ॥

अनवगतशब्दार्थसम्बन्धोऽप्यभिनवानेकपदार्थसन्निधाने तेषामनुगतञ्च व्यावृत्तञ्च पश्यत्येव रूपम् ।

20 अपि च प्रथमाक्षसन्निपाते एवाङ्गुलिचतुष्टयमवलोक्यमानमन्योन्यमनुगामिना च विभक्तेन च रूपेणावगम्यते, तत् कथं केवलविशेषावलम्बी चाक्षुषः प्रत्ययः ?

अपि च पुराणशाबलेयपिण्डमवलोकयतः कालान्तरे बाहुलेयं पिण्डं पश्यतः पूर्वदृष्टशाबलेयपिण्डविषयं स्मरणमुत्पद्यमानं संवेद्यते। तस्मात् सामा-25 न्यानवगमो नोपपद्यते । अन्यस्मिन्नसाधारणे स्वलक्षणे दृष्टेऽन्यस्मरणस्य किं

स्थूलकालकार्येति । स्थूलकालत्वं स्मरणादिसापेक्षत्वात् ।

वर्त्तते ? अस्ति च तत्, तेन मन्यामहे दृष्टमुभयानुगतरूपमिति । किञ्च व्यक्त्यन्तरदर्शनेऽपि स एवायं गौरिति प्रत्यभिज्ञायते । तस्याश्च प्रामाण्यं दर्शितम्, दर्शयिष्यते च विस्तरतः क्षणभङ्गभङ्गेन । तस्मादनुगतरूपविषयैव सा प्रत्यभिज्ञा, व्यक्तिभेदस्य विस्पष्टसिद्धत्वात् । यत्र च लघुतरपरिमाणतिलमुद्गादिप्रचयसन्निधाने विच्छिन्नसिक्थलक्षणग्रहणं नास्ति तत्रानुवृत्तमेव रूपम् इन्द्रियेण गृह्यते । अतो निर्विकल्पकवेलायामेव व्यावृत्तवदनुगतरूपावभासान्न सामान्यापह्नवो युक्तः । प्रथमाक्षसन्निपातेऽपि तुल्यत्वमवगम्यते नानात्वञ्चेति सामान्यभेदौ वास्तवौ द्वावपि ।

सामान्यमिदमित्येवं स च तत्रानुपग्रहः ।
व्यावृत्तमिदमित्येवं किं वा बुद्धिः स्वलक्षणे ॥
समानवृत्तिसापेक्षं न च सामान्यवेदनम् ।
तत्र सन्निहितत्वात् तु व्यक्तिवाचानुपग्रहः ॥
समानवृत्त्यपेक्षत्वात् सामान्यस्यानुपग्रहे ।
विशेषोऽपि हि मा ग्राहि व्यावृत्तिं स हि चेक्षते ॥
अनुवृत्तिर्हि येष्वस्य का तेषां ग्रहणे गतिः ।
व्यावृत्तिरपि यान्यस्य या तेषां ग्रहणे गतिः ॥
अथानुवृत्तिव्यावृत्तिनिरपेक्षं न केवलम् ।
वस्त्वेव गृह्यते कार्यं कीदृक् तदिह कथ्यताम् ॥
निर्विकल्पकवेलायां निर्देष्टुं तन्न शक्यते ।
तदुत्थास्तूभयत्रापि साक्ष्यं ददति निश्चयाः ॥
वस्तुनोऽङ्गीकृता प्राज्ञैरत एवोभयात्मता ।
यौ ब्रूतस्त्वेकरूपत्वं तावुभावपि बालिशौ ॥

---

**विच्छिन्नसिक्थलक्षणेति** । विच्छिन्नानां भिन्नानां सिक्थानां कणानां यल्लक्षणमितरस्माद् व्यावृत्तो धर्मः ।

**समानवृत्तिसापेक्षमिति** । कथं तर्हि तद्वेदनमित्याह तत्र सन्निहितत्वादिति ।

**उभयत्रापि साक्ष्यमिति** । अनुवृत्तौ व्यावृत्तौ च, गौरयमित्युभयरूपाणां तेषां समुत्पादात् 'अयम्' इत्यत्र विशेषस्यापि प्रतिभासात् । **यौ ब्रूतस्त्वेकरूपत्वमिति** । यौ

**सामान्यस्वलक्षणयोर्विरोधादेकत्रासम्भव इति शङ्कानिरासः**

यदप्यभिहितम् इतरेतरविरुद्धरूपसमावेश एकत्र वस्तुनि नोपपद्यत इति तदपि न सम्यक् ।

परस्परविरोधोऽपि नास्तीह तदवेदनात् ।
5 एकबाधेन नान्यत्र धीः शुक्तिरजतादिवत् ।।

यत्र हि विरोधो भवति तत्रैकतररूपोपमर्देन रूपान्तरमुपलभ्यते । प्रकृते नैवमिति को विरोधार्थः । छायातपावपि यद्येकत्र दृश्येते किं केन विरुद्धमभिधीयते । अदर्शनात्तु तद् विरुद्धमुक्तं न चैवमिहादर्शनमित्यविरोधः ।

अत एव हि मिथ्यात्वमेति नान्यतरा मतिः ।
10 न ह्यन्योन्योपमर्देन बुद्धिद्वितयसम्भवः ।।

तथा चाह,

यथा कल्माषवर्णस्य यथेष्टं वर्णनिग्रहः ।
चित्रत्वाद्वस्तुनोऽप्येवं भेदाभेदावधारणम् ।।
इत्येवमविरोधेन भेदाभेदावधारणात् ।
15 उभयात्मकतैवास्तु वस्तूनां भट्टपक्षवत् ।।

एतत्तु वृत्तिविकल्पादिभ्यो बिभ्यतेवाभ्युपगतं तत्रभवतेति तिष्ठतु तावत् किमत्र विमर्देन ।

**व्यक्तिव्यतिरिक्ताया जातेः समर्थनम्**

व्यतिरिक्तैव जातिर्व्यक्तिषु वर्त्तत इति ब्रूमः ।

20 यच्च वृत्तिविकल्पादिदूषणं तत्र वर्णितम् ।
तत्प्रत्यक्षमहिम्नैव सर्वं प्रतिहतं भवेत् ।।

यत् तावद् अवादि, भेदेन कुवलयामलकादिवदनवभासनादिति, तत्र प्रतीतिभेदो दर्शित एव ।

---

वेदान्तवादिशाक्यौ । वेदान्तवादिनो हि सामान्यात्मकमेव वस्त्विच्छन्ति, शाक्यास्तु
25 विशेषात्मकमिति ।

**यथा कल्माषवर्णस्येति** । शबलवर्णस्य । **यथेष्टं वर्णनिग्रहः** निष्कृष्टस्य वर्णस्य ग्रहणम् ।

यत्तु देशभेदेनाग्रहणात् तदग्रहे तद्बुद्ध्यभावादिति, तत्र तदाश्रितत्वं कारणं जातेर्न तु असत्त्वम् । व्यक्तिवृत्तित्वाज्जातेः पृथग्देशतयाऽनुपलम्भः । तदग्रहो वा, न पुनस्तदतिरिक्ताया अभावादेवेति ।

**जातिव्यक्त्योः सम्बन्धस्थापनम्**

यदप्युक्तं वृत्त्यनुपपत्तेरिति तत्राप्युच्यते । प्रतिपिण्डं कात्स्न्येंनैव जाति- 5 र्वर्त्तत इति । पिण्डान्तरे तदुपलम्भो न स्यादिति चेत् ? किं कुर्मः, कमुपलभामहे, पिण्डान्तरेऽपि तदुपलम्भोऽस्त्येव, कथञ्च भवन्तमेनं निह्नुमहे । एकदेशास्तु जातेर्न सन्त्येव यैरस्या वर्त्तनं ब्रूमः । क्वेदमन्यत्र चेद्, अहो निपुणता तव दृष्टान्तं याचसे यस्त्वं प्रत्यनुमानवत् । किंनामधेयैषा वृत्तिरिति चेत्, न नामधेयं जानीमः, पिण्डसमवेता जातिरित्येतावदेव प्रचक्ष्महे । 10

नन्वयुतसिद्धयोः सम्बन्धः समवायः, स च विप्रतिषेधादेव निरस्तः, न शक्यते निरसितुम् ।

> प्रतीतिभेदाद् भेदोऽस्ति देशभेदस्तु नेष्यते ।
> तेनात्र कल्प्यते वृत्तिः समवायः स उच्यते ।।

अवयवावयविनोर्गुणगुणिनोश्चेयमेव वृत्तिः, तयोरर्थान्तरत्वमुपरिष्टाद् 15 दर्शयिष्यते । दर्शितञ्चामुनैव मार्गेण देशभेदश्च तयोर्न्नास्तीति विस्पष्टमयुत- सिद्धत्वम् ।

यदप्युच्यते 'नानिष्पन्नस्य सम्बन्धो निष्पत्तौ युतसिद्धता' इति तदपि परिहृतमाचार्यैः "जातः सम्बद्धश्चेत्येकः कालः" इति वदद्भिः । सर्वञ्चैत- दबाधितप्रतीतिबलात् कल्प्यते न स्वशास्त्रपरिभाषया । विभूनामपि सम्बन्धः 20 परस्परमसम्भवादेव नेष्यते न परिभाषणात् । न संयोगः, तेषामप्राप्तेरभावात् । अप्राप्तिपूर्विका हि प्राप्तिः संयोगः । न च समवायस्तदाश्रितस्य तस्यानुप- लम्भादित्यलं प्रसङ्गेन ।

> ये चेह वृत्ती स्रक्सूत्रभूतकण्ठगुणादिषु ।
> जात्यादीनामनंशत्वात् ताभ्यां वृत्तिर्विलक्षणा ।। 25

---

**परिहृतमाचार्यैः ।** "निष्ठासम्बन्धयोरेककालत्वात्" इत्यादि वदद्भिः ।

**ये चेह वृत्ती इति ।** स्रजि सूत्रं हि व्यासज्य प्रतिपुष्पमेकदेशेन वर्तमानं

तस्माद् वृत्त्यनुपपत्तेरित्यदूषणम् ।

**जातेः सर्वगतत्वं व्यक्तेश्च तद्व्यञ्जकत्वोपपादनम्**

यदपि सर्वगतत्वं पिण्डगतत्वञ्च विकल्प्य दूषितम्, तदपि यत्किञ्चित्। यथा प्रतीतिरादिशति भगवती तथा वयमप्युपगच्छामः ।

5 सर्वसर्वगता जातिरिति तावदुपेयते ।
सर्वत्राग्रहणं तस्या व्यञ्जकव्यक्त्यसन्निधेः ॥
व्यक्तिर्व्यञ्जकतामेति जातेर्दृष्टैव नान्यथा ।
दृष्टिर्यत्र यदा व्यक्तेस्तदा तत्रैव तन्मतिः ॥
सर्वत्र विद्यते जातिर्न तु सर्वत्र दृश्यते ।
10 तदभिव्यञ्जिका यत्र व्यक्तिस्तत्रैव दृश्यते ॥
व्यक्तेरन्यत्र सत्त्वे स्यात् किं प्रमाणं तदुच्यते ।
इहाप्यानीयमानायां गवि गोत्वोपलम्भनम् ॥
गोपिण्डेन सहैतस्या न चागमनसम्भवः ।
देहेनेवात्मनस्तस्मादिहाप्यस्तित्वमिष्यताम् ॥
15 अभिव्यक्तिस्तु तत्काला यत्कालं व्यक्तिदर्शनम् ।
तस्मात् सकृदभिव्यक्ता नान्यदापि प्रतीयते ॥
अभिव्यक्तिश्च तद्देशा यद्देशा व्यक्तिरीक्ष्यते ।
तस्मात् तस्मादभिव्यक्ता न देशेऽन्यत्र दृश्यते ॥
व्यक्तिसर्वगतत्वेऽपि स्वयूथ्यैः कैश्चिदाश्रिते ।
20 भविष्यत्यद्य जातायां गवि गोधीस्तथा ग्रहात् ॥
जायमानैव हि व्यक्तिर्जायते प्रतियोगिनी ।
एक एव हि कालोऽस्या जातेः सम्बन्धजन्मनोः ॥
नेह जातेः पुरास्तित्वं न च संक्रान्तिरन्यतः ।
किन्तु स्वहेतोः सा व्यक्तिस्तादृश्येवोपजायते ॥

---

25 दृष्टम्, भूतानाञ्चालेख्यगतानां कण्ठे यो गुणः स्रग्दामादिः स प्रत्येकं सर्वात्मना वर्तमान उपलब्धः ।

कथमेतदितीदञ्च यो वा पर्यनुयुज्यते ।
इतरस्य परं हेतुस्तेन पर्यनुयुज्यते ॥
वृषः पिशङ्गो गौः कृष्णा सा च नीलतृणाशिनी ।
ताभ्यामुत्पादितो वत्सः कथं भवति पाण्डुरः ॥
यथा रूपाद्यसम्बद्धा न व्यक्तिरुपलभ्यते ।
तथैव जात्ययुक्तेति का ते व्यसनसन्ततिः ॥ 5

**अनुगतप्रतीत्यन्यथानुपपत्त्या जातिसिद्धिः**

अगोव्यावृत्ततायां वा नैष प्रश्नो निवर्त्तते ।
कस्मादगोनिवृत्तं तदद्य जातं स्वलक्षणम् ॥
तस्माद् वस्तुस्वभावेऽस्य विदित्वाऽननुयोज्यताम् ।
चोद्यचुञ्चुत्वमुत्सृज्य प्रतिपत्तिर्निरूप्यताम् ॥ 10

प्रतिपत्तिश्च विशेषेष्विव सामान्येषु च निरपवादा दर्शितैव, तस्माद् विशेषवदप्रत्याख्येयं सामान्यम् । विशेषवत् प्रत्यक्षत्वात् सामान्यस्य कः कल्पनार्थः ? यदि हि कार्यानुमेयं सामान्यं कल्पयेम तत एवमनुयुज्येमहि कार्यस्याप्यन्यथा सिद्धेः किं तत्कल्पनयेति । प्रत्यक्षे तु सामान्ये कोऽयमनुयोगः, 15 का चेयमनुवृत्तिज्ञानोत्पादिका शक्तिः, विशेषेभ्योऽव्यतिरिक्ता व्यतिरिक्ता वा, नित्याऽनित्या वा, तदाश्रिता स्वतन्त्रा वा, प्रत्यक्षा परोक्षा वेति विकल्प्यमाना

---

**का ते व्यसनसन्ततिः ।** यामभ्यधाद् भवान्,
न याति न च तत्रासीदस्ति पश्चान्न चांशवत् ।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ॥ इति । 20

**विशेषेभ्यो व्यतिरिक्ताऽव्यतिरिक्ता वेति ।** व्यतिरेके जातिरेवोक्ता, अव्यतिरेके तु जातिप्रत्ययस्य निर्विषयत्वम् । **नित्याऽनित्या वेति ।** एकाऽनेका वेत्यर्थः । नित्यत्वे हि सर्वत्रैकत्वमनित्यत्वे तु प्रतिव्यक्त्यन्यत्वादनेकत्वम् । एका चेज्जातिरेव । अथानेका, एकाकारप्रत्ययस्य निर्विषयत्वम् । **तदाश्रिता स्वतन्त्रा वा ।** तदाश्रितत्वपक्षे जातिरेव नामान्तरेणोक्ता । स्वातन्त्र्यपक्षे विषयनियमेन प्रत्ययानुत्पत्तिप्रसङ्गः, गव्यनाश्रिता चेत् 25 सा शक्तिः कथं तत्रैव प्रत्ययविशेषं जनयेत् ?

वाचोयुक्त्यन्तरेण जातिरेव कथिता भवति, न वा किञ्चिदिति यत्कि- ञ्चिदेतत् ।

ननु यथा गोत्वादिजातिर्नियतास्वेव व्यक्तिषु वर्त्तते नासमञ्जस्येन ( न सामस्त्येन ), तथा काभिश्चिदेव व्यक्तिभिः काचिद् गवादिबुद्धिर्जन्यत
5 इति, नैतदेवम्, विषयातिशयव्यतिरेकेण प्रत्ययातिशयानुपपत्तेः, उपायातिशये तु प्रत्ययातिशयोपकारणयिष्यमाणे विषयातिशयं प्रति को द्वेषः ? सिद्धे च विषयातिशये दुरपह्नवं सामान्यम् ।

ननु वृत्तिर्विनापि सामान्यान्तरेण सामान्येषु दृश्यते एवेति कोऽत्र विस्रम्भः ? न चाशेषेण पञ्चाशद्भवितुमर्हति । यदि हि सेनावनादिप्रत्ययाः
10 करितुरगधवखदिरादिव्यतिरिक्तमर्थमनपेक्ष्य जायमाना मिथ्या भवन्ति, किमेतावता घटादिप्रत्ययैरपि मिथ्या भवितव्यम् ? बाधकसद्भावनिबन्धनं हि वैतथ्यं प्रत्ययानाम् । तत्र सत्तादौ सामान्यान्तरविरहान्मिथ्याप्रत्यया उपाधिना केनचित् प्रवर्त्तन्ते न त्वेवं गवादाविति यत्किञ्चिदेतत् । यदुक्तम्,

तस्मादेकस्य भिन्नेषु या वृत्तिस्तन्निबन्धनः ।
15 सामान्यशब्दः सत्तादावेकधीकरणेन वेति ।।

नन्विहाप्येकार्थक्रियाकारित्वोपाधिनिबन्धन एकाकारप्रत्ययः सेत्स्यतीत्युक्तम्, सत्यमुक्तमयुक्तन्तु एकार्थक्रियाकारित्वस्यैवासिद्धेः ।

यत्तूक्तम् 'एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी' इति तदसाम्प्रतम्, प्रत्यवमर्शस्याप्येकत्वानुपपत्तेः । न हि बहुभिर्दर्शनैरेको विकल्पः सम्भूय
20 साध्यते । अपि तु नानादर्शनानन्तरं तत्सामर्थ्यलब्धजन्मानो विकल्पा अपि तु भेदेनैवोल्लसन्ति । न च तेषां किमपि कार्यान्तरमस्ति येन ते एकतामधिगच्छेयुः । केन च विकल्पानामेकत्वं गृह्यते ? न दर्शनेन, तस्य दृश्यविषयत्वात् । न विकल्पान्तरेण, सर्वविकल्पितानामारोपितार्थपर्यवसितत्वेन, स्वाकारविषयत्वेन वा, परस्परभेदाभेदपरिच्छेदसामर्थ्यासम्भवात् ।

25 अथ ब्रूयाद् विकल्पोल्लिख्यमानाकारभेदानवगमाद् विकल्पानामैक्यम्, यादृशमेव एकशाबलेयादिस्वलक्षणदर्शनान्तरभुवापि विकल्पेनोल्लिखित

---

एकधीकरणेन वेति । एकाकारबुद्धिजनकत्वं हि सर्वेषां समानम् ।

आकारो गौरिति, तादृशमेव गोपिण्डान्तरदर्शनान्तरजन्मनापीति विषयाभेदात् तदैक्यमुच्यते। तदुल्लिख्यमानेऽपि विषयभेदो हि न प्रतिभासते इत्यत एष विकल्पो भिन्नान्यपि दर्शनानि मिश्रीकरोति, दर्शनोपारूढस्य भेदस्याग्रहणादिति।

तदेतदपि न हृदयङ्गममभिधीयते। विकल्पास्तावद् विज्ञानक्षणस्वभावत्वा- 5 दन्योन्यं भिन्ना एव भवन्ति। यस्तु विकल्पोल्लिखित आकारोऽनुपलभ्यमानभेदः, तेभ्यो व्यतिरिक्तोऽव्यतिरिक्तो वा? व्यतिरिक्तश्चेत् स्यात् सामान्यमेवेदं नामान्तरेणोक्तं भवति। अवास्तवत्वकृतो विशेष इति चेन्न। अवास्तवत्वे युक्त्यभावात्। अव्यतिरिक्तश्चेत् स आकारस्तर्हि विकल्पस्वरूपवद् भिद्यत एवेति कथं तदैक्यम्, कथं वा तदैक्ये भिन्नानामपि दर्शनानां मिश्रीकरण- 10 मवकल्पते?

अपि च रे मूढ! सामान्यानभ्युपगमे कुतस्त्य एकाकारविकल्पोत्पाद इति पर्यनुयुक्तेन त्वया कार्यैक्याद् विकल्पैक्यमेवेत्युक्तं भवति, कथं चैवमनुन्मत्तो ब्रूयात्? तस्माद् 'एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी' इति व्यामूढभाषितम्। 15

**शब्दविकल्पयोरन्यापोहविषयत्वखण्डनम्**

यदपि विकल्पानां शब्दानाञ्चान्यापोहविषयत्वसिद्धये प्रलपितम् 'एकस्यार्थस्वभावस्य' इत्यादि, तदपि यत्किञ्चित्।

---

**तदुल्लिख्यमाने हि विषयभेद** इति। ततो भेदाप्रतिभासादेव विषयाभेदः, तस्माच्च विकल्पैक्यमित्यतः 'केन विषयाणामैक्यं गृह्यते' इति न वाच्यम्। **मिश्री-** 20 **करोति।** एकतया व्यवस्थापयति। कथम्? यथैव विषयैक्याद् विकल्पानामैक्यं तथा दर्शनानामपि। दृश्याध्यवसायेन विकल्पानां प्रवृत्तेरध्यवसायापेक्षया तद्विषयस्याप्यैक्यम्। तदेवाह **दर्शनोपारूढस्य भेदस्याग्रहणादिति।** दर्शनविषयस्य सर्वस्यैव विकल्पैरेकतयाध्यवसीयमानत्वाद् दृश्यभेदनिबन्धनस्य दर्शनभेदस्याग्रहणादभेद एवावतिष्ठत इत्यर्थः। 25

**अवास्तवत्वे युक्त्यभावाद्।** भवद् युक्तीनां चायुक्तत्वादिति भावः। **कार्यैक्यादित्युत्तरमिति।** कार्यैक्यादेककार्यकारित्वाद्। विकल्पैक्यमेव कार्यैक्यमिति। योऽयं विषयाभेदेन विकल्पोत्पादस्तदेव कार्यैक्यम्।

सर्वात्मना हि दृष्टोऽर्थः पुनर्न हि न दृश्यते ।
प्रदर्शितं हि प्रामाण्यं गृहीतग्राहिणामपि ।।
क्षणभङ्गे निरस्ते च देशकालादिभेदतः ।
गृहीतस्यापि भावस्य ग्रहणं न न युज्यते ।।
5 अपि चास्मन्मते भिन्नैर्धर्मैर्युक्तस्य धर्मिणः ।
धर्मोऽस्य केनचित् कश्चित् प्रत्ययेन ग्रहीष्यते ।।
विचित्रसहकार्यादिशक्तिभेदश्च धर्मिणः ।
नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मता कुतः ।।

यदि च नाम निर्विकल्पकेन सर्वात्मना परिच्छिन्नं वस्तु पुनः परि-
10 च्छिन्दन्ति विकल्पान्तराणि वैफल्यमश्नुवीरन् । किमेतावता तेषामप्रतीयमाना-
र्थग्राहिता कल्पयितुं शक्यते ? न हि विरतपिपासस्य हिमकरपटलमफलमिति,
तदेव रजतमिति कल्पयितुं पार्यताम्, तस्माद् दूराशामात्रमेतत् । इत्थञ्च
अन्यापोहनिरात्मनि बाह्ये विकल्पानां शब्दानाञ्च विषये इष्यमाणे
भट्टकुमारिलोपन्यस्तदुस्तरदूषणानामावरणकरणं न किञ्चित् पश्यामः ।

15 यदपि तद्दूषणापनिनीषया विकल्पप्रतिबिम्बकमारोपिताकारमात्रव्या-
वृत्तिच्छायोपरक्तं किमपि परिकल्पितम्, तदपि न व्यवहारपदवीमवतरितु-
मुत्सहते ।

विकल्पो नाम बोधात्मा स च स्वच्छः स्वभावतः ।
नासावितरसम्पर्कादृते कलुषतामियात् ।।
20 नूनमभ्युपगन्तव्यं किञ्चिदस्योपरञ्जकम् ।
आन्तरं वासनारूपं बाह्यं वा विषयात्मकम् ।।

---

**विचित्रसहकार्यादीति** । अयं भावः । न शक्तिः काचिदभिन्ना सम्भवति, अभावप्रसङ्गादिति । अतो भिन्ना साभ्युपेया । भिन्ना च स्वरूपसहकारिव्यति-रेकेण न काचिदस्ति, पूर्वमेव निराकृतत्वात् । तत्र स्वरूपशक्तेरभेदेऽपि सहकारि-
25 शक्तयो भिन्नाः, ता ह्यवच्छेदका धर्माः । येन चावच्छेदकेन [धर्मेण] सह स्वरूपशक्तिः स्वविषयज्ञानोत्पादिका तस्यावच्छेदकधर्मान्तरभिन्नत्वात् [प्रस्तुततधर्म]विशिष्टधर्मि-ज्ञानोदयकाले कथं धर्मान्तरविशिष्टधर्मिज्ञानोदयप्रसङ्गः ।

**इत्थञ्चान्यापोह इति निषेधात्मनि बाह्य इति** चिरन्तनबौद्धदृष्टया ।

यत् पुनर्विद्यते नान्तर्न बहिस्तेन रज्यते ।
विज्ञानमिति मायैषा महती धूर्तनिर्मिता ॥
विषया एव बुद्धीनामाञ्जस्येनोपरञ्जकाः ।
वासना विषयज्ञानजन्यत्वान्न तथोदिताः ॥

तस्मात् तत्र देशान्तरादौ वसता केनचिदर्थेन बुद्धयो रज्यन्ताम्, एकान्तासता तु केनचिदारोपितेन तदुपरञ्जनमघटमानम्, मनोरथप्रायम् । न चैकान्तासन्नाकार आरोपयितुमपि शक्यते । अपि च दर्शनपृष्ठभाविनो विकल्पास्तद्व्यापारकारिणो व्यावृत्तं स्रष्टुमसमर्था व्यावृत्तिमात्रमवलम्बन्ते इति यदुच्यते तत्र दृश्यसजातीयविजातीयव्यावृत्तत्वादुभयेऽपि व्यावृत्तिमेव स्पृशेयुः । उभयावमर्षे सत्येषां पौनरुक्त्यादानर्थक्यमिति चेद्, नानर्थक्यम् । प्रमाणवर्गे निपतन्तः काममनर्थका भवन्तु, अर्थान्तरं वावलम्बन्ताम्, व्यावृत्तिन्त्ववलम्बमाना अंशत आलम्बन्ते अंशतो नेति न श्रद्दध्महे ।

सजातीयविजातीयव्यावृत्त्योर्न च भिन्नता ।
यतोऽन्यतरसंस्पर्शो विकल्पे न प्रकल्पते ॥

सजातीयविजातीयव्यावृत्तिविमर्शे तु दर्शनवदसाधारणग्राहिण एव विकल्पाः स्युरिति सामान्यनिबन्धनसम्बन्धग्रहणादिव्यवहाराभावाच्छब्दानुमाने प्रलयं प्रतिपद्येताम् ।

व्यावृत्तिरपि बाह्या चेत्, तदवस्था कौमारिलदूषणाशनिः । आन्तरत्वे तु न तया विकल्पोपरागः कर्तुं शक्यते । नान्तर्न बहिरिति तु भणितिभङ्गीमात्रम् । तत् तादृशं किञ्चिन्न किञ्चिद्वा, न किञ्चिच्चेन्न, तेन विकल्पानामनुरञ्जनस्योपपादयितुमशक्यत्वाद्, अत्यन्तमसतश्च शशविषाणादेर्व्यवहारविषयत्वाभावात्, असत्ख्यातिनिरसननीतिमेवात्रोत्तरं करिष्यामः । किञ्चिच्चेन्नूनम् अन्तर्बहिर्वा तेन भवितव्यमेव । अतः कुमारिलादिष्टदूषणापनिनीषया योऽयमुत्प्रेक्षितः पन्था नूतनः, सोऽपि सङ्कटः । तस्माद् यथाध्यवसायमेवमिति

---

शुक्तिकारजतज्ञानस्य विषयाभावेऽप्युत्पद्यमानस्य तर्हि कथं सम्भव इत्याशङ्क्याह वासना विषयज्ञानेति । तथोदिता उपरञ्जकत्वे.... ( अत्रमातृकाखण्डिता )

युक्तम् । बाह्ये च वस्तुनि शब्दान्तरोपनीयमानभावाभावसम्बन्धावपि न न युज्येते । सर्वस्य गौरित्यादिशब्दजनितस्य ज्ञानस्यास्तित्वाद्यनपेक्ष्य सामान्यमात्रविषयत्वादाकाङ्क्षानिराकरणाय अस्ति नास्तीति पदान्तरं प्रयुज्यमानं सम्बध्यते । नियतरूपितानिश्चितनिजरूपे वस्तुनि वस्त्वन्तरस्य व्यवच्छेदबन्धनमिष्यत एव घटो घट इव न पट इति । नैतावता तदपोह्य एव प्रत्ययो भवति इत्यलमतिक्षोदेन ।

बाह्यार्थविषय एवं व्यवहारो घटत इत्ययं कस्मात्
दृश्यविकल्पावर्थावेकीकृत्य प्रवर्तते पुरुषः ।
एकीकारश्च कीदृग् यदि पृथगमतिस्तर्हि मूर्छाद्यवस्था-
साम्ये तत्र प्रवृत्तिः कथमथ किमपि स्यात् प्रवृत्त्यर्थरूपम् ॥
तद् दृश्यञ्चेदपोहव्यवहृतिरफलाथ द्वितीयं चकास्ति
स्वेनाकारेण तस्मिन् सति सुनिपतिते चेष्टते कः सचेताः ॥

स्फुरति यदि विकल्प्यं दृश्यरूपेण कामं
स भवति विपरीतप्रत्ययो नाविवेकः ।
न वितथमतिबीजं विद्यते ह्यत्र किञ्चि-
न्न च रविकरनीरज्ञप्तिवद् बाधिका धीः ॥

**सुबन्तपदार्थविचारोपक्रमः**

अर्थप्राप्तिरतः सदर्थविषयज्ञानप्रबन्धोद्गता
साक्षादेव मणिप्रभामणिमतिन्यायेन किं कथ्यते ।
प्रामाण्ये सविकल्पकस्य कथिते बाह्यार्थसिद्धिः स्थिता
तद्व्यक्त्याकृतिजातिवाच्यकलने तावत् प्रवर्त्तामहे ॥

एवं सिद्धे बाह्ये निरस्तेषु तदपहारिषु तथागततस्करेषु अधुना विचार्यते गोशब्दः किमाकृतेर्वाचकः, अथ जातेरिति ।

**जात्याकृत्योरभेदवादनिरासः**

तत्राकृतिपदेनेह संस्थानमभिधीयते ।
सूत्रे पृथगुपादान्न जातिर्जैमिनीयवत् ॥

जैमिनिर्हि 'आकृतिस्तु क्रियार्थत्वाद्' इत्याकृतिं जातिमुपदिशति ।

भाष्यकारोऽपि 'सास्नादिविशिष्टाकृतिः' इति ब्रुवाणः तथैव व्यवहरति। वार्त्तिककृता हि तद्व्याख्यातम्।

**जात्याकृतिव्यक्तिषु कः शब्दार्थः**

जातिमेवाकृतिं प्राहुर्व्यक्तिराक्रियते यया।
सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम्॥ इति।　　5

इह तु 'व्यक्तयाकृतिजातयस्तु पदार्थः' इति सूत्रकारो जातेः पृथगाकृतिवचो वदति, संस्थानमेवाकृतिं मन्यते। लोकोऽपि अवयवसन्निवेशात्मिकामाकृतिं व्यपदिशति 'यत्राकृतिस्तत्र गुणा वसन्ति' इति। तस्मादवयवसन्निवेश एवाकृतिरुच्यते। तस्याश्च शब्दार्थतोपपद्यते न वेति परीक्षार्हत्वमस्त्येव, न जैमिनीयवदुपेक्षितुं सा युक्तेति।　　10

तद्व्यक्त्याकृतिजातिसन्निधौ प्रयोगाद् गोशब्दस्य कोऽर्थ इति विचार्यते।

**व्यक्तेरेव पदार्थत्वम्**

तत्र आकृतिवादिनस्तावदाहुः, प्रयोगप्रतिपत्तिभ्यां किल शब्दार्थनिश्चयः। वृद्धाः स्वार्थेन व्यवहरन्तो यस्मिन्नर्थे गोशब्दं प्रयुञ्जते श्रोतारश्च यमर्थं ततः प्रतिपद्यते स तस्यार्थः। तत्र यदि गोशब्दः केसरादिमति न प्रयुज्यते　　15 सास्नादिमति च प्रयुज्यते तदसाधारणसन्निवेशविषय एवावगम्यते। प्रत्यक्षविषये गौरित्यादि पदं प्रयुज्यते प्रत्यक्षञ्चाकृतिविषयम्। अश्वपिण्डसन्निवेशाद् विलक्षणो हि गोपिण्डसन्निवेश इन्द्रियेण प्रतीयते, तत्कृतमेव वस्तुष्वितरेतरवैलक्षण्यम्। अतः प्रत्यक्षविषये पदं प्रवर्त्तमानमाकृतावेव वर्तितुमर्हति। प्रेषणादिक्रियायोगश्च व्यक्तिद्वारक आकृतेर्भविष्यतीति। तदुक्तम्,　　20

---

....अतो व्यक्तौ क्रियाया अभावादाकृतिः शब्दार्थ इति भाष्य .... । .... यत इतीवार्थाश्रयणेन तस्या एवान्वयो न व्यक्तेर्यतः संस्थान .... विशिष्टपरिणामाभावात् साक्षान्मुख्याभिव्यक्तिर्मा भूज्जातेः। सं .... व्यञ्जको नाप्यारम्भक इति नोपचारतोऽपि व्यक्त्यर्थसम्भव इ ....

[आकृ]तेरपि भविष्यतीति। विशिष्टसन्निवेशवत्या आकृतेः। सन्निवेशोऽपि ....　　25 दभिन्नत्वेन तयोः परस्परमप्यभेदात्। व्यावृत्तिरपि बाह्या .... कश्चिदित्यादिको योऽयमुत्प्रेक्षितो धर्मोत्तरेण। यदि पृ .... तः तत्र तस्मिन्ननुत्पन्ने विकल्पे सति कथं

तदयुक्तं प्रतिव्यक्तिभिन्नसंस्थानदर्शनात् ।
आनन्त्यव्यभिचाराभ्यां सम्बन्धज्ञप्त्यसम्भवात् ।।

न नियतस्य शाबलेयसन्निवेशस्य गोशब्दो वाचकः, तदभावेऽपि बाहुलेयसन्निवेशदर्शनात् । न च त्रैलोक्यान्तर्गतसकलगोपिण्डसन्निवेशवचनत्व-
5 मनुगतं शक्यम्, आनन्त्यात्, ततश्च नाकृतिः शब्दार्थः, तस्यां क्रियानुपपत्तेः । न हि प्रेषणादिक्रियासाधनं सन्निवेशः, अपि तु व्यक्तिः ।

न च गामानयेत्युक्तः सत्यामपि तथाकृतौ ।
चित्रमृत्स्नामयीं कश्चिद् गामानयति बुद्धिमान् ।।

ननु जातिवाच्यत्वपक्षेऽपि गोत्वजातेः सर्वगतत्वात् किमिति मृद्गवा-
10 नयनं नानुष्ठीयते ? उच्यते । हस्ती किं नानीयते, सर्वगतत्वाज्जातेः । अथ सर्वत्रास्तित्वेऽपि व्यञ्जकव्यक्तिनियमेनापह्नूयते । हन्त ! तर्हि सास्नादिमत्प्राणी गोत्वजातेरभिव्यञ्जको न मृद्गव इति नातिप्रसङ्गः । सन्निवेशस्य च तत्र भावात् तद्वाच्यत्ववादिन नैनमतिप्रसङ्गमतिक्रामन्ति । किञ्चाकृतिवचनत्वे गोशब्दस्य शुक्लादिगुणवाचिभिः पदान्तरैः सामानाधिकरण्यं न प्राप्नोति । न हि
15 शुक्लादिगुणा आकृतिवृत्तयः, तत्सामानाधिकरण्यादिबलवत्तया वरं व्यक्तिः शब्दार्थ इष्यताम् ।

व्यक्तौ तावत् क्रियायोगो जातौ सम्बन्धसौष्ठवम् ।
नाकृतौ द्वयमप्येतदिति तद्वाच्यता कुतः ।।
जातिव्यक्त्योरतः कार्या वाच्यत्वे सम्प्रधारणा ।
20 तत्र व्यक्त्यभिधेयत्ववादिभिस्तावदुच्यते ।।

प्रयोगचोदनासामञ्जस्याद् व्यक्तिः शब्दार्थः । आलम्भनविशसनप्रोक्षणादिचोदना जातावसङ्गता भवन्ति । न हि जातिरालभ्यते विशस्यते प्रोक्ष्यते वा । अपि च षड् देया द्वादश देया चतुर्विंशतिर्देया इति न जातिः षडादिसंख्याः-

---

प्रवृत्तिविषये .... "प्रयोगचोदनाभावादर्थैकत्वमविभागात्" इत्यत्र .... शब्दः पूर्वपक्षं
25 व्यावर्तयति । आकृतिः शब्दार्थः । कुतः ? श्येनचितं ....

विशेषावगतिदर्शनादेकत्वादिवल्लिङ्गमपि विभक्त्यर्थं एवेति मन्यन्ते । एतच्च तद्वच्च लिङ्गमित्य .... ।

भिर्युज्यतेऽपि तु व्यक्तिः, तस्मात् सैव शब्दार्थः। अपि च यदि पशुरुपाकृतः पलायेत अन्यं तद्वर्णं तद्वयसमालभेतेति, यदि जातिः शब्दार्थः स्यादन्यस्यालम्भो नावकल्पेतान्यस्योपनीयमानस्य पशुद्रव्यस्य सैव जातिः, तत्रान्यत्वसम्बन्धो व्यक्तेरवकल्पते न जातेरित्यतोऽपि व्यक्तिः शब्दार्थः।

चयापचयसङ्घातस्वस्वामित्वादिकल्पनाः । 5
यान्ति व्यक्त्यभिधेयत्वपक्षे झडिति सङ्गतम् ॥
न व्यक्तिलक्षणाद्वारमियत् कार्यञ्च युज्यते ।
वक्रः पन्था न गन्तव्यः प्रष्ठे वहति वर्त्मनि ॥
उपलक्षणमाश्रित्य जातिसम्बन्धवेदनम् ।
प्रसेत्स्यतीति नानन्त्यव्यभिचारकृतो ज्वरः ॥ 10

किञ्च,

प्रत्यक्षविषये वृत्तिः पदस्येष्टा परैरपि ।
निष्कृष्टं न च सामान्यमात्रं प्रत्यक्षगोचरः ॥
व्यक्तेरेव पदार्थत्वं तस्मादभ्युपगम्यताम् ।
तथा च बुद्धिस्तत्रैव श्रुतशब्दस्य जायते ॥ 15

**मीमांसकमते जातेरेव पदार्थत्वम्**

तदेतज्जैमिनीयैर्न क्षम्यते। तथा हि व्यक्तिमात्रं वा शब्दार्थ इष्यते विशिष्टा वा व्यक्तिः। न तावद् व्यक्तिमात्रम्, न हि यस्यां कस्याञ्चिद्वयक्तौ गोशब्दं वक्तारः प्रयुञ्जते, न च यां काञ्चिद्वयक्तिं गोशब्दाच्छ्रोतारः प्रतिपद्यन्ते। अथ गोत्वविशिष्टव्यक्तिः शब्दार्थ इत्युच्यते, गोत्वमेव हि तर्हि 20 गोशब्दार्थो न व्यक्तिः, कथम्? श्रूयताम्। यदि हि व्यक्तिः शब्दार्थो भवेद् व्यक्त्यन्तरे न प्रयुज्येत। अथ व्यक्त्यन्तरेऽपि प्रयुज्यते, सर्वव्यक्तिसाधारणस्तस्यार्थो न व्यक्तिः।

ननु व्यक्त्यन्तरमपि व्यक्तिरेव, सोऽयं व्यक्तौ गोशब्दः प्रयुक्तो न सामान्ये। मैवम्। व्यक्तौ चेद् गोशब्दः प्रयुज्यते कर्कादिव्यक्तावपि प्रयुज्येत। यत्र 25 प्रयोगोऽस्य दृष्टस्तत्र प्रयुज्यते इति चेद्, अद्य जातायां गवि मा प्रयोजि, न हि तत्र प्रयोगोऽस्य दृष्ट इति। तस्माद् दर्शनमकारणम्, प्रतिव्यक्ति तस्यासम्भवात्।

व्यक्तौ च शब्दार्थे इयं वा गौरियं वा गौरिति प्रतिपत्तिः स्यान्न त्वियमपि गौरिति । भवति चैवं प्रतीतिर्न चायमविद्यमाननियन्तृक एव यदृच्छाशब्द-प्रयोगः प्रवर्त्तते इति नियामकमस्य चिन्त्यम् । गोत्वमेव नियामकमिति चेत् । आयुष्मन् ! साधु बुध्यसे, किन्तु तद्गोत्वमवगतमनवगतं वेति वक्तुमर्हसि ।
5 नानवगतमतिप्रसङ्गाद्, अवगतञ्चेत् कुतस्तदवगच्छामः, शब्दादन्यतो वा । नान्यतः, प्रमाणान्तरासन्निधानात्, शब्दाच्चेत्, तर्हि शब्दः प्रथमतरं गोत्वे वर्त्तितुमर्हति, 'नागृहीतविशेषणा विशिष्टे बुद्धिः' इति न्यायात् ।

ननु जातिं विशेषणत्वेन व्यक्तिञ्च विशेष्यत्वेन वक्ष्यति गोशब्दः ? न शक्नोति वक्तुम्, अतिभारप्रसङ्गात् । न च व्यक्त्यवगतौ गतिरन्या नास्ति यत
10 इयन्तं शब्दे भारमारोपयेम । न हि वयं व्यक्तिप्रतीतिं भवन्तीमपह्नुमहे, नापि भवन्तीं जातिप्रतीतिमपह्नुमहे, उभयप्रतीतेः प्रत्यात्मवेदनीयत्वात् । उभयत्र चाभिधात्री शक्तिरतिभारः, शब्दस्यान्यतरप्रतीत्या चान्यतरप्रतीतिसिद्धेः । तत्र गोशब्दः किं जातौ वर्त्तमानः व्यक्तिम्, आहोस्विद् व्यक्तौ वर्त्तमानो जातिमाक्षि-पत्विति विचारणायां जातेर्विशेषणत्वात् पूर्वतरं प्रतिपत्तिरिति सैव शब्दार्थो
15 भवितुमर्हति । तस्याञ्च शब्दादवगतायां तत एव व्यक्त्यवगमः सेत्स्यतीति नोभयत्र शाब्दो व्यापारः ।

ननु दण्डिशब्दादिव विशेषणञ्च जातिं विशेष्याञ्च व्यक्तिं गोशब्दादेव प्रतिपत्स्यामहे, कोऽस्यातिभारः ? विषमोऽयं दृष्टान्तः, तत्र हि प्रकृतिप्रत्यय-विभागेन द्वयप्रतीतिरवकल्पते, दण्डशब्दः प्रकृतविशेषणमभिवदति मत्वर्थीय-
20 प्रत्ययश्च विशेष्यमिति । गोशब्दे तु नैष न्यायः सम्भवति । तत्र न विशेषणे दण्डिशब्दो वर्त्तते न विशेष्ये दण्डशब्दः, इह तु गोशब्द एक एव, स च विशेषणे विशेष्ये वा वर्त्तेत । विशेष्ये वर्त्तमानो विशेषणे प्रमाणान्तरमपेक्षते, विशेषणे तु वर्त्तमानस्तदवगमाय विशेष्यमाक्षिपतीति न कश्चिद्दोषः । तदि-दमात्मप्रत्यक्षम्, यच्छब्दे उच्चरिते व्यक्तिरवगम्यते स किं शब्दादुत जातेरिति
25 विवेको न प्रत्यक्षः, स युक्त्यावगम्यते, शब्दस्य द्वयाभिधाने यत्नगौरवात्, विरम्य व्यापारस्य चासंवेदनात् । अन्तरेणापि च शब्दं जात्यवगमाद्व्यक्ति-प्रतीतिदर्शनाज्जातित एवैषा व्यक्तिप्रतीतिः । जातिप्रतीतिश्च शब्दादिति

निश्चीयते । भवद्भिरपि च विशेषणज्ञानपूर्विका विशेष्यावगतिरङ्गीकृतैव, यथाह कणव्रतः, "समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते कार्य-कारणभूते" इति ।

यत्पुनरभिहितम्, आलम्भनविशसनप्रोक्षणादिक्रियायोगाद् व्यक्तिः शब्दार्थं इति, तदप्यनैकान्तिकम्, जातावपि क्वचित् क्रियायोगदर्शनात् 'श्येनचितं चिन्वीत' इति । 5

नन्वत्रापि व्यक्तेरेव कार्याङ्गता नामूर्त्ताया जातेः । मैवम् । न ह्यत्र श्येनः साधनत्वेन निर्दिश्यते 'पशुना यजेत' इतिवत् । 'कर्मण्यग्न्याख्यायाम्' इति त्वभियुक्तस्मरणाच्चयननिर्वर्त्त्यः श्येन इति शब्दार्थोऽवगम्यते । न च श्येनव्यक्तिश्चयनेन निर्वर्तयितुं पार्यते । अग्न्याख्यायामिति स्मर्यते, न हीष्टका-निचयेन पतत्री अभिनिर्वर्त्तते तदाकारस्त्वग्निरभिनिर्वर्त्यते इत्यत्र जातेः क्रियाङ्गत्वम्, न व्यक्तेः । 10

ननु व्यक्त्या सादृश्यं सम्पादयिष्यते ? न शक्यते सम्पादयितुम्, व्यक्त्यन्तरवैसादृश्यस्यापि सम्भवाद्, यो ह्येकया व्यक्त्या सदृशः सोऽन्य-विसदृशो भवति । 15

यत्त्वमूर्त्तत्वाज्जातेः न क्रियाङ्गत्वमिति, नैष दोषः, अमूर्त्तानामपि गुणकर्मणां क्रियासाधनतयोपपत्तेः । 'अरुणया क्रीणाति' 'अभिक्रामञ्जुहोति', इति, व्यक्त्याक्षेपद्वारेण चालम्भनविशसनप्रोक्षणादिप्रयोगचोदनासु साधनत्वं जातेरुपपत्स्यते ।

लक्षितव्यक्तिसाध्यन्तु तत्साध्यं कार्यमिष्यते । 20
यथा भूतेन्द्रियोत्पाद्यमात्मकर्तृकमुच्यते ॥

आत्मा तावत् सर्वकर्मस्वधिकृतः कर्त्ता च । स चामूर्त्तत्वाद् देहेन्द्रियद्वारेण औदुम्बरीसंमार्जनाज्यावेक्षणादीनि कार्याणि निर्वर्त्तयन् कर्त्ता तेषु भवति । एवं जातिरपि व्यक्तिवर्त्मना तन्निर्वर्त्तयन्ती साधनतां लप्स्यते ।

अतश्च जातिरेवाङ्गमिति मीमांसका जगुः । 25
तस्याश्चेदं क्रियाङ्गत्वमन्यद्वारकमात्मवत् ॥

एवं 'षड् देया' इति 'अन्यं तद्वर्णमालभेत' इति च तद्द्वारकमेव योज्यम्। एतेनोपचयापचयसङ्घाताद्यपि वक्तव्यम्, सम्बन्धग्रहणादिकार्यञ्च जातिपक्ष एव सूपपादम्, आनन्त्यव्यभिचारादिचोद्यानवकाशात्।

यत्पुनरभ्यधायि, प्रत्यक्षविषये पदं वर्त्तते, न च प्रत्यक्षस्य सामान्यमात्रं विषय इति, परिहृतं तद् वार्तिककृता। प्रत्यक्षस्य हि चित्रात्मकं वस्तु विषयः।

न च तत्तादृशं किञ्चिच्छब्दः शक्नोति भाषितुम्।
सामान्यांशानपोद्धृत्य पदं सर्वं प्रवर्त्तते॥ इति।

न हि नानाधर्मनिचयरचितचित्राकारवस्तुसमर्पणनिपुणमेकं किमपि पदमुपपद्यते। न च तत्र सम्बन्धग्रहणं सुकरमिति सामान्यांशनिष्ठमेव पदं युक्तम्, तस्माज्जातिरेव शब्दार्थ इति।

**जातिमात्रस्य पदार्थत्वखण्डनम्**

अत्राभिधीयते। न जातिः पदस्यार्थो भवितुमर्हति। पदं हि विभक्त्यन्तो वर्णसमुदायो न प्रातिपदिकमात्रम्। तत्र च प्रकृतिप्रत्ययावितरेतरान्वितमर्थमभिधत्त इति स्थितम्। द्वितीयादिश्च विभक्तिः प्रातिपदिकादुच्चरन्ती प्रातिपदिकार्थगतत्वेन स्वार्थमाचष्टे। युगपच्च त्रितयं विभक्त्यर्थः, कारकं लिङ्गं संख्या च। न चैतत् त्रितयं प्रातिपदिकार्थे जातावन्वेति। न जातिः कारकं, न च जातेः स्त्रीपुंनपुंसकविभागः, न चास्या द्वित्वादियोग इति।

ननु व्यक्तिलक्षणया सर्वमुपपत्स्यते इत्युक्तम्। न च युक्तमुक्तम्। सकृत्प्रयुक्तं पदमंशेन कञ्चिदर्थमभिदधाति, ततोऽर्थान्तरं लक्षयति, तद्गतत्वेन पुनः लिङ्गसंख्याद्यभिधत्ते इति न प्रातीतिकोऽयं क्रमः।

साक्षात् तदन्वितत्वेन कथ्यमानं त्वसङ्गतम्।
तद् भवेदग्निना सिञ्चेदित्यादिविधिसन्निभम्॥
ननु पुंसीव सामान्ये कथं नैव भविष्यति।
व्यक्त्यन्तरितमित्येषु युक्तो वैभक्तिकोऽन्वयः॥

प्रातिपदिकार्थसामान्यगतत्वेनैव विभक्त्या स्वार्थोऽभिधीयते न

---

ननु पुंसीवेति। आत्मनीव।

लक्षितव्यक्तिवृत्तित्वेन, यतोऽभिधानवैशसं स्यात् । स च विभक्त्यर्थो जातौ साक्षादसम्भवन् कक्ष्यान्तरितो भविष्यति । नैतत् । आत्मनो ज्ञानप्रयत्नादि-योगित्वेन कारकत्वोपपत्तेः, जातेस्तु साक्षान्न मनागपि व्यापारलेशसंस्पर्श इति स्वतो दुर्लभं तस्याः कारकत्वम् । अतः कथं तत्र विभक्त्यर्थान्वयः ।

यदन्वितञ्च संख्यादि तत्स्थत्वेन न कथ्यते ।
कथ्यते यद्गतत्वेन न तत् तेन समन्वितम् ॥
न च व्यवहितव्यक्तिप्रतीतिं मन्यते जनः ।
नान्यथानुपपत्त्यापि क्रमसंवेदनं क्वचित् ॥
जनयन्तीञ्च पश्यामो व्यक्तिं जात्यनुरञ्जिताम् ।
संख्यादियोगिनी चेति सा वै धत्ते पदार्थताम् ।
जातेः कार्यान्वयः श्येनचितावित्यभ्यधायि यत् ।
तत्र संस्थाननिर्देशान्न जातेः काचिदङ्गता ॥

श्येनव्यक्त्या चेत् सादृश्यमिष्टकाकूटस्य नास्ति, व्यक्त्यन्तरेण व्यभि-चारात् ; नितराममूर्त्तया जात्या सादृश्यमाकाशेनेव न तस्यावकल्पते इति स्पर्धोदाहरणमेतत् ।

**जातिविशिष्टव्यक्तेः पदार्थत्वम्**

अन्येषु तु प्रयोगेषु गां देहीत्येवमादिषु ।
तद्वतोऽर्थक्रियायोगात् तस्यैवाहुः पदार्थताम् ॥
पदं तद्वन्तमेवार्थमाञ्जस्येनाभिजल्पति ।
न च व्यवहिता बुद्धिर्न च भारस्य गौरवम् ॥

---

अभिधानवैशसं स्यादिति । किञ्चिदभिदधाति ततोऽर्थान्तरं लक्षयतीत्या.... विना नोपपद्यतेऽतः सामान्यप्रतीत्यन्थानुपपत्त्या व्यक्तिप्रतीतिरिति क्रमं जनो मन्यते, [न तु क्रमि] कत्वेन दृष्टेत्याह संवेदनं ज्ञानं जनयन्तीं तामेव पश्याम इति ।

न च भारस्य गौरवमुभयाभिधाने, यदुक्तम् "[सच्छब्दः सत्तां प्रवृत्तिनिमित्तमा] श्रित्य तद्वति द्रव्ये प्रवृत्तः शुक्लशब्दश्च गुणं प्रवृत्तिनिमित्तमाश्रित्य तत्रैवेति मुख्यया वृत्त्या सामानाधिकरण्यं [भवति]" ।

सामानाधिकरण्यादिव्यवहारोऽपि मुख्यया ।
वृत्त्योपपद्यमानः सन्नान्यथा योजयिष्यते ।।

तस्मात् तद्वानेव पदार्थः ।

ननु कोऽयं तद्वान्नाम, तदस्यास्तीति तद्वानिति विशेष एव सामान्य-
5 वानुच्यते, विशेषवाच्यत्वे चानन्त्यव्यभिचारौ तदवस्थौ । सामान्यन्तु शब्देनानु-
च्यमानं नोपलक्ष्यमाणं भवति, उभयाभिधाने च शब्दस्यातिभार इत्युक्तम् ।

उच्यते । नेदन्तानिर्दिश्यमानशाबलेयादिविशेषस्तद्वान् । न च सर्व-
स्त्रैलोक्यवर्ती व्यक्तिव्रातस्तद्वान्, किन्तु सामान्याश्रयः कश्चिदनुल्लिखितशा-
बलेयादिविशेषस्तद्वानित्युच्यते। सामान्याश्रयत्वाच्च नानन्त्यव्यभिचारयोस्तत्रा-
10 वसरः । न च विशेषणमनभिधाय विशेष्यमभिदधाति शब्द इत्यभ्युपगच्छामः,
येनैनमतिभारेण पीड्येमहि । सामान्याश्रयमात्रे सङ्केतग्रहणात् तावन्मात्रं
वदतः शब्दस्य कतरोऽतिभारः । एवं "तद्वतोर्नास्वतन्त्रत्वाद्" इत्यादि दूषणं
परिहृतं भवति । किञ्च,

---

**तद्वतो नास्वतन्त्रत्वादिति ।**

15 "[तद्वतो नास्वतन्त्र]त्वादुपचारादसम्भवात् ।
वृत्तिरूपस्य भिन्नत्वाद् राज्ञि भृत्योपचारवत्" ।।

इति दिग्नागश्लोकः । अत्र न जातिशब्दो योगजात्योर्वा भेदार्थैरपृथक्श्रुतैरित्यतो
वाचक इति सम्बध्यते । तेनायमर्थः, जातिशब्दः सदादिस्तद्वतो न वा[चकः] ।
[सच्छब्दो जातिस्वरूपोपसर्जनं] द्रव्यमाह न साक्षात्; अतस्तस्य सत्तां प्रतिपादयतो
20 द्रव्यवाचकत्वम्, न साक्षात्; ततोऽन्यप्रतिपत्तौ परतन्त्रीभूतत्वाद् द्रव्यप्रतिपत्तौ
स्वातन्त्र्याभावाद् द्रव्यगतघटादिभेदा[नाक्षेपात् न 'सन्] घटः' इति । शब्दो हि यान्
विशेषान् आक्षेप्तुं न शक्नोति नासौ तद्विशेषवाचिभिः शब्दान्तरैः सामानाधिकरण्य[मनु]
भवति । ते च तद्भेदा ये सामान्यशब्देन आक्षिप्यन्ते नान्ये सम्भवन्तोऽपि, तद्यथा
शुक्लशब्देन मधुरादेः । द्रव्ये मधुरादीनामनाक्षेपोऽनाक्षेपाच्च न तद्भेदत्वमतद्भेदत्वाच्च
25 न तद्वाचिभिः सामा[नाधिकरण्यम् ] । [सच्छब्देन] जातिः ख्याप्यते सत्तालक्षणा । तत्र
प्रवृत्तस्तद्वत्युपचर्यतेऽसौ । न च यः शब्दो यत्रोपचर्यते [स तस्य वाचकः] । न हि यो
यत्रोपचारतो वर्तते स तमर्थं परमार्थतो ब्रवीति यथा सिंहशब्दो माणवकम् ।

प्रत्यक्षं न हि निष्कृष्टजात्यंशपरिवेष्टितम् ।
तद्गोचरप्रवृत्तश्च शब्दस्तं कथयेत् कथम् ॥

तस्मात् प्रत्यक्षविषये प्रवर्त्तमानं तत्समानविषयमेव भवितुमर्हति पदं न सामान्यमात्रनिष्ठम् ।

युगपन्ननु संवित्तिर्विशेषणविशेष्ययोः । 5
प्रत्यक्षेऽपि न दृष्टैव न च युष्माभिरिष्यते ॥
कार्यकारणभावो हि तद्धियोर्भवतां मते ।
तस्माद् विशेषणे जातौ पूर्वमिन्द्रियजा मतिः ॥
पदादपि तदा यत्तु सम्बन्धज्ञप्त्यपेक्षिणः ।
तत्रैव बुद्धिरित्येव न व्यक्तेरपि वाच्यता ॥ 10

उच्यते । प्रत्यक्षे तावद् द्वयोरपि विशेषणविशेष्ययोरिन्द्रियविषयत्वम्, सामान्येऽपि संयुक्तसमवायादिन्द्रियं प्रवर्त्तमानं विशेषणवद् विशेष्यमपि विषयीकरोति । न हि सामान्यं प्रत्यक्षं विशेषोऽनुमेय इति व्यवहारः । एवं गुणमात्रग्राहिणीन्द्रिये गुणिनोऽनुमेयत्वं स्यात्, न चैवमस्ति । तस्माद् विशेष्य-

---

एवमुपचर्यमाणस्यास्वातन्त्र्यमप्रधानत्वमिति अस्वतन्त्रत्वादिति पदेन उपचारादित्यनेन पदेन च । एतद्धि "तद्वतो नास्वतन्त्रत्वात्" इति चिरन्तनबौद्धग्रन्थगतमिति । अथ सत्तोपरक्ततत्स्वरूपे द्रव्ये सारूप्याच्छब्दस्य वृत्तिर्भविष्यतीति चेदाह "असंभवात्" इति तत्सारूप्यस्यासम्भवादित्यर्थः । न हि सत्तया सारूप्यं द्रव्यस्य नीलेन यथा स्फटिकस्य, नीरूपत्वात् तस्याः । अथ यथा आकृतौ प्रत्ययसंक्रान्त्या 'गवयोऽयम्' इत्यादौ तथा घटादौ सत्प्रत्ययसंक्रान्त्या 'सन् घटः' इति भविष्यति । तदपि न । कुतः ? असम्भवात् । कथमसम्भवः ? द्रव्यस्य सत्ताकृत्यसंभवात् द्रव्ये सत्प्रत्ययसंक्रान्त्यभावः । ननूपचारादन्यविषयः प्रत्ययोऽन्यत्र संक्रामन् दृश्यत इत्याह "वृत्तिरूपस्य भिन्नत्वा[द्" भेदेनोपलभ्य-] मानत्वादिति । उपचारे हि 'योऽहं स एवायम्,' 'राजा भृत्यः' इत्युपचारा[द्] लोकस्य र[ाजा] दौ प्रवृत्ति[ः] प्रत्ययभेदेनोपलभ्यत इति तदिह भाक्त[ः] वृत्तिरूपस्य भिन्नत्वाद् राज्ञि भृत्योपचारवदिति । सामान्यं वदन् न तदाश्रयमाह....इति अस्वतन्त्रत्वादिदूषणानि, तेषां परिहारः ।

**न च युष्माभिरिष्यते** 'समवायिनः श्वैत्यात्' इत्यादि वदद्भिरिति । एवं न व्यक्तेरपि वाच्यता व्यक्तिरपि वा....पेक्षया शब्दस्य ।

पर्यन्तं प्रत्यक्षम्, तथा पदमपि तत्तुल्यविषयं न तु सामान्यमात्रनिष्ठमिति युक्तम् ।

यत्तु "सामान्यांशानपोद्धृत्य पदं सर्वं प्रवर्त्तते" इति, तत् केवलव्यक्त्यभिधाने सति आनन्त्यव्यभिचारभयादुच्यते । तद्वदभिधाने तद्द्वयं नास्तीति न 5 शुद्धजात्यभिधात्तया शब्दः सङ्कोचनीयः । न तु सर्वात्मना प्रत्यक्षतुल्यविषयः शब्दः, प्रतिपत्तिसाम्यप्रसङ्गात् । न च शब्दाद् इन्द्रियाच्च तुल्ये प्रतिपत्ती भवतः । तदुक्तम्, "अन्यथैवाग्निसम्बन्धाद् दाहं दग्धोऽभिमन्यते" इत्यादि ।

उच्यते । पूर्वमेवैतत्परिहृतम्, सकलविशेषग्रहणाग्रहणाभ्यां प्रतिपत्तिविशेषसिद्धेः । धर्म्यंभिप्रायेण च संप्लवस्योक्तत्वान्नैतावता सामान्यमात्रनिष्ठः 10 शब्दो भवति ।

अपि च निष्कृष्टसामान्यांशवचनत्वे पदस्येष्यमाणे गोशब्दाद् गोत्वशब्दाच्च तुल्ये प्रतिपत्ती स्याताम् । गौः शुक्ल इतिवच्च गोत्वं शुक्लमिति बुद्धिः स्यात् । चातुर्वर्ण्यादिवच्च स्वार्थे एव गोशब्दाद् भावप्रत्ययस्त्वतलादिः स्यात् ।

अथ मन्येथा आक्षिप्तव्यक्तिकां जातिं गोशब्दो वक्ति, भावप्रत्ययान्तस्तु 15 निष्कृष्टस्वरूपमात्रनिष्ठामिति, तदनुपपन्नम् । अनाक्षिप्तव्यक्तिकाया जातेः कदाचिदप्यदर्शनात् ।

अथ गोशब्दश्रवणवेलायां व्यक्तिसंस्पर्शवती जातिरवगम्यते, भावप्रत्ययान्ते तु गोशब्दे श्रुते तच्छून्यासौ प्रतीयते इति । यद्येवमागतोऽसि मदीयं पन्थानम् । आश्रयवती चेज्जातिरुच्यते शब्देन, जात्याश्रय उक्त एव 20 भवति नान्यथा सा आश्रयवत्युक्ता स्यात् । तदाश्रयपरिहारेणाश्रयिसामान्यमात्रविवक्षायां त्वतलादयः प्रयुज्यन्ते । तथा चाहुः, "यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलादयः" इति । गुणस्य हि भावाद् द्रव्ये शब्दनिवेश इति तद्वद्वाच्यत्वपक्षसाक्षीण्यक्षराणि, सामानाधिकरण्यञ्च तत्रैवोपपद्यते इत्युक्तमेतत् ।

---

25 **शब्दः सङ्कोचनीयः ।** बहुविषयः [अ]ल्पविषयः कार्यः ।

**तद्वद्वाच्यत्वपक्षसाक्षीणीति ।** यस्य गुणस्य भावात् स गुणो यत्र तादृशस्य द्रव्यस्याभिधाने शब्दप्रयोग इत्युक्ते तद्वति शब्दप्रयोग इत्युक्तं भवति ।

**पदानां पदार्थोपस्थापनप्रकारः**

तस्मात्

यथा विध्यन्तपर्यन्तो वाक्यव्यापार इष्यते ।
तथैव व्यक्तिपर्यन्तः पदव्यापार इष्यताम् ।।

अनवरतव्यापारे शब्दे तदवगमात् । 5

येनान्विताभिधानञ्च पदानामभ्युपेयते ।
सुतरां तेन वक्तव्या व्यक्त्यन्ता पदतो मतिः ।।
न हि व्यक्त्यनपेक्षाणां जातीनामितरेतरम् ।
अन्वयोऽनन्वितानाञ्च नाभिधानमिति स्थितिः ।।
गङ्गायां घोष इत्यादौ यथा सामीप्यलक्षणा । 10
नैवं गौः शुक्ल इत्यादौ गम्यते व्यक्तिलक्षणा ।।
प्रयोगप्रतिपत्तिभ्यां वृद्धेभ्योऽध्यवसीयते ।
तस्माद् गवादिशब्दानां तद्वानर्थ इति स्थितम् ।।

तदिदमुक्तं सूत्रकृता "व्यक्त्याकृतिजातयस्तु पदार्थः" इति । तुशब्दो विशेषणार्थः । किं विशिष्यते ? गुणप्रधानभावस्य नियमेन शब्दार्थत्वम् । 15 स्थितेऽपि तद्वतो वाच्यत्वे क्वचित् प्रयोगे जातेः प्राधान्यं व्यक्तेरङ्गभावः, यथा गौर्न पदा स्प्रष्टव्येति सर्वगवीषु प्रतिषेधो गम्यते । क्वचिद् व्यक्तेः प्राधान्यं

---

**यथा विध्यन्तपर्यन्त** इति । वाक्येन हि नियोगः प्रति .... दूरव्यवस्थितं सकलं विध्यन्तमाक्षिपति स्वसिद्धये इति तावति वाक्यानुपरतव्यापारे शब्दे तत्प्रतीतेः । 20

**न हि व्यक्त्यनपेक्षाणामिति ।** गुणव्यक्तेर्निराश्रयाया अनुपलम्भात् सा द्रव्यान्विता, एवं द्रव्यस्य निर्गुणस्या[नुपलम्भात् गुणान्वित] द्रव्यप्रतिपत्तिरिति । द्रव्यगुणादीनां साकाङ्क्षत्वात् परस्परान्वितार्थप्रतिपादनं तच्छब्दैस्तद्द्वारेण च जातीनामप्यन्वयः । व्यक्तीनां हि शब्द[ात् न साक्षात् ] प्रतिपत्तिरपि तु जात्यवगत्या; जातीनाञ्चानन्वये तदाक्षिप्तव्यक्त्यन्वयः कथं स्यादित्येवं शब्दाज्जातेर्जात्यन्तरान्विताया....। 25

**प्रयोगप्रतिपत्तिभ्यामिति ।** तद्वत्येव शब्दं प्रयुञ्जते तमेव च प्रतिपद्यन्त इति ।

जातेरङ्गभावः, यथा गां मुञ्च गां बधानेति नियतां काञ्चिद् व्यक्तिमुद्दिश्य प्रयुज्यते । क्वचिदाकृतेः प्राधान्यं व्यक्तेरङ्गभावो जातिर्नास्त्येव, यथा पिष्टकमय्यो गावः क्रियन्तामिति तत् सन्निवेशचिकीर्षया प्रयोग इति । सर्वगतत्वेऽपि जातेर्न मृद्गवादौ वृत्तिरित्युक्तम् । तदेवं गवाश्वादिशब्दानां तावत् 5 तद्वानर्थं इति सिद्धम् ।

येषामर्थेषु सामान्यं न सम्भवति तैः पुनः ।
उच्यते केवला व्यक्तिराकाशादिपदैरिव ॥

**वाच्यार्थनानात्वम्**

एवं डित्थादिशब्दानां संज्ञा त्वविदितात्मनाम् ।
10 अभिधेयस्य सामान्यशून्यत्वाद् व्यक्तिवाचिता ॥

अत एव हि द्रव्यशब्द इत्युच्यते ।

ये पुनः कल्पितानेकभेदवृत्तिं प्रचक्षते ।
वाच्यं तत्रापि सामान्यमतीव ग्राहिकास्तु ते ॥
न हि डित्थत्वसामान्यं दृश्यते गगनत्ववत् ।
15 कल्पनायास्तु नो भूमिः काचिदस्ति विपश्चिताम् ॥

गुणशब्दास्तु केचित् स्वजात्यवच्छिन्नं गुणमभिधाय तावत्येव विरमन्ति । केचिद् गुणमभिधाय द्रव्यमाक्षिपन्ति, तत्सामानाधिकरण्यप्रयोगदर्शनात् ।

गुणैकनियतास्तावद् गन्धरूपरसादयः ।
गन्धत्वादिव्यवच्छिन्नगन्धादिगुणवाचिनः ॥
20 तेषां न द्रव्यपर्यन्ता वृत्तिः क्वचन दृश्यते ।
न गन्धः पद्म इत्यस्ति सामानाधिकरण्यधीः ॥

न ह्येवं केचन वक्तारो भवन्ति ओदनं गन्धः आम्रं रस इति ।

---

**तत्सन्निवेशचिकीर्षयेति ।** गोव्यक्तेर्यः [सन्निवेश स प्राधान्येन] विवक्षितः गोव्यक्तिस्तु सन्निवेशान्तरव्यवच्छेदकत्वेनेति तस्या अङ्गता ।

25 **कल्पितानेकभेदवृत्तीति ।** बालाद्यवस्था.... [अव]यवावयविनोरव्यतिरेककल्पनया वा बहुभेदवृत्तिता ।

गुणं शुक्लादिशब्दास्तु कथयन्तस्तदाश्रयम् ।
द्रव्यमप्याक्षिपन्त्येव शुक्ले शुक्लेति दर्शनात् ।।

शुक्लादयोऽपि शब्दा गुणशब्दोपबन्धसङ्कोचितशक्तयो भावप्रत्ययान्तवद् गुणमात्राभिधाने एव पर्यवस्यन्ति शुक्लो गुणोऽश्वे, शौक्ल्यमश्वे इति, सामानाधिकरण्यप्रयोगदर्शनात् । 5

क्रियाशब्दाश्च द्विविधा भवन्ति । केचित् कर्त्तरि, कर्मणि, करणे वा प्रयुज्यन्ते । केचिद् भावमात्रवचना एव । कर्त्रादिवाचिनस्तावन्निमित्तीकृत्य काञ्चन क्रियां तद्योगिनि द्रव्ये वर्त्तन्ते पाचकादयः ।

यत्रापि तत्क्रियायोगस्तदानीं नोपलभ्यते ।
तत्रापि योग्यतां दृष्ट्वा शब्दं तज्ज्ञाः प्रयुञ्जते ।। 10

न हि पाचको लावक इति प्रवृत्तक्रिय एवोच्यते, अन्यदापि तथा तथा व्यवहारात् ।

अन्ये पूर्वापरीभूतस्वभावपरिहारतः ।
सिद्धरूपतया प्राहुः शब्दाः पाकादयः क्रियाम् ।।

तदुक्तम्, कृदभिहितो भावो द्रव्यवद् भवति क्रियावच्चेति । न चैकान्तेन परिहृतसाध्यमानावस्थैव तैः क्रियोच्यते, यत आह क्रियावच्चेति । 15

अन्यत् प्रवृत्तौ शब्दस्य निमितमवगम्यते ।
अभिधेयन्तु तस्यान्यदित्ययं प्रथमः क्रमः ।।

---

**गुणशब्दोपबन्धेति ।** गुणशब्दस्य य उप समीपे बन्धः प्र[योगः] यथा शौक्ल्यमश्व इति । भावप्रत्ययान्तस्य शुक्लशब्दस्याश्वशब्देन सामानाधिकरण्यं नास्ति तद्वद् गुणशब्दोपबन्धस्य, तेन [शुक्लो गुणोऽ]श्व इति न सामानाधिकरण्यमित्यर्थः । 20

**अन्ये पूर्वापरीभूतेति ।** पूर्वावस्थामतिक्रान्त उत्तरां फलोत्पत्तिकालभाविनीम[वस्थामा]श्रितः क्रमरूपः साध्य उच्यते । क्षणसमुदायात्मका एकफलोत्पादकतया ह्यधिश्रयणाद् यवादयः क्षणा एकत्वे[न यव] शब्दवाच्याः । अतस्तस्य पाकादेरैक्यादपूर्वापरापूर्वापराः सम्प[न्ना] इति.... 25

पाचकादिशब्दानां हि प्रवृत्तिनिमित्तं क्रिया अभिधेयास्तु कर्त्रादयः ।

क्वचित् पुनर्यदेवास्य स्यात् प्रवृत्तिनिबन्धनम् ।
तस्यैव वाच्यता भावप्रत्ययान्तपदेष्विव ॥
इत्येवं लेशतस्तावन्नाम्नां वृत्तिरुदाहृता ।
5 आख्यातानान्तु वाच्योऽर्थः पुरस्ताच्चर्चयिष्यते ॥
उपसर्गनिपातानां नाम्नामप्यविभागतः ।
प्रयोगप्रतिपत्तिभ्यामनेकार्थोऽवगम्यते ॥

उपसर्गः प्राचुर्येण क्रियायोगे प्रवर्तते, "उपसर्गाः क्रियायोगे" इति स्मरणात् । केचित्तु नामभिरपि सम्बध्यन्ते, यथा प्रगतं वयो यस्य स प्रवया 10 इति । अन्ये धातोर्विचित्रार्थतामापादयन्तस्तद्विशेषणतया सम्बध्यन्ते । यथोक्तम्,

उपसर्गवशाद् धातुरर्थान्तरविलासकृत् ।
विहाराहारसंहारप्रहारपरिहारवत् ॥

ननु क्वचिदुपसर्गो धात्वर्थमेव बाधमानो दृश्यते, यथा प्रस्थित इति । 15 गतिनिवृत्तिवाची धातुः प्रत्युत गतिवचनतां नीतः प्रशब्देन, न चेदृशं विशेषणं भवितुमर्हति ।

येन स्वार्थाविरोधेन विशेष उपजन्यते ।
विशेषणं तदेवेष्टं न तु यत् स्वार्थनाशनम् ॥ इति ।

नैष दोषः । अर्थान्तराभिधानसामर्थ्यापादनमेव धातोर्विदधदुपसर्गो विशे- 20 षणं भवितुमर्हति । अनेकार्थाभिधानशक्तिश्च धातुरुपसर्गेण नियतेऽर्थेऽवस्थाप्यत इति तस्य तद्विशेषणता ।

**उपसर्गाणां वाचकत्वं द्योतकत्वं वा**

उपसर्गाः किमर्थस्य वाचका द्योतका इति ।
प्रकृतानुपयोगित्वादिहैतन्न विचार्यते ॥
25 अन्वयव्यतिरेकाभ्यां तदर्थो ह्यवधार्यते ।
तदागमे तत्प्रतीतेस्तदभावे तदग्रहात् ॥

ते तु किं वाचकाः सर्वे तदवगतिमुपदधति, किं वा द्योतका इति, किमनेन ? एवं समुच्चयादिवाचिनां चादिनिपातानां 'वृक्षं प्रति द्योतते' इति कर्मप्रवचनीयानामर्थः प्रयोगप्रतिपत्तिभ्यामवधारणीय इत्यलं प्रसङ्गेन ।

अयमस्य पदस्यार्थ इति केचित् स तेन वा ।
योऽर्थः प्रतीयते यस्मात् स तस्यार्थं इति स्मृतिः ॥ 5
स्पष्टामपि तु ये बुद्धि निरूपयितुमक्षमाः ।
तां दर्शयितुमस्माभिर्दिङ्मात्रमुपदर्शितम् ॥
इति प्रमाणत्वसमर्थनाय शब्दस्य किञ्चिद् वयमुक्तवन्तः ।
पदाभिधेयार्थनिरूपणन्तु शास्त्रान्तरे विस्तरतः प्रणीतम् ॥
तत्क्षोदेन न नः प्रयोजनमतिद्राघीयसी सा हि भू- 10
रन्यामेव दिशं परीक्षितुमतोऽस्माभिर्गृहीतः क्षणः ।
जात्याद्यर्थसमर्थनेन कथिता बाह्यार्थसंस्पर्शिता
शब्दानामियतैव नन्ववसरेऽमुष्मिन् कृतार्था वयम् ॥

**वाक्यार्थचिन्ता**

एवं पदार्थे निर्णीते वाक्यार्थश्चिन्त्यतेऽधुना । 15
तत्र विप्रतिपत्तिश्च बहुरूपा विपश्चिताम् ॥

**तत्रैव विप्रतिपत्तयः**

केचिदाचक्षते, बाह्यस्य वाक्यार्थस्यासम्भवात् पदार्थसंसर्गनिर्भासं ज्ञानमेव वाक्यार्थ इति ।

अन्ये, वास्तवः पदार्थानां परस्परसंसर्गो बाह्य एव वाक्यार्थ इत्याहुः । 20

अन्यव्यवच्छेदो वाक्यार्थ इत्यपरे । शुक्लादिपदान्तरोच्चारणे कृष्णादिनिवृत्तेरवगमात् ।

अपरे सङ्गिरन्ते, संसर्गस्य दुरपह्नवत्वात् तस्य च गुणप्रधानभावगर्भत्वाद् गुणीभूतकारकनिकरनिर्वर्त्त्या प्रधानभूतक्रिया वाक्यार्थ इति ।

अन्ये मन्यन्ते, भाव्यनिष्ठः पुरुषव्यापारः करोत्यर्थो भावनाशब्दवाच्यो 25 वाक्यार्थः । लिङादिशब्दव्यापारस्तु शब्दभावनाख्यः पुरुषार्थभावनानुष्ठाने प्रवर्त्तकः, स एव विधिरुच्यते ।

अन्ये ब्रुवते, द्वयाभिधाने लिङादेः प्रत्ययस्य भारगौरवाद् विधिरेव वाक्यार्थः । स एवानुष्ठेयः प्रवर्त्तकश्चेति । तत्रापि द्वयी विमतिः । कैश्चित् प्रेषणात्मकत्वं शब्दस्याभ्युपगतं लिङादिशब्दैः, तथा तदगवमात्, कार्यान्तरानवगमाद्भावार्थमात्रकार्यत्वपक्षस्य चातिदौर्बल्याद् विधिरेवानुष्ठेय इत्यर्थात् 5 तस्य कार्यत्वम् । अन्यैस्तु कार्यत्वेन नियोगप्रतीतेरर्थात् तस्य प्रेरकत्वमिति संश्रितम् । कार्यमवगतं स्वसिद्धये पुरुषं नियुङ्क्ते । ममेदं कार्यमित्यवगते हि तत्सिद्धये पुरुषः प्रवर्त्तत इति ।

अपरे पुनः, अभिनवं वाक्यार्थमुद्योगं नाम वर्णयाम्बभूवुरित्यनेकशाखा विप्रतिपत्तिः ।

10 **विप्रतिपत्तीनां स्वरूपनिरूपणम्**

तदत्र किं तत्त्वमिति । अत्रैके तावदाहुः, वाक्यार्थो नाम पारमार्थिको बहिर्नास्त्येव । स हि पदार्थेभ्यो व्यतिरिक्तो वा स्यादव्यतिरिक्तो वा ? न व्यतिरिक्तः, भेदानुपलम्भात् । गौः शुक्ला आनीयतामित्यत्र पदग्रामे जातिगुणक्रियादिपदार्थ एव वाक्यार्थः प्रत्येकं वा स्यात्, सामस्त्येन वा । न प्रत्येकम्, तथा- 15 नवगमात्, न हि गौरिति पदार्थ एव वाक्यार्थो भवति । सामस्त्यन्तु न तेषामस्ति । तद्धि सत्तया भवेत्, प्रतीत्या वा । सत्तया न सामस्त्यमशेषपदार्थराशेरस्तीति न नियतः कश्चन वाक्यार्थोऽवधार्यते । प्रतीत्या तु सामस्त्यमघटमानमयुगपद्भावित्वेन ज्ञानानामेकपदार्थप्रतीतिसमये पदार्थान्तरप्रतीत्यसम्भवात् ।

---

'ग्रामं गच्छ' इत्यादौ हि आज्ञया प्रेरितस्तत्सम्पत्त्यर्थमेव प्रवर्तमानो दृश्यतेऽतः 20 सैव कार्यम् । ननु धात्वर्थं ग्रामगमनमसौ साधयितुं प्रवर्तते तन्नेत्याह **भावार्थमात्रकार्यत्वपक्षस्यातिदौर्बल्यात्** । वक्ष्यमाणनीत्येति भावः । **तत्सिद्धये हि पुरुषः प्रवर्तत** इति । यदि हि असौ तत्सिद्धये न प्रवर्तेत कार्यमेव तन्न स्यात्, अतः 'आत्मनः कार्यतासिद्धये प्रवर्तयति' इत्यर्थात् प्रेरकत्वम्, कार्यत्वेन नियोगप्रतीतेः; नियोगो ह्याज्ञारूपः कार्यत्वेनैव प्रतीयते शब्दात् ।

25 **अपरे पुनरभिनवमिति** । मीमांसायां तृतीयदर्शनकर्तृभट्टनारायणमतोपन्यासः । यस्मिन् प्रतोते सति निरुद्योगस्य सत आत्मनः सोद्योगत्वं भवति स उद्योगः ।

पदार्थप्रतीत्युपायाश्च वर्णाः, तेऽपि न युगपद्भाविनः, कुतः प्रतीतिकृतं सामस्त्यम् ?

अपि च पदार्थसमुदायः किमितरेतरसंस्पृष्टो वाक्यार्थः, अन्यथा वा । न तावदन्यथा, गौरश्वः पुरुषो हस्तीत्येवमादावदर्शनात् । संसर्गस्तु दुरुपपादः । स ह्यपेक्षागर्भो भवति । न चार्थोऽर्थान्तरमाकाङ्क्षति, अचेतनत्वात् । बुद्धीनामपि क्षणिकत्वादन्योन्यं नाकाङ्क्षा । न च तत्कृतः सम्बन्धः । 5

अत एव न संसर्गो वाक्यार्थः, न ह्यसावर्थानां ज्ञानानां वा यथोक्तनीत्यावकल्पते ।

व्यवच्छेदोऽप्येवमेव निराकार्यः । सोऽपि हि न ज्ञानानामुपपद्यते । तदुक्तम्, 10

> यदि ध्रियेत गोबुद्धिः शुक्लबुद्धिजनिक्षणे ।
> ततोऽन्येभ्यो निवर्तेत संसृज्येताथ वा तयेति ॥

न चापेक्षायां सत्यामपि सम्बन्धः कश्चिदुपलभ्यते । यथोक्तम्,

> अपेक्षणेऽपि सम्बन्धो नैव कश्चित् प्रतीयते ।
> कार्यकारणसंयोगसमवायादिलक्षणः ॥ 15
> एकार्थवृत्तिप्रायस्तु सम्बन्धोऽतिप्रसज्यते ।

अर्थानान्तु क्वचिदपि सन्सम्बन्धः शब्दैरनभिधीयमानत्वाद् असत्कल्प एव । न चाभेदसंसर्गयोर्वाचकं किञ्चित् पदमस्ति । असति च तद्वाचिनि पदे न तयोः पदार्थत्वम् । अपदार्थस्य च न वाक्यार्थत्वम् । श्रुतेऽपि तद्वाचिनि पदे सतुरामसङ्गतिः, गौः शुक्ल आनीयतां संसर्ग इति कोऽर्थः ? तस्माद् बाह्यस्य 20 वाक्यार्थस्य सर्वप्रकारमसम्भवात् पदार्थसंसर्गनिर्भासं ज्ञानं वाक्यार्थो भवितुमर्हति । तेनैव च लोके व्यवहार इति ।

---

**अपेक्षणेऽपीति** । बुद्धीनाम् । अथैकात्मवृत्तित्वं सम्बन्धो बुद्धीनामिति तन्नेत्याह **एकार्थवृत्तिप्रायस्त्विति** । गौरश्वः पुरुषो हस्तीत्यादिबुद्धीनामप्येकार्थसमवायादवाक्यार्थत्वेऽपि वाक्यार्थत्वप्रसक्तेरतिप्रसङ्गः । 25

**विप्रतिपत्तिनिरासः**

तदिदमनुपपन्नम् । बाह्यार्थस्यानन्तरमेव प्रसाधितत्वात् । न संसर्गनिर्भासं ज्ञानं वाक्यार्थो भवितुमर्हति, स्थापयित्वा हि बाह्यमर्थं वाक्यार्थचिन्तामुपक्रान्तवन्तो वयम्, अतः कोऽवसरो विज्ञानमात्रवाक्यार्थत्ववर्णनस्य । न च 5 पदार्थव्यतिरिक्तो नास्ति वाक्यार्थः । इदं तावद् भवान् पृष्टो व्याचष्टां किं गौरिति पदाद् यादृशी प्रतिपत्तिस्तादृश्येव गौः शुक्ल आनीयतामिति वाक्याद् उत भिन्ने एते प्रतिपत्ती इति । तत्र तुल्यत्वं तावत् प्रतिपत्त्योरनुभवविरुद्धम् । वैलक्षण्ये तु प्रतीत्योर्विषयवैलक्षण्यमपि बलादुपनतम्, असति विषयभेदे प्रतीतिभेदानुपपत्तेः । यश्च तदतिरिक्तो विषयः स वाक्यार्थः । एवं केवलगुणक्रिया- 10 पदोच्चारणेऽपि योजनीयम् । तदुक्तम्, "यत्राधिक्यं स वाक्यार्थं" इति । संसर्गोऽपि पदार्थानां न न प्रतीयते, न हि गौरश्वः पुरुषो हस्तीत्यसंसृष्टपदार्थप्रतीतिवद् 'गौः शुक्ल आनीयताम्' इति प्रतीतिः । यथा च संसर्गः प्रतीयते यश्च प्रतीत्युपायस्तत्सर्वं विस्तरतो निर्णेष्यते । तस्माद् बाह्य एव वाक्यार्थः ।

बाह्योऽपि भवन्न व्यवच्छेदो वाक्यार्थः, विधिरूपत्वेनावगमात्, संसर्ग- 15 मन्तरेण चान्यव्यवच्छेदस्यापि दुरुपपादत्वात्, न हि शुक्लपदार्थेनासंसृष्टो गोपदार्थः कृष्णादिभ्यो व्यावृत्त इत्यवगम्यते ।

गोशब्दात् सर्वगवेषु बुद्धिरुपसर्पन्ती पदजनिता शुक्लपदसन्निधानात् । अन्यतः कृष्णादेरपसर्पतीति व्यवच्छेद्यो वाक्यार्थ इति चेन्मैवम् । तत्सम्बन्धावगमपूर्वकत्वात् तदितरव्यावृत्तेः । तत्सम्बन्धावबोधेन सिद्धे वाक्यस्यार्थवत्त्वे 20 पाश्चात्त्यः कृष्णादिव्यवच्छेदावगमो यदि भवति, भवतु कामम्, न त्वसौ वाक्यार्थ इति ।

**क्रियाया वाक्यार्थतावादिमतम्**

तदेवं विधिरूपे बाह्ये च शब्दार्थेऽवस्थिते सति क्रियामेव केचिद् वाक्यार्थं वर्णयन्ति । अयं तेषामाशयः,

25 पदार्थाः किल वाक्यार्थभावमायान्ति संहताः ।
अपेक्षानुगुणान्योन्यव्यतिषङ्गविशेषतः ॥

---

अपेक्षानुगुणेति । यो यमपेक्षते तेन तस्य व्यतिषङ्गः सम्बन्धः ।

न च गुणप्रधानभावमन्तरेण संसर्गः पदार्थानामवकल्पते। न चाख्यात-रहितं वाक्यं किञ्चित् प्रयोगयोग्यम्, अनुच्चारिते तस्मिन्नाकाङ्क्षाया अनिवृत्तेः। श्रोत्राकाङ्क्षानिवृत्तये च वाक्यानां लोके प्रयोगः। लोकवच्च वेदादप्यर्थोऽवसीयते। आख्याताच्च पूर्वापरीभूतः साध्यरूपोऽर्थोऽवगम्यते न सिद्धरूपः। सिद्धसाध्यसमुच्चारणे कस्य किंतन्त्रतेति चिन्तायां साध्यसिद्धये सिद्धमुपात्तमिति प्रतीयते। 5

साध्यञ्च साध्यमानत्वात् प्रधानमवगम्यते।
तस्मात् तदेव वाक्यार्थः क्रियातो नापरञ्च तत्॥

क्रिया हि प्रतीयमाना स्वनिष्पत्तये साधनान्याक्षिपति। तैश्च कैश्चित् सम्बध्यते। तानि च कानिचित् पदान्तरोपात्तानि भवन्ति, कानिचिद् वाक्या-न्तरोपात्तानि, कानिचित् प्रकरणपाठलभ्यानि, कानिचिदारादुपकारकाणि, कानिचित् सन्निपत्योपकारकाणि, कानिचिदन्तिकोपनिपतितान्यपि योग्यता-विरहात् परिहरति, कानिचिदतिदूरवर्त्तीन्यपि योग्यानि स्वसम्पत्त्यर्थमाहरति। इत्येवं दृष्टादृष्टोपकारकारककलापसम्पद्यमानस्वरूपा क्रियैव वाक्यार्थः। 10

---

**पदान्तरोपात्तानीति**। एकवाक्यत्वे सति। यथा वायव्यं श्वेतमालभेतेति....पदेन....रुपात्तः। **वाक्यान्तरोपात्तानि**। 'अग्निहोत्रं जुहोति' इत्येतदपेक्षया 'दध्ना जुहोति' इति वाक्यान्तरेण दध्नो विधानं होमानुवादेन, अतोऽग्निहोत्रं जुहोतीति होमविधायक-त्वाद् वाक्यान्तरमेतद् गुणविधायकम्। **प्रकरणपाठलभ्यानि**। वाक्यान्तरविहितानुवादं विनैव प्रयाजावघातादीनि 'समिधो यजति' इति 'व्रीहीनवहन्ति' इति वेत्यादिभिर्वाक्यै-र्विहितानि तत्प्रकरणपठितत्वात् तान्यप्याकाङ्क्षति। **[आरादुपकारकाणीति।]** तेषामपि मध्ये कानिचिदाराद् दूरे अदृष्टेनोपकारेणोपकुर्वन्ति प्रयाजादीनि। **कानिचित् सन्निपत्यो-पकारकाणि**। दृष्टेन तुषकणविप्रमोकादिलक्षणेनोपकारेणोपकुर्वन्त्यवघातादीनि। **कानिचि-दन्तिकोपनिपतितान्यपीति**। यथा दर्शपूर्णमासप्रकरणे परिपठितानि पूषानुमन्त्रणादीनि। पूषादिदेवतानां तत्रासन्निधानादनुपयोगादन्तिके प्रकरणे श्रुतान्यपि परित्यज्यन्ते। **कानिचिदतिदूरवर्तीन्यपीति**। यथा दर्शपूर्णमासप्रकरणश्रुतानि पूषानुमन्त्रणादीनि दूरस्थोऽपि पौष्णश्चरुरि .... [स्व]र्गकामपदस्य च योग्यत्वा .... दर्शनादनिष्यमाणस्ये .... एतदेव किमर्थं पुनर ....। 15 20 25

यजेत दद्याज्जुहुयादधीयीतेति चोदितः ।
क्रियां साध्यतया वेत्ति ताञ्च लोकोऽनुतिष्ठति ।।

अधिकारिपदमपि क्रियापेक्षितकर्तृसमर्पणेन तदुपयोगितामेवावलम्बते । अस्यां क्रियायामेष कर्त्ता अनेनेयं क्रिया सम्पद्यते इति । तत्र च कर्त्ता क्रियासु 5 स्वप्राधान्यमुज्झति, न हि क्रिया कर्त्रर्था अपि तु कर्ता कियार्थः, स हि तां निर्वर्तयन्नुपलभ्यते । शब्दोऽपि तथैवोपदिशति एष इदं कुर्यादिति । किमर्थं पुनरसौ क्रियामनुतिष्ठतीति चेच्छब्दप्रामाण्यादेवेति ब्रूमः । शब्देन हि चोदित-स्त्वयेदं कर्त्तव्यमिति, स चेन्नियुक्तो नानुतिष्ठेच्चोदनामतिक्रामेत् । शास्त्र-प्रत्ययाच्च क्रियामनुतिष्ठति विरतफलाभिलाषः कर्मसंस्कारादेव, परिपक्वकषायः 10 स्तोकस्तोकप्रपञ्चविलापनद्वारेणोत्तमाधिकारमारूढः । तत एव ज्ञातास्वाद-स्तमेव परमपुरुषार्थं प्रतिपादयतीति दीर्घा सा कथा तिष्ठतु, किमनया । सर्वथा

---

**परिपक्वकषायः** । क....ति तदुक्तम्, कषायमुक्ति....परिपक्वा विशुद्धा रागा.... म इदं कुर्यादिदं काम....त एवा । **ज्ञातास्वाद** इति । संस्व....साक्षात्कारमुत्पादयन्नास्व.... रिंणी सुखञ्च साधयत्यतः करोमि तामिति । सुखात्मिका निरीहता करेस्विता 15 जिहासिता अनागतार्थलिप्सया क्रियाश्रिता सुखात्मिका जिहा[सिता सु]खस्य दुःखरूपिणी क्रियाश्रिता । निरीहतां सुखात्मिकां विहाय किमित्यादि । प्रपञ्चविलयनेन वा चित्तविक्षोभस्य शनैर्निवर्तनाद् ज्ञातास्वादता[दिक्र]मेण वा विशिष्टसिद्धिप्रादुर्भावाद् तत्त्वं यथाह,

त्रैलोक्ये सर्वभूतानां दुष्प्रापं यदुदाहृतम् ।
20 तच्चास्य भवति प्राप्यं प्रथमं योगिनो बलम् ।।

विशि[ष्टसिद्धेः प्रादु]र्भावाद् वा । तथा चाह,

निष्प्रपञ्चं मनः कृत्वा प्रतिष्ठाप्य च सर्वतः ।
तामेव लभते तुष्टिं या न शक्या ह्यतोऽन्यथा ।।
समाहितः परे तत्त्वे क्षीणकामो [भवत्यतः] ।
25 [सर्व]तः सुखमन्वेति राहुश्चन्द्रमसं यथा ।। इत्यादि ।

**तमेव परं पुरुषार्थमिति** । अपहतपाप्मत्वादिविशिष्टात्मसाक्षात्कार एव परः पुरुषार्थः । यच्छ्रुतिः 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणावतिष्ठते' इति ।

क्रियाप्राधान्यात् सैव वाक्यार्थं इति । तदुक्तम्, "द्रव्यगुणसंस्कारेषु बादरिः" । एतदुक्तं भवति द्रव्यादीनामेव क्रियां प्रति शेषत्वमवगम्यते न हि क्रियाया अन्यशेषत्वमिति ।

**फलवाक्यार्थवादिमतम्**

अत्रोच्यते । कुत इदं क्रियायाः प्राधान्यमुपेयते, वस्तुवृत्तेन वा शब्दप्रत्यय- 5
महिम्ना वा ?

फलस्य वस्तुतस्तावत् प्राधान्यमवगम्यते ।
न सचेताः क्रियां काञ्चिदनुतिष्ठति निष्फलाम् ॥
वेदाद् गुरुनियोगाद् वा शासनाद् वा महीभुजः ।
न वैफल्यमपश्यन्तः क्रियां विदधते जनाः ॥ 10
जडो माणवकोऽप्येष चपेटापातहानये ।
मोदकाद्याप्तये वापि करोति गुरुशासनम् ॥

अत्रोच्यते । न वस्तुतः प्राधान्यमिहाश्रीयते, अपि तु शब्दतः । शब्द-प्रमाणका वयम् । यच्छब्द आह तदेवास्माकं प्रमाणम् । तद् यथा राजपुरुष इति वस्तुवृत्ते राजा जगतामीशिता प्रधानम्, पुरुषस्तपस्वी तदिच्छानुवर्त्तनेन 15
जीवति । शब्दस्तु पुरुषप्राधान्यमाचष्टे उत्तरपदार्थप्रधानत्वात् तत्पुरुषस्येति । एवमिहापि यजेत दद्याज्जुहुयादिति क्रियां प्राधान्येनोपदिशति शब्दः । स्वर्ग-काम इत्यपि क्रियां प्रति कर्तुरुपदेशः, वस्तुवृत्तेन तु कर्मणि क्रियमाणे कर्म-स्वाभाव्यं फलं चेद् भवति भवतु तत्, पुरुषोऽपि प्रयततां नाम फलेन, न तु शब्दः फलोपदेशनिष्ठः । आह च 'तस्मिंस्तु कृते स्वयमेव तद् भवति' इति । 20

---

**द्रव्यगुणसंस्कारेषु बादरिरिति** । बादरिराचार्यो द्रव्यगुणसंस्कारेषु शेषभावं पारार्थ्यं मेने न यागफल[पुरुषेषु ।] [व्रो] ह्यादि द्रव्यं क्रियानिर्वर्तनद्वारेण तच्छेषम्, द्रव्यावच्छेदकत्वेन च शौक्ल्यादिगुणः क्रियाशेषः अवघातश्च संस्कारः क्रियायोग्यतां.... [न हि क्रियाया अन्यशेषत्वम् ] न क्रिययान्यत् साध्यते । न ह्येवं वचोऽस्ति यागात् स्वर्गः अपि तु स्वर्गकामस्य याग इति । 25

**तस्मिंस्तु कृते स्वयमेवेति बादर्यधिकरणे भाष्यम्** । स्वयमेव भवति....स्ववानिति न्यायान्न पुनरेतद्वाक्यश्रुतस्वर्गकामपदसामर्थ्यादिति ।

स्वयमेवेति कोऽर्थः ? न शब्दः फलपारतन्त्र्यं क्रियायाः प्रतिपादयतीति ।

**स्वर्गकामो यजेतेति वाक्यार्थविचारः**

तदेतदयुक्तम् । एवं वर्ण्यमाने स्वर्गकामो यजेतेति स्वर्गकामपदस्यान्वयो दुरुपपादः ।

5 ननु कर्तृपदमेतत् कर्ता च क्रियार्थो न कर्त्रर्था क्रियेत्युक्तम् । न कर्तृपदं स्वर्गकाम इति, किन्त्वधिकारिपदमेतत् । न हि जात्यैव कश्चित् स्वर्गकामो नाम कुत्रचित् पुरुषोऽवगम्यते यो ह्यत्र कर्तृत्वेन नियोज्येत । स्वर्गे कामो यस्यासौ स्वर्गकामः, स्वर्गं वा कामयते स्वर्गकामः, उभयथापि स्वर्गकामनाविशिष्टः पुरुष एव तस्मात् पदादवगम्यते ।

10 तदत्र काम्यमानः स्वर्गः कथं क्रियया सम्बध्येत, दृष्टेनादृष्टेन वोपकारेण ?

**स्वर्गस्य यागोपकारकत्वविचारः**

यदि हि चन्दनं स्वर्गः, षोडशवर्षा अङ्गनाः स्वर्ग इति चन्दनाङ्गनादिद्रव्यसामानाधिकरण्यप्रयोगाद् द्रव्यशब्दः स्वर्गशब्दः तदा "द्रव्याणां कर्म-
15 संयोगे गुणत्वेनाभिसम्बन्धः" इति दध्यादिवत् साधनत्वेन स्वर्ग उपकरोति क्रियाम्, कामनापि द्रव्याहरणाङ्गत्वादुपकारिणी यत् तया द्रव्यमानेतुं यतते इति दृष्टोपकारित्वम् ।

तच्चैतदसमञ्जसम् । स्वर्गशब्दस्य द्रव्यवाचित्वाभावात् । प्रीतिवचनो ह्येष स्वर्गशब्दो न द्रव्यवचनः । तदेव चन्दनं शीतातुरेण न स्वर्ग इति,
20 ग्रीष्मोपहतेन च स्वर्ग इति व्यपदिश्यते । सैवाङ्गना सुरतार्थिना स्वर्ग इति,

---

**स्वर्गकामपदस्यान्वयो दुरुपपाद** इति वक्ष्यमाणाभिप्रायेणाह ।

**द्रव्याणां कर्मसंयो[गे गुणत्वेनाभिसम्बन्धः**, इत्या]दि पूर्वपक्षसूत्रम् । द्रव्याणां सिद्धिरूपाणां कर्मणा साध्येन सम्बन्धो यदा तदा गुणत्वेनाङ्गत्वेनैव सम्बन्धो दृष्टो द्रव्यश्च स्वर्ग इति । **कामनापि द्रव्याहरणाङ्गत्वादिति** । .... आहर्तुं नेष्यते तद्
25 कथमाहर्तुं पार्येतेति । तेन स्वर्गे चन्दनादौ यागार्थमाहर्तुं कामो यस्य स स्वर्गकाम इति ।

विरतायां सुरततृषि न स्वर्ग इत्युच्यते। तदेवमेष स्वर्गशब्दः प्रीतिं न व्यभिचरति, द्रव्यन्तु व्यभिचरति। एवमद्रव्यत्वात् स्वर्गस्य न क्रियाङ्गत्वम्। तथापि निरतिशयसुखप्रतीत्यन्यथानुपपत्तितः परिकल्पितः कनकगिरिशिखरादिर्देशः स्वर्गः। सुतरां तस्य न क्रियासाधनत्वमवकल्पते दध्यादिवदुपादातुमशक्यत्वात्। 5

यदप्यदृष्टेनैव द्वारेण समुद्रं मनो ध्यायेदितिवत् स्वर्गकामना तत्रोपकारिणीति तदपि क्लिष्टकल्पनामात्रम्। प्रीतिर्हि निरतिशया स्वर्गः, प्रीतेश्च नान्यार्थत्वं युक्तम्, प्रीत्यर्थमन्यन्नान्यार्था प्रीतिः। तस्मान्न यागाय स्वर्गोऽपि तु स्वर्गाय यागः।

इत्थञ्च क्रियासाधनानुपदेशान्न कर्तृसमर्पणेन स्वर्गकामपदं समन्वेति। 10 कथं तर्ह्यस्यान्वयः ? अधिकारिवाचित्वेन ब्रूमः।

कोऽयमधिकारी नाम, कर्मणः स्वामीश्वरवचनो ह्यधिकृतशब्दः। ननु कर्तैव कर्मणः स्वामी नान्यः, मैवम्। स्वामी सन् कर्ता न कर्ता सन् स्वामीति। ननु क्रियाकारकसम्बन्धव्यतिरिक्तः कोऽन्यः कर्मणः पुरुषस्य च सम्बन्धः ? उच्यते। ममेदं कर्त्तव्यमहमत्र स्वामीति स्वस्वामिभावमवगत्य पाश्चात्त्यः 15 क्रियाकारकसम्बन्धोऽवगम्यते।

ननु त्वया क्रियाकारकसम्बन्धो नापह्नुयते जातिवादिनेव व्यक्तिप्रतीतिः। स तु पाश्चात्त्य इत्यत्र किं प्रमाणम् ? उक्तमत्र "अनुपादेयविशेषणं विशिष्टस्य

---

**अथादृष्टेनैव द्वारेणेति।** यद्यपि [प्रीतिवचनः] स्वर्गशब्दस्तथापि तदिच्छा यागस्यादृष्टमुपकारं करिष्यति। रथन्तरप्रस्तावे समुद्रमनोध्यानवत्। 20

**इत्थञ्च क्रियासाधनेति।** क्रियायाः साधनं कर्तारं ....शक्नोति तदेत्यर्थः।

**स्वामी सन् कर्तेति।** यतस्त्वमस्य कर्मणः स्वामी ततस्त्वयेदं कार्यमित्यधिकारावस्थोत्तरकालं कर्त्रवस्थाया उल्लासात्।

**अनुपादेयविशेषणेति।** यो हि यागसाधनत्वेनोपादातुं शक्यते तद्विशिष्टः कर्ता भवति। यथा 'अभिक्रामन् जुहोति' 'लोहितोष्णीषाः प्रचरन्ति' इति। यत्तु यागसाधन- 25 त्वेनोपादातुमाहर्तुं न शक्यते तद्वि[शि]ष्टोऽधिकारी। यथा यावज्जीवं जुहुयादिति। न हि जीवनं पुरुषप्रयत्नेन यागसाधनत्वेनोपादातुं शक्यते, स्वतः सिद्धन्तु तन्निमित्तत्वेनाधिकारिणं विशिनष्टि।

पुंसो निर्देशात्'' इति, कारकत्वानुगुणविशेषणयोगिनो ह्यस्य कर्तृतया योग्यः सम्बन्धः, तद्विपर्ययेत्वधिकारित्वेनेति। तस्मादधिकृतस्य कर्तृत्वं न कर्तुरधिकारः। इत्थञ्च स्वर्गकामस्याधिकृतत्वं निर्वहति, यदि हि तत्कर्म स्वर्गार्थं स्यात् स्वर्गो मे भोग्यो भवेत् कथमहं स्वर्गं प्राप्नुयामित्येवं साध्यत्वेन स्वर्गमिच्छन् स्वर्ग-
5 काम इत्युच्यते। यदि न स्वर्गसाधनं तत् कर्म तद्विरुद्धमेवेदमापतति स्वर्गं कामयते, यागं करोतीति हि अन्यदिच्छति अन्यत् करोतीति स्यात्। अतः कर्मणः काम्यमानसाधनतामप्रतिपद्यमानः स्वर्गकामस्तत्र नैवाधिक्रियते, न चानधिक्रियमाणस्तत्र सम्बध्यते। तदेवमधिकृतत्वेन स्वर्गकामस्य कर्मणि सम्बन्धात् स्वर्गयागयोश्च साध्यसाधनभावावगममन्तरेण तस्याधिकारनिर्वाहासम्भवादवश्यं
10 क्रियायाः साधनत्वं स्वर्गस्य च साध्यत्वमभ्युपगन्तव्यम्, अतश्च क्रियायाः फलं प्रति गुणभावान्न प्राधान्यमप्राधान्याच्च न वाक्यार्थत्वम्। तदुक्तम्, ''कर्माण्यपि जैमिनिः फलार्थत्वात्'' इति।

का चेयं क्रिया वाक्यार्थ इत्युच्यते ? य एष यागादिर्भावार्थो धातुवाच्य उत प्रत्ययार्थः कश्चित् तदतिरिक्त इति। तत्र भावार्थस्य काम्यमानसाधनत्वाद-

---

15 **कारकत्वानुगुणेति**। विशेषणसम्बन्धे हि विशिष्टः कर्ता भवति। विशेषणेन सम्बन्ध उपादेयत्वे सति विशेषणस्य भवति; यतो लोहितमुष्णोषमुपाददतेऽतो लोहितोष्णीषा भवन्ति। उपादेयत्वाभावात् तु विशेषणविशेष्यसम्बन्धाभावाद् विशिष्टस्य कर्तुरप्यभाव इत्यनुपादेयस्य विशेषणस्य कारकत्वानुगुण्यम्। **अधिकृतस्य कर्तृत्वमिति**। यतः स्वर्गकामोऽत्राधिकारो अतः स्वर्गकामेनेदं कर्तव्यमित्यधिकारोत्तरकालमार्थं
20 कर्तृत्वम्। यदि ह्यसौ न करोति तत्तद्विषयोऽस्याधिकारो निष्फल एव स्यात्। **न कर्तुरधिकारः**। स्वर्गकामकर्तृको यो यागस्तत्र स्वर्गकाम एवाधिकृत इति योग्यतालक्षणोऽधिकार आर्थः। तदाह, असौ स्वर्गकामकर्तृको भवति यदि तत्र स्वर्गकामोऽधिक्रियते। 'तवैतत् कर्म' इति आर्थमधिकृतत्वमिति। एतच्च न युक्तम्। यदि स्वर्गकामस्य कर्तृत्वेनान्वयः स्यात् स्यादयं पक्षः, स तु न सम्भवतीति तात्पर्यम्।
25 **कर्माण्यपीति**। जैमिनिराचार्यः कर्माण्यपि शेषभूतानि मन्यते। क्व तेषां शेषत्वं तदाह, फलार्थत्वादिति।

**प्रत्ययार्थः कश्चिदिति**। यागविषयः प्रयोजकव्यापारो भावनाख्यः।

प्राधान्यमुक्तमेव, प्रत्ययार्थोऽपि काम्यमानभावार्थगतसाध्यसाधनसम्बन्धापरि-त्यागेनैव प्रतीयमानो वाक्यार्थतामेति नान्यथेति। स चायं परेषामपि पक्षः। तस्मान्न क्रियामात्रपर्यवसायी वाक्यार्थ इति सिद्धम्।

**पुरुषस्य वाक्यार्थतावादिमतम्**

किमिदानीं फलस्यैव वाक्यार्थत्वं ( क्रियायाः ) कथमुत्सृष्टम्, अप्राधान्या-दिति चेत्, फले समानम्, फलमपि पुरुषार्थत्वादप्रधानम्। न हि स्वर्गः स्वतन्त्र एव सत्तां लभतामिति यतते पुरुषः, किन्तु स्वोपभोग्यतयैव सर्वमभिलषतीति। अतस्तस्यापि तदर्थत्वान्न प्राधान्यम्, आह च "फलञ्च पुरुषार्थत्वात्" इति। 5

हन्त तर्हि पुरुष एव वाक्यार्थो भवतु स ह्यनन्यनिष्ठः स्वतन्त्रत्वात्, उच्यते। पुरुषोऽप्यौदुम्बरीसंमार्जनादिषु विनियुज्यते एव, 'यजमानसंमिता औदुम्बरी भवति' इति तस्यापि तदर्थत्वमुक्तञ्च "पुरुषश्च कर्मार्थत्वात्" इति। 10

**उक्तानां क्रियादीनां वाक्यार्थत्वनिरसनम्**

यद्येवं सङ्कटे पतिताः स्मः, न विद्मः किं विदध्महे, क्रिया हि फलार्था फलञ्च पुरुषार्थम्, पुरुषः क्रियार्थ इति परिवर्तमाने चक्रे कस्य प्राधान्यं शिष्मः कस्य वाक्यार्थत्वम्? 15

उच्यते। पुरुषस्तावन्न वाक्यार्थः, आख्यातवाच्यत्व एव तस्य विवदन्ते का कथा वाक्यार्थत्वस्य। ननु कर्त्तरि लकार इति स्मरणात् कथं नाख्यातवाच्यः कर्त्ता, कोऽयं लकारो नाम? स हि वर्त्तमाने लडिति विधाय कर्त्तरि शप् युष्मदि मध्यमः अस्मद्युत्तमः शेषे प्रथमः, तिप्तस्झीति बहुषु बहुवचनम् 'द्व्येक-योर्द्विवचनैकवचने' इति वाक्यान्तरे विभज्य विवृतः। तदेतानि कारकसंख्या- 20

---

**साध्यसाधनसम्बन्धापरित्यागेनेति।** यजेत यागेन स्वर्गं भावयेत्; यतो यागात् स्वर्गो भवति अतो यागविशिष्टां भावनां कुर्यादिति।

**फलञ्च पुरुषार्थत्वात् पुरुषश्च कर्मार्थत्वादिति** जैमिनिसूत्रे पूर्वसूत्रद्वयानन्तर-भाविनी स्पष्टे।

**औदुम्बरीति।** उदुम्बराख्यवृक्षविशेषप्रकृतिका यष्टिर्यजमानमाना यां स्पृष्ट्वोद्गाता सामानि गायति। 25

विभक्तिविधायीनि सूत्राण्येकवाक्यतया व्याख्येयानि, एकार्थविषयत्वात् । एको हि पचतीत्यादिशब्दस्तैर्व्याक्रियते, तदेवमेष वाक्यार्थो भवति । कर्तुरेकत्वे एकवचनं तिप्, कर्तृद्वित्वे द्विवचनं तस्, कर्तृबहुत्वे बहुवचनं झि इति । सेयं कर्तृसंख्याख्यातवाच्या भवति न कर्तेति कुतस्तस्य वाक्यार्थत्वम् । अलं चानया
5 शास्त्रान्तरगर्भया द्राघीयस्या कथया, पुरुषस्तावन्न वाक्यार्थः । फलमपि न वाक्यार्थः, सिद्धासिद्धविकल्पानुपपत्तेः, सिद्धस्य तावत् फलस्याभिधानमेव नास्ति काम्यमानत्वेन निर्देशात् ।

**भावनाया अपि न वाक्यार्थत्वम्**

साध्यमानत्वपक्षे तु साक्षात् तत्सिद्धवेदनात् ।
10 व्यापार एष तन्निष्ठस्तर्हि वाक्यार्थ उच्यताम् ॥
अत एव हि वाक्यार्थं भावनां प्रतिजानते ।
यथोचितफलाढ्याञ्च त्रयसम्बन्धबन्धुराम् ॥

**केयं भावना ?**

केयं भावना नाम ? भाव्यनिष्ठो भावकव्यापारो भावना, भाव्यं हि स्वर्गादि
15 फलं साध्यमानत्वात्, साध्यत्वञ्चास्य भवनक्रियाकर्तृत्वाद्, भवनक्रियायाश्च कर्तृत्वमुत्पत्तिधर्मकस्य वस्तुनो दृष्टम् । न नित्यं भूतस्य नापि नित्यमभूतस्य । यथाह,

नित्यं न भवनं यस्य यस्य वा नित्यभूतता ।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥

20 स्वर्गादिश्च काम्यरूपोऽर्थः, खतत्पुष्पाभ्यां विलक्षण इति भाव्यो भवति । तन्निष्ठस्तदुत्पादकश्च पुरुषव्यापारो यः स भावना । सा ण्यन्तेन भवतिनोच्यते,

---

ननु कर्तुरवाच्यत्वे तद्गतायाः सङ्ख्यायाः कथं वाच्यत्वं सिद्धयति । नायं दोषः । क्रियाक्षेपलभ्यत्वात् कर्तृमात्रस्य, तद्गतानान्त्वेकत्वद्वित्वादीनां क्रियाक्षेपलभ्यत्वात् तेषामेव वाच्यत्वं युक्तमनेनैवाभिप्रायेणाह, **अलं चानया शास्त्रान्तरगर्भयेति** ।

25 **साक्षात् तत्सिद्धवेदनात्** । साक्षात् तदर्थव्यापारं विना ।

प्रकृत्यर्थस्य भवतेः कर्त्ता यः स्वर्गादिः स एव ण्यन्तस्य तस्य कर्मतां प्रतिपद्यते। कर्त्ता त्वस्य प्रयोजकः पुरुषः। णेश्चार्थो णिज्वाच्यः प्रयोजकव्यापारः। पुरुषो हि भवन्तं स्वर्गादिमर्थं स्वव्यापारेण भावयति सम्पादयति। स तत्सम्पादको व्यापारो भावनेत्युच्यते।

ननु व्यापारः क्रियैव, न तदतिरिक्तस्य व्यापारस्यासम्भवात्, क्रिया-व्यापारपक्षश्च प्रतिक्षिप्तः। उच्यते, न क्रियामात्रं भावना, अपि तु परिदृश्यमान-पूर्वापरीभूतयज्यादिभावस्वरूपातिरिक्तः पुरुषव्यापारः प्रत्ययात् प्रतीयमानो भावना। यथाह,

न सा केनचिदुत्पाद्या जनिका सा न कस्यचित्।
केवलं जननी ह्येषा जन्यस्य जनकस्य च॥ इति।

क्रियाकारकादिविलक्षणैव सा शब्दात् प्रतीयते इत्यर्थः।

ननु च यजेतेत्यत्र प्रकृत्यर्थो यागादिक्रिया प्रत्ययार्थस्तु प्रेरणारूपो विधिः कर्तृसंख्यादिश्च, न तु धात्वभिधीयमानव्यापारव्यतिरिक्तो भावनाख्यः प्रत्ययात् पुरुषव्यापारः प्रतीयते। न हि भावनावाचिनीं काञ्चिद् विभक्तिं स्मरति पाणिनिः लिङादिमिव विध्यादौ। तस्मान्न भावना वाक्यार्थः।

उच्यते। भावनापि प्रतीयत एवाख्याताद् यदि नैपुण्येन शाब्दी प्रतीति-रवमृष्यते।

आस्तां विधिपदं तावद् वर्त्तमानापदेशिनः।
शब्दाद् यजत इत्यादेर्भावना न न गम्यते॥

पचति पठति गच्छतीति, अतो यथा पाकादिर्धात्वर्थः प्रतीयते, तथा सर्वानुगतः कर्तृव्यापारोऽपि पाकाद्युपजनापायेऽपि व्यापारप्रतीतेरनपायात्। यथा ह्यौपगवः, कापटवः, औपमन्यव इत्युपगुप्रभृतीनामुद्धारश्च निक्षेपश्च प्रत्ययार्थोऽनुवर्त्तते तद्धितान्तेषु, तथा आख्यातेष्वपि सोऽनुवर्त्तमानो दृश्यते।

---

**न सा केनचिदिति।** भावार्थवदन्योत्पाद्यत्वं कारकवच्चान्योत्पादकत्वं तस्या नास्तीत्यर्थः। किन्तु यद्वशात् फलस्य जन्यताव्यपदेशो भावार्थस्य च जनकता सासौ जननी।

अपि च पचतीत्याख्यातपदस्य यदार्थो व्याचिख्यासितो भवति, तदा पाकं करोतीति पाकशब्देन द्वितीयान्तेन साध्यं धात्वर्थं व्याचक्षते कर्तृव्यापारात्मकं प्रत्ययार्थं करोतीति पदेन ।

किञ्च किं करोति देवदत्त इति पृष्टाः सन्तो द्वये वक्तारो भवन्ति करोति
5 पाकमिति पचतीति वा । तदिदमुभयरूपमप्युत्तरमेकार्थम्, अन्यथा न तेन प्रष्टा प्रत्याय्येत । तस्मात् पाकं करोतीति पदद्वयस्य योऽर्थः, स एवार्थ एकस्य पचतीति पदस्य । अत्रापि पचत्यर्थादन्यः करोत्यर्थः प्रतीयत एव, योऽसावन्यः करोत्यर्थः, स भावना ।

आह, न कर्तृसंख्यादिव्यतिरेकेण प्रत्ययाद् धात्वर्थातिरिक्तं व्यापारं प्रति-
10 पद्यन्ते, प्रतिपद्येरंश्चेत् करोतीत्यतोऽपि शब्दात् प्रतिपद्येरन् । करोतीत्यत्र प्रकृतिप्रत्ययवाच्ये क्रिये न विभज्य प्रदर्शयितुं शक्येते । उच्यते । नेदं साधु बुध्यसे । ( टिप्पणीस्थप्रतीकसदृशग्रन्थोऽत्र न दृश्यते )

यथा पाकं करोतीति प्रतीतिर्नास्ति लौकिकी ।
प्रत्ययार्थः करोत्यर्थे पचत्यादौ तु वर्त्तते ।।
15 कर्तृसंख्याप्रतीतौ च न विवादोऽस्ति कस्यचित् ।
तावता निह्नवः कार्यो न तु व्यापारसंविदः ।।

करोतीत्यादिशब्दाभिधेयया अनया यथा न भवितव्यं तथा विशिष्टेभ्यः शब्देभ्यस्तत्प्रतीतिरिष्यते न सर्वेभ्यः । के पुनस्ते विशिष्टाः शब्दा ये भावनामभिदधति ? उच्यते,

20 भावार्थाः कर्मशब्दा ये तेभ्यो गम्येत भावना ।
यजेतेत्येवमादिभ्यः स एवार्थो विधीयते ।।

---

**न विभज्य प्रदर्शयितुं शक्येते** इति । प्रकृतिप्रत्ययाभ्यामुभाभ्यामपि प्रयोजकव्यापारस्यैकस्यैवाभिधानात् ।

**स एव समुदायेनेति** । य एव पचतोत्यादौ प्रत्ययभागप्रतिपाद्यो व्यापारः, स
25 एवोभाभ्यां प्रकृतिप्रत्ययाभ्यां करोतीत्यनेन प्रतिपाद्यते ।

भवन्ति केचिद् भावार्था(ये)न कर्मशब्दाः । यथा भावो भवनं भूतिरिति । भवन्ति च केचित् कर्मशब्दा न भावार्थाः । श्येनादयः कर्मनामधेयतया प्राक्समर्थिताः । ये तु भावार्थाः कर्मशब्दा यजते ददाति जुहोति इत्येवमादयस्तेभ्यो भावनाख्या क्रिया गम्यते । तैरेव लिङादिविभक्त्यन्तैः सोऽर्थोऽभिधीयते यजेत दद्याज्जुहुयादिति । यद्यर्थः ण्यन्तेनाववगम्यते भावयेदिति च करोतिशब्दादपि 5
केवलात् कर्तृव्यापारो न नासाववगम्यते । स च यागादिकर्मणा नानुरक्तेन प्रयोगयोग्यतां प्रतिपद्यत इति विशिष्टेभ्य एव यजत्यादिशब्देभ्यो भावनाख्योऽनुष्ठेयः पुरुषव्यापारः प्रतीयत इति सिद्धम् ।

क्रियाविशेष एवायं व्यापारो ज्ञातुरान्तरः ।
स्पन्दात्मकबहिर्भूतक्रियाक्षणविलक्षणः ॥ 10

इत्येवं केचित्

---

**भवन्ति केचिद् भावार्था न कर्मशब्दा** इति । ननु भावशब्देन भावनाभिप्रेता । भवतेर्ण्यन्ताद् भाव्यतेऽनेनेति व्युत्पत्त्या परविकृतेन च भावो भवनं भूतिरित्यादिभिः स प्रत्याययितुं शक्यतेऽत एवमुदाहार्यं भावयेत् कुर्यादिति । अत्राहुः, भावशब्दस्तावद् णिजन्ताद्भवतेः परविकृते भावनावाच्ये वा भवनभूतिशब्दौ तु प्रयोज्यव्यापारांशेन 15
कथञ्चिद् भावार्थौ स्याताम् । श्येनैकत्रिकादयः । श्येनः प्रसिद्धः, एकत्रिकेण यजेतेत्येकत्रिकाख्यो यागविशेषः, एकस्यां तिसृषु चतसृषु यत्र स्तोत्राणि क्रियन्ते, स एकत्रिक इति । अकर्मशब्दत्वं चैषां भावो भवनं भूतिरित्यादीनां कर्मविशेषवाचकत्वाभावात्, निष्पाद्येन रूपेण भावनाया अनभिधानाद्वा । श्येनादयस्तु निष्कृष्टयागमात्रमाचक्षते न भावनामपि, यजिसामानाधिकरण्यं तेषामिति । प्राभाकरास्तु व्याचक्षते "कर्मशब्दा इत्येतद्विना 20
भावार्था इत्युक्ते भावो भवनमित्यादिभ्योऽपि अन्योत्पादनमात्रप्रतिपादकेभ्यः क्रियाप्रतीतिः प्रसज्येत । भावार्था इत्येतत्परिहारेण च कर्मशब्दा इत्युक्तान्योत्पादकत्वरहितसाध्यमात्रप्रतिपादकेभ्योऽपि श्येनादिशब्देभ्यः क्रियाप्रतीतिप्रसङ्गः । उभयोच्चारणे तु अन्योत्पादकत्वं पूर्वापरीभावस्य साध्यरूपत्वं येभ्योऽवगम्यते तेभ्यो यजेतेत्यादिभ्यः क्रिया प्रतीयत इति सिद्धं भवति । एकैकपदोच्चारणे हि विवक्षितार्थासिद्धिर्भावो भवनं 25
भूतिरित्यादिना भाष्यकृता दर्शिता च, स्वयञ्च व्याख्यातम् 'यज्याद्यर्थश्चातोऽवगम्यते भावयेदिति च' इति ।

पुरुषस्य प्रयत्नो वा भावनेत्यभिधीयते ।
औदासीन्यदशापायं पुमान् येन प्रपद्यते ।।
स यत्नो यागहोमादिक्रियानिर्वृतिकारणम् ।
तस्य च व्यतिरिक्तत्वं प्राय: सर्वोऽनुमन्यते ।।
5 स चायमात्मधर्मोऽपि न विभुत्वादिवन्मत: ।
साध्यरूपाभिसम्बन्धाद् धत्ते विषयतां विभो: ।।

इत्यपरे ।

अन्ये धात्वर्थसामान्यं भावनामभ्युपागमन् ।
यागदानाद्यनुस्यूतं रूपं गोत्वादिजातिवत् ।।

10 यथा हि शाबलेयादिष्वनुगतं गोरूपमवभासते व्यावृत्तञ्च शाबलेयादिरूपम्, एवमिहापि यागादिकर्मणामनुगतञ्च व्यापाररूपं प्रतिभासते । परस्परविभक्तञ्च यागादिरूपं यत् तदनुगतं व्यापाररूपं सा भावना । यथा च शाबलेयाद्यननुरक्तं पृथक्त्वेन गोत्वं दर्शयितुमशक्यम्, एवमिहापि शुद्धं यज्याद्यननुरक्तं व्यापाररूपं दर्शयितुमशक्यम्, तदुपरक्तत्वेन तस्य सर्वदावगमाद् । न चैतावता 15 तस्य नास्तित्वं सुखदु:खाद्यवस्थानुगतस्येवात्मन: । तथा च किं करोतीत्यनवगतविशेषव्यापारसामान्यप्रश्ने सति 'पचति पठति' इति तद्विशेषोत्तरवचनमनुगुणं भवतीति । तच्च सामान्यरूपमपि न गोत्वादिवत् क्रियात्ववद् वा सिद्धतयावभासते, येन विधेरविषय: स्यात् ।

अपि च यजेत दद्याज्जुहुयादिति सर्वत्र अपरित्यक्तपूर्वापरीभूतस्वभावं 20 तद्व्यापारसामान्यमवगम्यते, विधेश्च विषयतां प्रतिपद्यते । तदिदं सकलधात्वर्थसाधारणं साध्यमानावस्थं व्यापारसामान्यं भावनेत्युच्यते । तस्मिंश्च पक्षे धातुवाच्यत्वमपि भावनाया वक्तुं शक्यते । पाकादिशब्देभ्यो धातौ सत्यपि तदप्रतीतेर्न धातुवाच्यत्वं भावनाया इति चेद्, भवत्यादौ तर्हि प्रत्यये तदप्रतीते:

---

तस्य च व्यतिरिक्तत्वं यागादिक्रियाव्यतिरिक्तत्वम् ।
25 अपरित्यक्तपूर्वापरीभूतस्वभावं साध्यरूपम् ।
भवत्यादौ तर्हीति । भवत्यादौ हि प्रत्ययेन यो भवति, प्रयोज्यस्तद्व्यापारोऽभिधीयते, न तु यो भावयति तद्व्यापार इति ।

प्रत्ययवाच्यत्वमपि न स्यात् । तदलमनेन निर्धारणप्रयत्नेन, सर्वथा धातोर्वा प्रत्ययाद् वा भावनावगम्यत इति सिद्धम् ।

**भावनायाः सापेक्षत्वम्**

सा धातोः प्रत्ययाद् वापि भावनावगता सती ।
अपेक्षतेंऽशत्रितयं किं केन कथमित्यदः ॥　　5

भावयेदित्यवगते नूनमपेक्षात्रयं भवति, किं भावयेत् केन भावयेत् कथं भावयेदिति ? तत्र किमित्यपेक्षा स्वर्गकामपदेन पूर्यते, किं भावयेत् स्वर्गमिति ।

ननु स्वर्गकाम इति पुरुषनिर्देशोऽयं न फलनिर्देशः । सत्यम् । स्वर्गपर-स्त्वयं निर्देशः । उक्तं हि, निरतिशयप्रीतिवचनः स्वर्गशब्दः, प्रीतिश्च नान्यार्थे-त्यप्युक्तम् । साध्यत्वेन च स्वर्गः काम्यत इति स एव हि किमित्यंशे निपतति　　10
स्वर्गं भावयेदिति । स्वर्गं कामयते इति च व्युत्पत्तौ विस्पष्टमेव तस्य साध्यत्वम् । बहुव्रीहावपि तस्यैव साध्यत्वं विधिवृत्तपर्यालोचनयावधार्यते ।

एवं स्वर्गं भावयेदित्यवगते केन भावयेदित्यपेक्षायां यागेनेति सम्बध्यते । ननु यागेनेति न श्रूयते किन्तु यजेतेति । तच्चाख्यातपदं प्रकृतिप्रत्ययात्मक-समुदायरूपम्, तत्र लिङः प्रत्ययार्थस्य भावना वाच्येत्युक्तम् । यज् इति तु　　15
धातुमात्रमवशिष्टं तस्य कृदन्तस्य तृतीयान्तस्य यागेनेति योऽर्थः स कथ-मेकाकिना तेन प्रत्याय्येत ? उच्यते । भावना चेत् प्रत्ययार्थ इति सोढमायुष्मता ! यागेनेत्यभिसम्बन्धः सोढव्य एव । यो हि तस्यां यथा सम्बद्धुं योग्यस्तमसौ तथा प्रतीक्षते नान्यथेति । करणाकाङ्क्षापरिपूरणे सम्बन्धयोग्यो यजिरिति　　20
तथैवैष भावनयाभिसम्बध्यते ।

अप्रातिपदिकत्वाद्धि तृतीया तत्र मा स्म भूत् ।
शब्दसामर्थ्यलभ्या तु नूनं करणता यजेः ॥

कस्य पुनः शब्दस्य सामर्थ्यमेतद् ? भावनावाचिन इति ब्रूमः । तृतीययैव

---

**विधिवृत्तपर्यालोचनयेति ।** अपुरुषार्थसाधने प्रवर्तयतोऽपि विधिः प्रवर्तकत्वविधिः । पुरुषार्थस्तेन साध्यत्वेनापेक्ष्यमाणः सन्निहित एवापेक्ष्यते ।　　25

करणत्वमभिधानीयमिति नेयं राजाज्ञा । ततस्तदवगतेस्तथाभ्युपगम्यते एव-
मिहापि स्वर्गकामो यजेतेति तथावगतिर्भवन्ती किमिति न मृष्यते ।

आख्यातात् साध्यता या च धात्वर्थस्यावगम्यते ।
द्वितीया श्रूयते तत्र किं वा तदभिधायिनी ।।

5 नन्वेवं तर्हि धात्वर्थस्य साध्यतावगतेः किमित्यंशे यजिना पतितव्यम् ।
किं भावयेद् यागमिति । केनेत्यपेक्षिते वाक्यान्तरसमाहितं व्रीहिभिरित्यादि
सम्बध्यताम्, न पुनर्यजिः साध्यरूपव्यापाराभिधायिप्रत्ययोपसर्जनीभूतकर्मता-
मतिप्रत्यासन्नामनारुह्य दूरवर्त्तिनीं करणतामधिरोढुमर्हति ।

उच्यते । स्यादेतदेवं यदि हि स्वर्गकाम इति न श्रूयेत, तस्मिंस्तु श्रुते
10 नैवं भवितुमर्हति । कुतः,

स्वर्गे साध्यत्वसम्बन्धादलब्ध्वा साध्यतान्वयम् ।
यजिस्तदानुगुण्येन करणांशे च तिष्ठति ।।

स्वर्गस्य हि काम्यमानत्वात् प्रीत्यात्मकत्वेन चानन्यार्थत्वात् साध्यतायां
योग्यत्वात् किमित्यंशोपनिपाते सिद्धे तत्रालब्धनिवेशो यजिस्तदपेक्षितां करण-
15 तामेव योग्यत्वादवलम्बते ।

सामानाधिकरण्यञ्च ज्योतिष्टोमादिभिः पदैः ।
एवं सत्युपपद्येत करणत्वानुवादिभिः ।।

कर्मनामधेयत्वं ज्योतिष्टोमादीनां शब्दानामुक्तम् ।

ननु साध्यत्वपक्षसाक्षितामपि कर्मनामधेयानि भजन्ते अग्निहोत्रं जुहो-
20 तीति । नैष दोषः । साध्य एव भवन् भावार्थः साधनतामवलम्बते । तत्रापि हि
स्वर्गभावनायामग्निहोत्राख्यो होमः करणमेव, अन्यथा स्वर्गकामपदानन्वय-
प्रसङ्गादित्युक्तम् । नामधेयपदन्तु किञ्चित् कर्मतामनुवदति अग्निहोत्रमित्यादि,
किञ्चित्करणतां ज्योतिष्टोमेनेति । तस्माद् यजेः करणत्वेनैवान्वय इति सिद्धम् ।

---

ततस्तदवगतेरिति । ततस्तृतीयान्तात् ।

25 प्रत्ययोपसर्जनीभूत इति । "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः" इति
प्रत्ययार्थस्य प्राधान्यात् प्रकृत्यर्थस्योपसर्जनत्वम् ।

यत्तु प्रत्यासन्नत्वात् साध्यांशोपनिपातितेत्युच्यते, तदयुक्तम् । योग्यत्वाविरोधिनी प्रतिपत्तिः सम्बन्धकारणं न तद्विपरीता । योग्यत्वञ्च स्वर्गस्यैव साध्यतायां यजेश्च करणतायामित्युक्तम् ।

एवं यागेन भावयेदित्यवगते कथमित्यपेक्षायाम् इतिकर्त्तव्यता तद्वाक्यपठिता वाक्यान्तरनिवेशिता वा सम्बध्यते । तद्वाक्योपात्ता तावद् यथा "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इति, वाक्यान्तरोपात्ता "व्रीहीनवहन्ति" "तण्डुलान् पिनष्टि" "समिधो यजति" "तनूनपातं यजति" इति ।

इतिकर्त्तव्यता हीष्टा दृष्टादृष्टप्रयोजना ।
प्रायः सर्वत्र भावार्थे कथमंशोपपादिनी ॥
दृष्टोपकारद्वारेण सम्बन्धे पेषणादिका ।
इतिकर्त्तव्यता ज्ञेया सन्निपत्योपकारिणी ॥
भावार्थमनुगृह्णाति या त्वदृष्टेन वर्त्मना ।
समिधाद्यात्मिकामाहुस्तामारादुपकारिणीम् ॥
एवमंशत्रयाश्लेषलब्धानुष्ठानयोग्यताम् ।
भावनामीदृशीं प्राप्य वृत्तिर्विधिनिषेधयोः ॥

'दर्शपौर्णमासाभ्यां यजेत स्वर्गकामः' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्रानन्तरोक्तनीत्यैष वाक्यार्थो जातो दर्शपौर्णमासेन यागेन स्वर्गं भावयेद् अनयाग्न्यन्वाधानादिकयेतिकर्त्तव्यतयेति ।

किमर्थं पुनर्विधिराश्रीयते, वर्त्तमानापदेशिष्वप्याख्यातेषु भावना प्रतीयत इति दर्शितवान् भवान्, अतः किं विधिना ? तस्य ह्याश्रयणं स्वर्गयागयोः साध्यसाधनभावबोधनाय, प्रवृत्तिनिवृत्तिसिद्धये वा। साध्यसाधनसम्बन्धस्तावदाकाङ्क्षासन्निधियोग्यतापर्यालोचनया वर्त्तमानापदेशिनोऽप्याख्याताद् भावनावगमे

---

'एतस्यैव रेवतीषु वारवन्तीयम्' इत्यत्र वाक्ये रेवतीषु वारवन्तीयसामकरणाख्येतिकर्तव्यतोपात्ता प्रधानं यजिश्च ।

अग्न्यन्वाधानादिकयेति । 'ममाग्ने वर्चो विहवेष्वस्तु' इत्यादिना मन्त्रेण क्रियमाणमग्नौ समिदाधानमग्न्यन्वाधानं दर्शपूर्णमासयोः प्रारम्भे ।

सति भवत्येवान्तरेणापि विधिम् । प्रवृत्तिरपीच्छानिबन्धना स्वर्गस्य साध्यत्वे यागस्य च साधनत्वेऽवधारिते यः स्वर्गमिच्छेत्, स तत्सिद्धये प्रवर्त्तत एव । यस्तु नेच्छेत्तस्य विधिरपि किं कुर्यात् ? न ह्यप्रवर्त्तमानस्य पुंसो विधिर्निगडे पदं निदधाति रज्ज्वा वा बाहू बध्नाति । निषेधाधिकारेऽपि सुरापानब्राह्मण-
5 हननादेः प्रत्यवायसाधनत्वावधारणात् तत्परिजिहीर्षया पुरुषो निवर्त्तेतेति प्रवृत्तिनिवृत्त्योर्न कारणं विधिरिति तदर्थमपि विधिपदाश्रयणमसाम्प्रतम् ।

**विधिस्वरूपविचारः**

कश्चायं विधिर्नामेत्येतदपि न विद्मः, ननु चाहुः,

विधेर्लक्षणमेतावदप्रवृत्तप्रवर्त्तनम् ।
10 अतिप्रसङ्गदोषेण नाज्ञातज्ञापनं विधिः ॥

बाढम् । श्रुतोऽयं श्लोकः । किन्तु कोऽसावप्रवृत्तप्रवर्त्तक इति न जानीमः, प्रवर्तकस्वरूपे हि संशेरते प्रवादुका इति । किं लिङादिः शब्द एव प्रवर्तकः, तद्व्यापारो वा, तदर्थो विनियोगः फलं वा, स्वर्गादिश्रेयःसाधनत्वं वा, रागादिर्वा । प्रवर्तकस्वरूपानवधारणाद् विधेरप्यनवधारणमिति । यत् तावदुक्तं
15 किं विध्याश्रयणेनेति ? तत्रोच्यते ।

यदयं साधनत्वेन यजेरभिहितोऽन्वयः ।
स्वर्गस्य च फलत्वेन स एव महिमा विधेः ॥

विधिवचनमन्तरेण हि स्वर्गकामो यजेतेति पुरुषलक्षणार्थः स्वर्गकाम-शब्दः शुक्लो होतेतिवत् स्यात् । ततश्चैकपदोपादानलक्षणप्रत्यासत्तिसम्बन्ध-
20 निसर्गघटितपूर्वापरीभूतस्वभावधात्वर्थसाध्यतातिक्रमेण दूरात् स्वर्गस्य साध्य-त्वमन्यत्रोपसर्जनीभूतस्य कथं कल्पयितुं शक्यते ? तस्मादेष विशिष्टः साध्य-साधनसम्बन्धो विधिप्रसादलभ्य एव भवति नान्यथेति विधिराश्रयणीयः ।

---

**अतिप्रसङ्गदोषेणेति** । अज्ञातज्ञापने हि विधौ 'ग्रामं भवान् लप्स्यते' इत्यादेः सामुद्रविद्याव्याख्यानस्यापि विधित्वप्रसङ्गात् ।

25 **शुक्लो होतेतिवत्** । यथर्त्विजां मध्ये शुक्लगुणेन होता लक्ष्यते एवं स्वर्गकामनया पुरुषो लक्ष्यत इति ।

कथं पुनर्विधिरप्यमुं साध्यसाधनभावं बोधयति ? इत्थं बोधयति । स हि सप्रत्ययप्रवर्तकस्वभावः, न चापुरुषार्थरूपे व्यापारे पुरुषः प्रेर्यमाणोऽपि सत्यप्रत्ययः, प्रवर्तमानेऽपि पुंसि प्रवर्तकत्वाख्यनिजस्वरूपसङ्कोचमाशङ्कमानो विधिः पुरुषार्थस्वभावं स्वर्गं साध्यतया व्यवस्थापयति यागञ्चास्य साधनतया इति, एवं ह्यवबोधयतोऽस्य प्रवर्तकत्वं निर्वहति । 5

यत्तु, दर्शिते स्वर्गादौ फले न प्रवर्तते चेत् पुरुषः किं विधिः कुर्यादिति, तदप्ययुक्तम् । न हि वाय्वादिवत् पुरुषस्य प्रवर्तको विधिः । वाय्वादिः खलु सप्रत्ययमपि तदितरमपि प्रवर्तयति, विधिस्तु सप्रत्ययस्यैव प्रवर्तकः । सप्रत्ययस्य चैतावत् प्रवर्तनं यत् प्रवर्तितोऽहमिति ज्ञानजननम् । न फलमदर्शयता विधिना सप्रत्ययस्य ज्ञानं जनयितुं शक्यम्, फले तु दर्शिते सति तदस्य ज्ञानं जनितमेव । 10 अनेन जनिते ज्ञाने प्रमाणवृत्तेन प्रवर्तित एवासौ विधिना पुरुषः । आलस्यादिनानर्थित्वेन वा बहिः प्रवृत्तिपर्यन्ततया चेत्, न प्रवर्त्तते, मा प्रवर्तिष्ट, विधिना तु स्वकर्त्तव्यं कृतम्, प्रवर्तितोऽहमिति ज्ञानजननात् । अन्यो हि प्रवर्तनावगमोऽन्यश्च बाह्यो व्यापारः ।

एवं विधिवशादेव साध्यसाधनभावधीः । 15
सा हि प्रथमनिर्वृत्तप्रेरणाज्ञानपूर्विका ॥

यजेतेति प्रेरणा प्रतीयमाना साध्यसाधनसम्बन्धमनवबोधयन्ती विधौ न निर्वहतीति तत्कृतस्तदवबोध उच्यते । निषेधे न हन्यादिति निषेध्यमानस्य भावार्थस्यानर्थतामनवबोधयन् विधिर्न रागतः प्रवर्तमानं पुमांसं निरोद्धुमुत्सहते, इति विधेयवन्निषेध्येऽपि तस्यैव व्यापार इत्यवश्याश्रयणीयो विधिः । 20

यश्चैषः पर्यनुयोगः किमर्थं विधिराश्रित इति, स खलु सरलमतिकृत इव लक्ष्यते । न हि वयमद्य कृतं विधिमाश्रयेम जहीमो वा, प्रतिपत्तारो हि वयं वेदस्य न कर्तारः । तत्र च सविधिकानि यजेत स्वर्गकाम इतिप्रभृतीनि वाक्यानि श्रूयन्ते । तेषां मीमांस्यमानोऽर्थं ईदृगवतिष्ठते, स्वर्गः साध्यो यागः 25 साधनमिति । स चायं विधिसामर्थ्यलक्ष्य इति युक्तं विधेराश्रयणम् ।

---

**यश्चैषः पर्यनुयोग इति ।** 'वाक्यान्तरे समर्थेऽपि किमर्थं विधिराश्रितः' इति भाट्टं पर्यनुयोगं सूचयति ।

**विधेः प्रवर्त्तकत्वम्**

यत्तु, प्रवर्त्तकस्वरूपानिश्चयाद् विधेरनिश्चय इति तत्राप्युच्यते। फलं तावन्न प्रवर्त्तकम्, सिद्धासिद्धविकल्पानुपपत्तेः। सिद्धस्य फलस्याप्रवर्त्तकत्वं सिद्धत्वादेव। न हि यद् यस्यास्ति, स तदर्थं यतते। नाप्यसिद्धस्य खरविषाणप्रख्यस्य फलस्य 5 प्रवर्तकत्वं युक्तम्, अदृष्टत्वात्।

अथ कामनाविषयीकृतं फलं प्रवर्तकमिष्यते, सेयं कामनैव प्रवर्त्तिकोक्ता भवति, न फलम्। उपजातप्रवृद्धतररागस्यापि काम्यमानोपायपरिच्छेदमन्तरेण प्रवृत्त्यनुपपत्तेः। न हि स्वर्गकामः सांग्रहिणीमनुतिष्ठति। तद्वरं श्रेयःसाधनं प्रवर्तकम्, लोकेऽपि चैवमेव व्यवहारो दृश्यते। हरीतक्यादीनामारोग्यसाधनतां 10 वैद्याचार्यचोदनातोऽवगत्य तदुपायादावातुरो जनः प्रवर्त्तते। तृप्तिसाधनता-मोदनस्य मन्यमानस्तद्भक्षणाय बुभुक्षितः प्रवर्त्तत इति श्रेयःसाधनत्वमेव प्रवर्त्तकम्।

एतदपि न चतुरस्रम्। श्रेयःसाधनत्वं ह्यनवगतमवगतं वा प्रवर्तकं भवेत्? नानवगतमव्युत्पन्नस्य प्रवृत्तेरदर्शनात्, यो हि हरीतकीनामारोग्यहेतुतां न कुत-15 श्चिदधिगतवान्, नासौ तदर्थ्यपि तामुपयुङ्क्ते। तस्मात् तद्बोधहेतुः प्रवर्त्तकः। स च दृष्टे विषयेऽन्वयव्यतिरेकादेरपि सम्भवति। किं तेन, अदृष्टे तु विषये श्रेयःसाधनाधिगमः शब्दैकनिबन्धन इति तदधिगमोपायः शब्द एव प्रवर्तकः। अत एव शब्दोऽपि न स्वरूपमात्रेण प्रवर्तकः, वाय्वादितुल्यत्वप्रसङ्गात्। यदि पवन इव, पिशाच इव, कुनृप इव शब्दः प्रवर्तको भवेत्, अनवगतशब्दार्थ-20 सम्बन्धोऽपि श्रवणपरवशः प्रवर्त्तेत। न चैवमस्ति, तस्मादर्थप्रतीतिमुपजनयतः शब्दस्य प्रवर्तकत्वम्। न च नाम लिङादिरेव शब्दः प्रवर्तकाभिधानद्वारेण प्रवर्तको भवितुमर्हति। शब्दस्य च ज्ञापकत्वात् चक्षुरादिकारकवैलक्षण्ये सत्यपि प्रतीतिजन्मनि करणत्वमपरिहार्यम्। करणञ्च कारकं कारकञ्च न निर्व्यापारं स्वकार्यनिर्वृत्तिक्षममिति व्यापारस्तस्य अवश्यम्भावी। लिङादेः शब्दस्य न

---

25 **शब्दस्य च ज्ञापकत्वादिति।** चक्षुरादीनि ह्यगृहीतसङ्गतीनि प्रतीतिं जनयन्ति। अतस्तानि कारकाणि बीजादिवन्न, धूमादिवज्ज्ञापकानि, सङ्गतिग्रहानपेक्षणादिति।

प्रतीतिजन्ममात्रे व्यापारः, किन्तु पुरुषप्रवृत्तावपि तथावगमात् । लिङर्थावगमे सति प्रवृत्तिर्दृश्यत इति तत्रापि लिङ्व्यापारः प्रभवति । स चायं लिङादि-व्यापारः शब्दभावनानामधेयो विधिरित्युच्यते । स एव च प्रवर्तकः ।

**भावनाविभागः**

इह हि लिङादियुक्तेषु वाक्येषु द्वे भावने प्रतीयेते, शब्दभावनार्थभावना चेति । 5

तत्रार्थभावना तावद् धात्वर्थातिरिक्तप्रयोजकव्यापारात्मिका दर्शितैव । यो भवनक्रियाकर्तृविषयः प्रयोजकव्यापारो पुरुषस्थो यत्र भवनक्रियायाः कर्ता स्वर्गादिः कर्मतामापद्यते सोऽर्थभावनाशब्देनोच्यते, व्याख्यातश्चासौ ।

यस्तु शब्दगतः प्रयोजकव्यापारो यत्र पुरुषप्रवृत्तिः साध्यतां प्रतिपद्यते सा शब्दभावना । तथा ह्युक्तम् "अभिधाभावनामाहुरन्यामेव लिङादयः" इति । 10

लिङन्तशब्दश्रवणे हि यथा यज्याद्यवच्छिन्नं स्वव्यापारं पुरुषोऽधि-गच्छति तथा तदनुष्ठाने प्रेरितोऽहमित्यपि प्रतिपद्यते । तेनानुष्ठेयार्थप्रति-पादन इव प्रेरणायामपि शब्दस्य सामर्थ्याद् भावनाद्वयप्रतिपादकं लिङादियुक्तं वाक्यमिष्यते । 15

ततः पुरुषव्यापारश्चार्थभावना शब्दव्यापारश्च शब्दभावनावगम्यते । शब्दव्यापारात्मकत्वाच्च शब्दभावनाशब्देनाभिधीयते । अनवगता च सती न कार्याङ्गमिति शब्देन साभिधीयतेऽपि । तदुक्तम् "अभिधत्ते करोति च" इति । 20

**शब्दभावनाया अपि अंशत्रयापेक्षित्वम्**

ननु शब्दभावनापि भावनात्मकत्वादर्थभावनावदंशत्रयमपेक्षत एवेति तदस्या दर्शयितव्यम् । उच्यते । भव्यांशे तावदस्याः पुरुषप्रवृत्तिरुपनिपत-तीति उक्तमेव, पुरुषप्रेरणात्मको हि विधिः शब्दभावनेति । तत्साध्या

---

**अभिधाभावनेति ।** यं कुर्वन्नभिधेयप्रतिपत्तिं जनयेत् शब्दः सोऽभिधात्मको व्यापारोऽभिधाभावना । अभिधाभावनामित्यस्योत्तरमर्धम्, 'अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते' इति । 25

पुरुषप्रवृत्तिरेव तत्र भव्यतां प्रतिपद्यते । करणांशे तु तस्या नियोज्यविषय-समर्पकपदव्यापारो निविशते । यथा हि यज्यादिना स्वर्गादिर्भव्यः सम्पद्यत इत्यर्थभावानायामसौ तत्करणतामवलम्बत एवमिहापि नियोज्यपुरुषप्रवृत्ति-र्विषयाद्यवगमात् संपद्यत इति तदभिधायकशब्दव्यापारस्तत्र करणतां प्रतिपद्यते ।
5 इतिकर्त्तव्यतांशे तु अर्थवादपदव्यापारोऽस्या अवतिष्ठते । केवलं विधिपदश्रवणे हि सति न तथा प्रवर्त्तयितुमुत्सहन्ते श्रोतारः, यथा अर्थवादजनितबहुप्रकारकर्म-प्राशस्त्यज्ञानपरितोषितहृदयाः सन्त इत्यर्थवादाः प्रवृत्त्यतिशयहेतवः, तेन तद्व्यापार इतिकर्त्तव्यतांशमस्याः पूरयतीति । एवं नियोज्यव्यापारो भव्यो विषयादिसमर्पकपदव्यापारः करणम्, अर्थवादव्यापार इतिकर्तव्यतेति, सेयं
10 त्र्यंशा शब्दभावना, सैव च विधिः ।

**विधिभावनयोः सम्बन्धः**

न च विधेर्वाक्यार्थानन्वयलक्षणो दोष आशङ्कनीयः, यत एकप्रत्ययो-पादानलक्षणया प्रत्यासत्त्या तदन्वितावगमात् । आहुश्च,

विधिभावनयोस्त्वेकप्रत्ययग्राह्यताकृतः ।
15 धात्वर्थात् प्रथमं तावत् सम्बन्धोऽध्यवसीयते ।। इति ।

विधिर्भावनायां पुरुषं नियुङ्क्ते । यथाह "स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यते" इति, तयोः कथमन्वयः स्यात् ?

ननु च त्वयैवोक्तं धात्वर्थात् पूर्वतरं तावद् भावनाया विधेश्च सम्बन्धोऽव-

---

**नियोज्यविषयसमर्पकपदव्यापारो निविशत इति ।** नियोज्यविषयप्रतिपादकत्वं
20 तद्व्यापारः ।

**इतिकर्त्तव्यतांश इति ।** यावद् ह्यर्थवादाः स्वार्थप्रतिपादनलक्षणे व्यापारे न प्रवर्तन्ते तावच्छ्रुतमात्रेभ्यस्तेभ्यः प्रवृत्त्यभाव इति ।

**न च विधेर्वाक्यार्थानन्वय इति ।** वाक्यार्थेन भावनया साध्यं साधनमितिकर्तव्यता च सम्बध्यते । न चैवंरूपता विधेरस्तीति ।

25 **'स्वव्यापारे हि पुरुषः'** इत्यस्योत्तरमर्धम्—'प्रेष्यस्तस्य च किंकर्मभावनांश-त्रयात्मिका ।' किंकर्मकः स्वव्यापार इति ।

गम्यते । एकपदोपादानेऽपि धात्वर्थस्तावत् प्रकृत्यंशाभिधेयः, विधिभावने तु द्वे अपि प्रत्ययांशेनाभिधीयेते इति । अतश्च स्वच्छैव भावना विधिना स्पृश्यते न विषयानुरक्ता । स्वच्छा न प्रयोगयोग्या भवति । या च फलकरणेतिकर्तव्यतांशपरिपूर्तिप्रस्थिता प्रयोगयोग्या न तां विधिः स्पृष्टवान् । अविधिस्पृष्टेषु च धात्वर्थकारकादिषु किमिति स चेत् पुरुषः प्रवर्त्येतेति, उच्यते । यद्यपि विधिरनधिगतधात्वर्थानुरागतया स्वच्छामेव भावनामेकाभिधानत्वात् प्रथममाक्षिपति तथा हि तादृशि तस्यां सप्रत्ययप्रवर्तमानात्मनिजस्वरूपनिर्वहणमलभमानो न तावत्येव विरमति, किन्तु परिणीतबालकन्यको वर इव तावद् विलम्बमानः प्रसारितहस्त आस्ते यावत् सर्वाङ्गसुन्दरी प्रयोगयोग्या भावना भवति । आह च,

यद्यप्यन्यैरसंस्पृष्टां विधिः स्पृशति भावनाम् ।
तथाप्यशक्तितो नासौ तन्मात्रे पर्यवस्यति ॥
अनुष्ठेये हि विषये विधिः पुंसां प्रवर्त्तकः ।
अंशत्रयेण चापूर्णां नानुतिष्ठति भावनाम् ॥
तस्मात् प्रक्रान्तरूपोऽपि विधिस्तावत् प्रतीक्षते ।
यावद् योग्यत्वमापन्ना भावनान्यानपेक्षिणी ॥ इति ।

सा हि वाक्यान्तरोपात्तमप्यपेक्षते, प्रकरणान्तराधीतमपि वाञ्छति, प्रकृतिवद् भावलभ्यमपि याचते, अर्थसामर्थ्यगम्यमपि स्पृहयति, इत्येकविध एष शब्दप्रमाणमहिमेति । स चायं व्युत्पादनक्रम ईदृशो व्याख्यातृभिरुपदिश्यते । इत्थमस्य वाक्यार्थः पुनर्भावनात्मावगम्यमान एकयैव बुद्ध्यानेकजातिगुणद्रव्यक्रियाद्यङ्गकलापकल्माषिततनुरवगम्यते । तादृश्येकैवेयं वाक्याद् वाक्यार्थबुद्धिः । आह च,

भावनैव हि वाक्यार्थः सर्वत्राख्यातवत्तया ।
अनेकगुणजात्यादिकारकार्थानुरञ्जिता ॥

---

**स्वच्छैव भावना विधिना स्पृश्यते, कुर्यादिति ।**

**अर्थसामर्थ्यगम्यमिति ।** यथा 'स्रुवेणावद्यति' इत्यवदानं स्रुवेण क्रियमाणं द्रव्याणामेव क्रियते न मांसादीनाम्, तेन तेषां खण्डनस्य कर्तुमशक्यत्वात् ।

एकयैव च बुद्ध्यासौ गृह्यते चित्ररूपया ।
पदार्थाहितसंस्कारचित्रपिण्डप्रसूतया ।। इति ।।

एक एवायमतिदीर्घः क्रमविकस्वरः सकलाङ्गपरिपूरितभावनातत्त्वविषयः प्रतिभासः । यथा हि स्थाल्यधिश्रयणात् प्रभृति आ निराकाङ्क्षौदननिष्पत्ते-
5 रेकैवेयं पाकक्रिया, सलिलावसेकतण्डुलावपनदर्वीविघट्टनास्रावणाद्यनेकक्षण-समुदायस्वभावा, तथा प्रथमपदज्ञानात् प्रभृति आ निराकाङ्क्षवाक्यार्थ-परिच्छेदादेकैवेयं शाब्दी प्रमितिः । आह च

पदात् प्रभृति या चैषा प्रज्ञा ज्ञातुर्विजृम्भते ।
पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यति ।।

10 इति कृतमतिविस्तरेण ।

सोऽयं वाक्यार्थो भावनानामधेयः कर्तृव्यापारः, स्वर्गयागादिरर्थः । यस्तु व्यापारः प्रैषरूपो लिङादेर्वाच्यः कार्यो वा, तं विधिं सङ्गिरन्ते ।

**शाब्दीभावनाया वाक्यार्थत्वम्**

तदेतदननुमन्यमाना अन्ये प्रचक्षते, योऽसौ शब्दभावनाख्यः शब्दव्यापारः
15 शब्दस्य कार्योऽभिधेयश्च तमभिदधतः कुर्वतो वा शब्दस्य व्यापारान्तरमस्ति न वा । यदि तावन्नास्ति तदेष व्यापारान्तरनिरपेक्षस्वव्यापारमिवार्थमपि वदतु, विश्राम्यतु व्यापारकल्पना । अस्ति चेदेतदभिधाने व्यापारान्तरं तदानवस्था-प्रतीकारः कश्चिदन्वेष्यः । न चासौ दूरादपि लभ्यते । भूतपरिस्पन्दव्यतिरिक्त-व्यापारनिरासश्च प्रमाणसामान्यलक्षणे विस्तरेण कृत इत्यसौ मार्गं इहाप्य-
20 नुसरणीयः ।

यश्चासौ व्यापारः क्रियते चाभिधीयते च, स किं पूर्वमभिधीयते ततः क्रियते, पूर्वं वा क्रियते पश्चादभिधीयते, युगपदेव वा अस्य करणाभिधान इति ।

---

पदार्थाहितसंस्कारेति । पदार्थाहितानां संस्काराणां यश्चित्रो नानारूपः सङ्घात-स्तज्जन्या ।

25 यस्तु व्यापारः प्रैषरूप इति प्रेरणारूपः । 'वा'शब्दः समुच्चये ।

न तावत् पूर्वमभिधीयते, अनुत्पन्नस्याभिधानानुपपत्तेः, न ह्यजाते पुत्रे नामधेयकरणम्, अर्थासंस्पर्शी च तथा सति शब्दः स्यात् । तत एव न युगपदुभयम्, अनुत्पन्नत्वानपायात्, प्रयत्नगौरवप्रसङ्गाच्च । नापि कृत्वाभिधानम्, विरम्य व्यापारासंवेदनात् ।

अपि चायं तपस्वी लिङादिः प्रत्ययः सत्यपि गोवृन्दारकत्वे कथम् 5 अमुमतिबृहन्तं भारं वक्ष्यति कर्तारञ्च तत्संख्याञ्चाख्यास्यति । अर्थभावनामभिधास्यते शब्दभावनाञ्च करिष्यति ताञ्च वदिष्यतीति दुर्वहोऽयं भारः । कश्चायं शब्दभावनानामधेयस्य विधेर्वाक्यार्थे भावनायामन्वय इति वक्तव्यम् ।

ननूक्त एवैकप्रत्ययाभिधेयत्वलक्षणः सम्बन्ध इति, न ब्रूम आभिधानिकः 10 सम्बन्धो नोक्त इति, किन्तु पुरुषव्यापारात्मिकाया अर्थभावनायाः प्रधानत्वेन वाक्यार्थत्वात् तदपेक्ष्यमाणफलकरणेतिकर्त्तव्यतांशपूरणेन स्वर्गकामादिपदान्तराभिधेयोऽर्थः समन्वेति । गुणत्वेन शब्दव्यापारस्तु तदपेक्षितमन्यतममपि नांशं पूरयितुमलमिति तत्र न गुणतामवलम्बते । न च द्वयोः प्रधानयोर्घटः पट इतिवद् वा पचति पठतीतिवद् वा सम्बन्ध उपलभ्यते । 15

अथार्थभावना शब्दभावनाख्यस्य विधेर्विषयसमर्पणेन गुणतामवलम्बते विधिः, तर्हि वाक्यार्थो न भावना तस्या अप्राधान्यात् । अतो भावनाद्वयं प्रत्ययार्थ इति न हृदयङ्गममेतत् ।

एकाभिधानाभिधेयत्वं न भावनयोरन्योन्यसमन्वये कारणम्, अक्षाः

---

**अर्थासंस्पर्शीति** । अनुत्पन्नत्वेनासत्समत्वाद् व्यापारस्य तद्विषयत्वे शब्दस्यार्थासंस्पर्शित्वम् । 20

**सत्यपि गोवृन्दारकत्व इति** । प्रशस्तो गौर्गोवृन्दारकः । यथा गोवृन्दारकोऽपि वृषभो नासह्यं भारमुद्वोढुमलम्, एवं वाक्पर्यायत्वाद् गोशब्दस्य लिङपि गौः, प्रमाणान्तरानवगम्यमानार्थप्रतिपादकत्वात् प्रशस्तस्वभावतः सोऽपि गोवृन्दारकः ।

**विषयसमर्पणेनेति** । प्रेरणा हि प्रेर्यं विषयं वापेक्षत इत्यपेक्षितसमर्पणाद् 25 गुणत्वम् ।

पादा माषा इत्यादावदर्शनात् । किञ्च कस्यानुरोधेन द्वे भावने प्रत्ययवाच्ये इष्येते ? उच्यते । लिङ्गादिशब्दश्रवणे सति कार्ये च प्रेरणायाञ्च न द्विरुत्पद्यते मतिः ।

यद्येवमेक एव तादृशोऽसौ लिङर्थो भवतु तदेकत्वाच्च न परस्पर-
5 समन्वयश्चिन्तयिष्यते, न च प्रत्ययेऽप्यतिभार आरोपयिष्यते ।

**नियोगस्य वाक्यार्थत्ववादः**

नन्वेकस्यापि लिङर्थस्य यदि शब्दः कार्यत्वं प्रेरणाञ्च ब्रवीति ततस्तद-वस्थ एवातिभारः । कश्चासावेकः कार्यात्मा प्रेरणात्मा च तस्यार्थः ? उच्यते । यो लिङादेः प्रत्ययादवशिष्यते यमभिवदतो न तस्यातिभारो यत्र न तद्व्यति-
10 रेकेण प्रमाणान्तरं क्रमते, स नियोगो नाम वाक्यार्थः । तथा हि शब्दव्यव-हारतः शब्दानामर्थे व्युत्पत्तिरित्यत्र तावदविवादः । एवं व्यवहारे च वाक्यार्थे वाक्यस्य व्युत्पत्तिर्वाक्येन सर्वत्र व्यवहारात् । तत्र यजेतेत्यादि-तिङन्तपदयुक्तेषु वाक्येषु पदान्तराणामर्थस्तावदास्ताम्, आख्यातार्थे ह्यवगते तदानुगुण्येनासौ स्थास्यति । आख्यातस्य च यजेतेत्येवमादेरर्थः परीक्ष्यमाणः
15 प्रेरणात्मक एवावतिष्ठते । यतः पदान्तरसन्निधाने सत्यपि न प्रेरणाबुद्धि-रुपजायते । आख्यातपदश्रवणे सति सा जायते, तस्मात् तस्यैव प्रेरणात्मकोऽर्थः । तत्रापि तु जुहोत्यादिधात्वन्तरोपजननापायपर्यालोचनया धातोस्तत्प्रतीतौ व्यभिचारात् प्रत्ययस्य चाव्यभिचारात् तस्यैव सोऽर्थ इति शस्यते । कः पुनरसावर्थो यस्मिन् सति नियुक्तोऽहमत्रेति प्रतिपद्यते पुरुषः ? सोऽसावर्थ एव
20 विधिरित्युच्यते ।

विधौ हि लिङादिप्रत्ययं स्मरति पाणिनिः, न धात्वर्थे, यागादौ, न कर्तृ-व्यापारे, भावनायाम् । विधिश्च नाम प्रेरणात्मक एव । अत एव वर्तमानापदेशि-काख्यातजनितप्रतीतिविलक्षणेयं प्रतीतिर्यजेतेति । अत्र हि प्रैष्यप्रैषयोः सम्बन्धोऽ-वगम्यते । किमन्यश्चात्र क्रियाकर्तृसम्बन्धो नावगम्यते ? न ब्रूमः नावगम्यते
25 इति । किन्तु प्रैष्यप्रैषलक्षणोऽपि सम्बन्धः प्रथममवगम्यते, प्रेषितो हि क्रियां कर्तुमुद्यच्छतीति ।

ननु क्रियासम्बन्धितयैवासौ प्रेष्यते यजतां भवानिति । सत्यम् । क्रियासम्बन्धितयैव प्रेष्यते । प्रेष्यते तु सः, प्रेष्यते चेदयमन्यस्तर्हि सम्बन्धः क्रियासम्बन्धात्तूभयसम्बन्धितामस्य राजगवीक्षीरवदवगमिष्यामः । यथा गौ राज्ञा च सम्बध्यते क्षीरेण च, या राजसम्बन्धिनी सा क्षीरसम्बन्धिनी, या क्षीरसम्बन्धिनी सा राजसम्बन्धिनी । एवमिहापि पुरुषः प्रेषितेन च सम्भन्त्स्यते क्रियया च, यः प्रेष्यते स करोति, अथ यः करोति प्रेष्यते स इति । 5

ननु नेदमुभयं भवति । प्रैषोऽपि क्रियैव । प्रवर्त्तनं हि कुर्वन् प्रवर्तयतीत्युच्यते । सोऽयं क्रियासम्बन्ध एव भवति न ततोऽन्यः प्रैष्यप्रैषसम्बन्ध इति । स्यादेतदेवं यदि वाय्वादिवत् प्रवर्तने कर्ता लिङर्थः स्यात् । प्रेरितोऽहमत्रेति तु ज्ञानजनकत्वं विधेः प्रवर्तकत्वम् । स एष प्रवर्तनं ज्ञापयति न करोति इत्यन्य एवायं क्रियाकर्तृसम्बन्धात् प्रैषप्रेष्यसम्बन्धः । 10

ननु ज्ञानमपि क्रियैव । तत्करणे च पुनरपि स एवायं क्रियाकर्तृसम्बन्धः ? मैवम्, कारकज्ञापकयोर्भेदस्य सुप्रसिद्धत्वात् । इह च योऽयं यागपुरुषयोः क्रियाकर्तृसम्बन्धः, अतोऽन्यं प्रैषप्रैष्यसम्बन्धमुपदर्शयितुं प्रवृत्ताः स्मः । स ततो विलक्षणः प्रदर्शित एव । वैलक्षण्येऽपि तस्य यथाकथञ्चित् तन्नाम क्रियमाणं न वारयामः । भवत्वयमन्यः प्रैषप्रैष्यसम्बन्धः, स तु प्रथममवगम्यते इत्येष कुतो निश्चयः ? उक्तमत्र प्रेषितोऽहमिति हि विदित्वा क्रियायां प्रवर्त्तते । आचार्यचोदितः करोमीति हि दृश्यते, यजेतेति श्रुते नियुक्तोऽहमिति प्रथममवगच्छति, ततो यजते, तेनायमाद्यः सम्बन्धः, पाश्चात्त्यस्तु क्रियाकर्तृसम्बन्धः । तद् योऽयं लिङर्थः प्रथममवगम्यते प्रैषो नाम, सा प्रेरणा, स नियोगः, स वाक्यार्थः । 15 20

ननु विधाविव निमन्त्रणादिषु लिङ्लोटावपि स्मर्येत एव । सत्यम् । ते तु

---

**प्रेष्यते तु स** इत्यनेन प्रैषस्यानपह्नवनीयतामाह ।

**निमन्त्रणादिष्विति** । यस्याकरणात् प्रत्यवायस्तत्र नियोजनं निमन्त्रणम् । यस्य त्वकरणेऽपि प्रत्यवायो नास्ति तत्र नियोजनमामन्त्रणमिति । आदिग्रहणात् संस्कारपूर्वकं यत्र नियोजनं तत्राध्येषणम् । 25

प्रेरणाया एव औपाधिका अवान्तरभेदाः । समहीनज्यायोविषयप्रयोगोपाधि-निबन्धन एष प्रेरणाध्येषणादिभेदव्यवहारः । प्रेषणा तु सर्वानुस्यूतावगम्यते । तदुक्तम्, "प्रवर्त्तकत्वन्तु शब्दार्थः सर्वत्रापरित्यागात्" इति ।

**णिजर्थादीनां भेदकथनम्**

5 स चायं लोडादीनामर्थः प्रैषो णिजर्थविलक्षणः प्रतीयते ।

ननु प्रयोजकव्यापारे णिज् विधीयते, प्रयोजकव्यापारश्च प्रैषः । प्रैषे च लोडादयो विधीयन्त इति णिजर्थ एव लोडर्थः । तथा च कुरु कुर्विति यो ब्रूते स कारयतीत्युच्यते, न प्रतीतिभेदात् । अन्या हि करोतु कुर्यादिति प्रतीतिरन्या च कारयतीति प्रतीतिः । प्रयोजकव्यापारो हि णिजर्थः, ज्ञापकव्यापारस्तु 10 लिङर्थः । प्रवृत्तक्रियाविषयश्च प्रयोजकव्यापारो णिजर्थः, इह तु तद्विपरीतः । तत्र हि कार्यं पश्यतः प्रवर्तनमिह तु प्रवर्त्तितस्य स्वकार्यदर्शनमिति महान् भेदः । तत्र यथा कुर्वन्तं कारयति तथैवेहापि प्रैषः प्रवर्तमानं प्रेरयति नाप्रवर्तमानं स्थावरमिति । न हि वनस्पतिरुच्यते यजस्वेति, स्थावरादेरयोग्यत्वात् । ब्राह्मणादिस्तु यः प्रेर्यते असावप्रवृत्तक्रिय एव, न हि यजमान एव यजेतेति

---

15 **समहीनज्याय** इति । यत्र समः प्रेर्यते तत्राभ्यनुज्ञाःयत्र हीनस्तत्र प्रेषणम्, यत्र ज्यायांस्तत्राध्येषणमिति । विधिशब्दनिर्दिष्टं प्रेषणं हीनविषयम्, निमन्त्रणादयस्तु यथासम्भवं समज्यायो विषयाः न्यक्कारपूर्वं तेष्वप्रवर्तनादिति ।

**प्रवृत्तक्रियाविषय** इति । प्रवृत्तक्रियः सम्भावितक्रियो वा यत्र प्रयुज्यते तत्र णिचः प्रयोगः, यत्र तु क्रियासम्बन्धोऽभूतपूर्व एव ज्ञाप्यते अकारकस्यापि कर्तृतासम्बन्धोऽव-20 बोध्यते तत्र लोट् । यदुक्तम्,

द्रव्यमात्रस्य तु प्रैषे पृच्छ्यादेर्लोड् विधीयते ।
सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः ।। इति ।

'पृच्छतु मा भवान्' इत्यादौ यो लोट् स द्रव्यमात्रस्याकर्तुरपि प्रैषे कर्तृत्वज्ञापने सक्रियस्य प्रवृत्तक्रियस्य सम्भावितक्रियस्य चेत्यर्थः ।

25 **प्रवर्तितस्य स्वकार्यदर्शनमिति** विधिरपुरुषार्थे न प्रवर्तयति, प्रवर्तनाव्याघातात्, प्रवर्तितश्चेद् विधिना अवश्यं साध्येन फलेन भाव्यमिति ।

**न हि यजमान एव,** यागक्रियायां प्रवर्तित एव ।

चोद्यते किन्तु अप्रवृत्तक्रिय एवेति, सर्वथा णिजर्थाद्विलक्षणो लिङर्थः ।

**नियोगे व्युत्पत्त्युपपादनम्**

आह भवत्वयं विलक्षणोऽर्थः, स तु प्रमाणान्तरानवगम्यश्चेत् कथं शब्दैकगोचरे तत्र सम्बन्धव्युत्पत्तिः ? उच्यते । शब्दैकगोचरस्तु नियोगो व्युत्पत्तिश्च तत्र सूपपादैव । यो हि यजेत दद्याज्जुहुयादिति लिङादिभ्यो विधिः प्रतीयते, कथमसौ लिङादीनामगम्य इष्येत ? व्युत्पत्तिश्चास्य व्यवहारादवकल्पते । गच्छाधीष्वेति शृण्वन् वृद्धश्चेष्टमानो दृश्यते, चेष्टा च स्वात्मनि प्रवर्त्तिका अवगमपूर्विका दृष्टा । प्रत्यक्षदृष्टे चाम्रादौ सुखसाधनतया अन्वयव्यतिरेकाभ्यामवगते तदनुस्मरणात् प्रवर्तमानः कस्मिंश्चिदात्माकूते समुपजाते सति भौतिकं व्यापारमारभते । स चात्मधर्म आत्मेव स्वसंवेद्यः । अहम्प्रत्ययगम्यो ह्यात्मा, नासौ परस्मै दर्शयितुं शक्यते, न च चर्चयितुं शक्यते, एतावता नानुभूयत इति शक्यते वक्तुम् । परोऽपि ह्येनमहम्प्रत्ययेनानुभवत्येव, तथा अयमपि भौतिकव्यापारहेतुरात्माकूतविशेषो न प्रमाणान्तरवेद्यो भवति । न च न वेद्यते तत्संवेदने सति चेष्टा यद्वन्तं दृष्ट्वा तस्यापि तादृक् प्रेरणावगमोऽनुमीयते ।

स च शब्दान्तरश्रवणे सत्यदृश्यमानो लिङादिश्रवणे च सति दृश्यमानस्तदर्थं एवेत्यन्वयव्यतिरेकाभ्यामवगम्यते इतीयतीयं व्युत्पत्तिः । तदेतदात्मप्रत्यक्षं लिङादिशब्दश्रवणे सति प्रेरणावगतिर्भवति, प्रथमंश्रुताच्च लिङादेरसौ न भवति, न च प्रमाणान्तरेण सोऽर्थो दर्शयितुं शक्यते । कुर्यादित्यस्यार्थः कुर्यादित्यनेनैव प्रतिपाद्यते, न प्रमाणान्तरेणेत्येवं व्युत्पत्तौ सम्भवन्त्यामपि यैरगृहीतसम्बन्ध एव लिङादिः स्वरूपसामर्थ्येनैव प्रेरक इष्यते, तेऽत्यन्तभीरव इत्युपेक्षणीयाः ।

ननु यदि लिङादिव्यतिरेकेण नान्यतो नियोगोऽवगम्यते कथमसौ

---

कस्मिंश्चिदात्माकूते 'उपादेयमेतन्मया' इत्येवंरूपे ।

ननु कुर्यादित्यत्र यः प्रतिभाति स नियोग इत्युक्तम्, तत् कोऽसौ प्रतिभाति इति वक्तव्यमित्याशङ्क्याह कुर्यादित्यस्यार्थ इति । अनेनैतत् प्रतिपादयति लोके वेदे वा नियोगः शब्दोल्लेखरहितायां प्रतीतौ न प्रथत इति ।

नियोगशब्दात् प्रतीयते, कथं वा नियोगशब्दस्य नाम्नोऽप्यर्थः प्रमाणान्तरागोचरः स्यात् ? अयि साधो ! न नियोगो निपूर्वेण युजिना घञन्तेन बोधयितुं शक्यते, व्यवहारमात्रमेतत् स्वरूपमाख्यातुमाश्रीयते । यथा तु यजेतेत्यादिभ्यः शब्देभ्यः सोऽवगम्यते, तथा नान्यत इत्यत एव न प्रमाणान्तरगोचरो धर्म 5 इत्याहुः । लिङ्धर्मो हि नियोगो वाक्यार्थः, स एव च धर्मः, स च न प्रमाणान्तर-गम्य इति । न च लिङर्थः प्रेरणात्मकोऽयं व्यापारः कार्यमाचष्टे, यो धर्मः स एव च वाक्यार्थो युक्तः । कार्येऽर्थे वेदस्य प्रामाण्यमिति हि मीमांसकाः ।

**नियोगः शब्दः प्रेरकः**

तस्मात् पुनरपि भाट्टपक्षवद् द्वयमापतति, प्रेरकश्च विधिः कार्यरूपश्चा- 10 नुष्ठेयोऽर्थ इति । सुखैधितो निरनुसन्धान इवायुष्मानेवं व्यवहरति । न ह्यन्यः प्रेरकोऽन्यश्चानुष्ठेय इत्युक्तम् । नियोग एव प्रेरको नियोग एव चानुष्ठेयः । कथमस्य द्वैरूप्यमन्ये वदन्तीति चेद्, मैवम्, प्रेरकत्वमेव शब्दार्थः, आर्थन्तु कार्यत्वम्, यतो विधिरनुष्ठेयतयावगम्यते, आचार्याज्ञां करोमि, राजाज्ञां करोमीति । किमर्थं तर्हि विषयानुष्ठानमिति चेत् ? न ह्याज्ञा घटादिवत् स्वरूपेण 15 कर्तुं शक्या, अपि तु विषयद्वारकं तत्सम्पादनम् । कमण्डलुं बिभृहीत्याचार्येणाज्ञप्तः कमण्डलुं भृत्वा आचार्याज्ञां कृतां मन्यते, कटकं गच्छेति राज्ञा आज्ञप्तः कटकं गत्वा राजाज्ञां कृतां मन्यते, सोऽयं नियोग एवानुष्ठेयः ।

ननु राजाज्ञया करोमीत्यपि व्यपदेशो दृश्यते स चानुष्ठेयामेवाज्ञां दर्शयति । मैवम्, तत्राप्याज्ञैवानुष्ठेया । प्रेरणाभिप्रायेण तृतीयानिर्देश इत्येवं केचित् ।

---

20 **व्यवहारमात्रमेतदिति ।** गुरोर्नियोगस्त्वया कार्यं इत्यादाववश्यव्यवहर्तव्यस्य नियोगस्य केनचिच्छब्देन नियोगादिना सूचनं व्यवहारमात्रम् ।

**यथा तु यजेतेत्यादिभ्य** इति । तेभ्यो ह्युद्भवदवस्थः प्रेरणारूपः कार्यरूपो वा नियोगः प्रतीयते, नियोगशब्दात् तु स्वरूपमात्रेण ।

**स एव च धर्मः** श्रेयस्करस्य धर्मत्वात्, तदनुष्ठानाच्च श्रेयोऽवाप्तेः ।

25 **सुखैधितः ।** सुखेन वृद्धिं प्राप्तोऽकृतगुरूपासनादिक्लेशः ।

**प्रेरणाभिप्रायेणेति ।** यदा राजाज्ञया प्रेरितः करोमीति विवक्षा, तदा तृतीया-प्रयोगः करणन्तु तस्या एव, तात्पर्यतः पुरुषस्य तत्र प्रवृत्तेः ।

**प्रेरकत्वमेव नियोगस्वरूपम्**

अन्ये तु शाब्दं कार्यत्वं नियोगस्य, प्रेरकत्वन्त्वर्थादित्याचक्षते। अनुष्ठेयता हि तस्य निजं रूपम्, स्वसिद्धये स तु नियोज्यं नियुञ्जानः प्रेरक इत्युच्यते। तदिदं कार्यत्वमपरित्यक्तप्रेरकभावमस्यावगम्यते। प्रेरकत्वञ्चापरित्यक्तकार्य-भावमित्यन्यतरदत्र शाब्दं रूपमिति न भाट्टैरिवास्माभिः प्रत्यये गुरुर्भार आरोपितः। 5

**विधेः प्रवर्त्तकत्वे न फलापेक्षा**

स चायं नियोगः प्रतीयमानो यजेत स्वर्गकाम इत्यनुबन्धद्वयावच्छिन्नः प्रतीयते। यज्यादिना अस्य विषयानुबन्धो धातुनोच्यते, स्वर्गकाम इत्यधि-कारानुबन्धः पदान्तरेणार्प्यते। तत्र च स्वर्गकामस्यैवमधिकारो निर्वहति यदि 10 भावार्थस्य स्वर्गं प्रति साधनत्वमवगम्यते। एवं तर्हि स्वर्गकामेनैवासौ कृतो भवत्येवं स्वर्गकामपदान्वये प्राक्तन एव मार्गोऽनुमन्तव्यः, न पुनः स्वर्गादि-फलप्रदर्शनपूर्वकं विधेः प्रवर्त्तकत्वम्, अस्वातन्त्र्यप्रसङ्गात्। न हीदृशं शास्त्रस्य दैन्यं यत् फलं विना पुंसः प्रवर्त्तयितुं न शक्नोति, अन्यथा यावज्जीवं यजेते-त्यादावप्रवर्त्तकं शास्त्रं स्यात्। किं यावज्जीवमित्यादयश्चोदनाः फलशून्या 15 एव? ओमित्युच्यते। न हि विधिः फलमाकाङ्क्षत्यपि तु नियोज्यं विषयम्। कस्य नियोगः, कुत्र नियोग इति त एते उभे अपि आकाङ्क्षे परिपूर्णे तत्र जीवतो नियोगो यागे च नियोग इति। अतः परं फलकल्पनं पुरुषबुद्धिप्रभवं भवति, न शास्त्रीयम्। कामाधिकारे तु नियोज्यतैवान्यथा स्वर्गकामस्य नोपपद्यते इति स्वर्गस्य साध्यत्वमभ्युपगतं न पुनर्विधेः फलार्थत्वात्, अत एव न तत्र वैधी 20 प्रवृत्तिर्लिप्सयैव प्रवृत्तत्वात्। आह च 'तस्य लिप्सार्थलक्षणेति साध्यसाधन-प्रतिपादनपर्यवसितो हि तत्र विधिव्यापारो न प्रयोगपर्यवसित इति।

---

**अनुबन्धद्वयावच्छिन्न** इति। अनुबध्यतेऽन्यतोऽवच्छिद्य स्वात्मन्येव व्यवस्थितः प्रतीतिं प्राप्यते येनासौ विषयानुबन्धः; येन वानुष्ठात्रन्तरावच्छेदेन नियतानुष्ठातृकत्वे-नावस्थाप्यतेऽसौ विध्यनुबन्धोऽधिकारानुबन्धः। 25

**तस्य लिप्सार्थलक्षणेति** सूत्रप्रतीकः। 'यस्मिन् प्रीतिः पुरुषस्य लिप्सार्थलक्षणाऽ-विभक्तत्वात्' इति सूत्रम्। यस्मिन् कृते पुरुषस्य प्रीतिरुत्पद्यते तस्य लब्धुमिच्छा तत्र

अत एव श्येनादेरधर्मत्वात् तत्र ह्यभिचरन्निति शत्रा शत्रुं वैदिकेनो-
पायेन जिघांसुरधिकारी दर्शितः । तस्य न तत्र शास्त्रं प्रवर्त्तकम्, जानात्येवासौ
मयैतत्कर्त्तव्यम्, उपायन्तु न वेदेत्येवमुपायमात्रमस्योपदिश्यते, श्येनं कुर्विति
न विधिः प्रभवति, जिघांसयैव तत्र प्रवृत्तत्वात् । अतः श्येनादेरधर्मत्वात्
5 तद्व्युदासार्थमर्थपदोपादानम्, 'चोदनालक्षणोऽर्थो धर्मः' इति ।

कामाधिकारेष्वितिकर्त्तव्यतांशे शास्त्रीया प्रवृत्तिः । यथोक्तम्, 'क्रत्वर्थो हि
शास्त्रादवगम्यते'' इति । भावार्थमात्रस्य हि करणत्वमवगतमितिकर्त्तव्यतांशस्तु
न करणत्वावगतिवेलायामुपनिपतित इति । तत्र लिप्साया अभावाच्छास्त्रमेव
प्रवर्त्तकम् । अत एवाग्नीषोमीयहिंसाया नाधर्मत्वम्, न हिंस्यात् सर्वभूतानीति

---

10 प्रवृत्तिपर्यन्ता प्रीतिलक्षणा फलनिबन्धनैव न वैधी । नन्वस्तु तत्र तत्र विषये
प्रीतिनिबन्धना लिप्सा, प्रवृत्तिः कथम्, इत्याह 'अविभक्तत्वात्' इति । प्रीत्या
पुरुषार्थेन तत्साधनत्वात्, विषयस्याविभक्तत्वाद् अविभागेन व्यवस्थितत्वात् पुरुषार्थतैव ।
अतः पुरुषार्थनिबन्धनैव तत्रापि प्रवृत्तिरित्यर्थः ।

**शत्रुं वैदिकेनोपायेनेति** । यथा 'शयाना भुञ्जते यवनाः' इत्यत्र सिद्धं
15 शयनं भुजिक्रियालक्षणत्वेन प्रतिपाद्यते एवं प्रागुत्पन्नाभिचारेच्छाधिकारं प्रति
लक्षणत्वेनोपात्ता ।

**अतः श्येनादेरधर्मत्वादिति** । अर्थपदे ह्यक्रियमाणे चोदनालक्षणत्वेन श्येनादेरपि
धर्मत्वं प्राप्नोत्यनर्थस्य प्रत्यवायहेतोः, तन्निवृत्त्यर्थमर्थग्रहणम् ।

**क्रत्वर्थो हि शास्त्रादवगम्यते** नान्यथेति भाष्यम् । क्रतवेऽर्थः क्रत्वर्थः,
20 क्रतूपकारक इतिकर्तव्यताभागः । स शास्त्रादवगम्यते कर्तव्यत्वेन । ननु यथा
फलसाधनस्य करणत्वात् तत्र लिप्सानिबन्धना प्रवृत्तिः, एवमितिकर्तव्यतांशस्यापि
करणोपकारद्वारेण फलसाधनत्वमस्तीति तत्र लिप्सातः प्रवृत्तिः किमिति न भवेत्,
इत्याशङ्क्याह **इतिकर्तव्यतांशस्त्विति** । "फलसिद्धिमवान्तरीकुर्वन्नियोगं साधयत्यत-
स्तस्य फलेन सम्बन्धः, नेतिकर्तव्यतायाः" इत्येके । अन्ये तु "प्रयोगकाले करणस्येति-
25 कर्तव्यतापेक्षणम्, न प्रतिपत्तिकाले । अधिकारावस्थायां हि करणस्यैव फलसिद्धा-
वुपायतावगमः, प्रयुज्यमानस्तु शुद्धोऽनुपकृतः फलसिद्धये न प्रभवतीति प्रयोगकाले
प्रवृत्तस्येतिकर्तव्यतापेक्षणं न प्रथमतः । फलार्थितया न तत्र करण इव प्रवृत्तिः", इत्याहुः ।

निषेधः सामान्यशास्त्रम् । सामान्यशास्त्रञ्च विशेषशास्त्रक्रोडीकृतविषयपरिहारेण प्रवर्त्तत इति अग्नीषोमीयहिंसायाः शास्त्रीयत्वान्न निषेधविधिरनर्थतां बोधयेदिति ।

ननु श्येनेऽपि शास्त्रीया प्रवृत्तिः, प्रवर्तकत्वं हि विधेः स्वरूपं प्रमाणान्तरविलक्षणम् । नान्वयव्यतिरेकवत् साध्यसाधनप्रतीतिमात्रपर्यन्तो हि विधिव्यापारो भवितुमर्हति इति, सर्वत्र विधेः प्रयोक्तृत्वानपायात् । एवमेव चेयं प्रवृत्तिः श्येनेन यजेतेति । उच्यते । प्रवर्त्तितोऽहमिति ज्ञानजननं विधेः प्रेरकत्वं तत् सत्यम्, सर्वत्र तुल्यं करणे श्येन इतिकर्त्तव्यतायामग्नीषोमीये च । बाह्ये तु प्रवृत्तिलक्षणे भौतिके व्यापारे यत्र लिप्सादि प्रवर्तकान्तरमस्ति, तत्र भवन्त्यपि विधेः प्रयोक्तृशक्तिरुदास्ते पशुपुरोडाशप्रयाजवत्, तत्रोदासीने विधौ निषेधशास्त्रमवतरति न हिंस्यादिति । यदि तु सर्वत्र प्रयोक्तृशक्तिरनुदासीना भवेत् तदा ज्योतिष्टोमान्न विशिष्यते श्येनः, शास्त्रीयायां प्रवृत्तावग्नीषोमीयमिव निषेधशास्त्रस्यानवकाशात् । ज्योतिष्टोमेऽनुल्लङ्घितनिषेधोऽधिकारी स्वर्गस्यानिषिद्धत्वात्, श्येने तु हिंसायाः प्रतिषिद्धत्वादुत्क्रान्तनिषेधोऽधिकारीति चेत्, मैवम्, अधिकारिदशायामपि भवन्मते विधेः प्रयोक्तृत्वानपायाद् न निषेध-

---

**सामान्यशास्त्रञ्चेति** । यथा 'यज्जुहोति तदाहवनीयः' इति सामान्यशास्त्रं सर्वहोमाधिकरणत्वेनाहवनीयस्य प्रापकं 'पदे जुहोति' इत्यादि विशेषविधिपरिहारेणावतिष्ठते । तथा 'न हिंस्यात्' हिंसा न कार्येति सामान्यम्, 'अग्नीषोमीयपशुहिंसा कार्या' इत्येतद्व्यतिरेकेण प्रवर्तते ।

**पशुपुरोडाशेति** । अग्नीषोमीये पशौ पशुपुरोडाश आम्नातः । 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयमेकादशकपालं पशुपुरोडाशं निर्वपति' इति । तस्य प्रकृतिवद्भावात् प्राप्तानां प्रयाजादीनामङ्गानां किं पृथक् प्रयोजकत्वमुत पशुप्रयुक्तैरेव प्रयाजादिभिस्तस्याप्युपकार इति ? तत्र पृथक् प्रयोक्तृत्वमाशङ्क्य पशुतन्त्रमध्ये पुरोडाशस्य विधानात् पशौ कृतानि तस्याप्युपकुर्वन्त्यतस्तत्र कृतैरेव पशुपुरोडाशयागस्योपकारसिद्धेर्न पृथक् प्रयोजकत्वकल्पनया; यथा प्रासादकृतः प्रदीपो राजमार्गेऽप्युपकरोतीति न तत्र पृथक् प्रयुज्यते । **भवन्मते विधेः प्रयोक्तृत्वानपायादिति** । भवच्छब्देन उम्बेकं निर्दिशति । तस्य सर्वावस्थस्य विधेः प्रयोक्तृत्वानपाय इति हि पक्षः ।

शास्त्रमवकाशं लभत इति श्येनेऽपि नावधीरितनिषेधोऽधिकारी स्यात् ।

ननु न विधिः फले नियोज्यं प्रेरयति फलं कुर्विति, कर्मणि त्वेनं प्रवर्तयति यजस्वेति । तेनाधिकारिदशायामप्रतिहतो निषेधशास्त्रावकाशः । आयुष्मन् ! अस्मत्पक्षमास्थितोऽसि । फले चेन्न प्रवर्त्तयति विधिः पुरुषम्, फला-
5 र्थित्वादेवैनमुपाये प्रवर्तमानं तत्रापि नं प्रेरयेत् । उपायानभिज्ञस्य तूपायमेव दर्शयेत् । यावदप्राप्तं हि विधेर्विषयः । तदुक्तम्, जानात्येवासौ मयैतत्कर्त्तव्य-मुपायन्तु न वेदेति । प्रतीतिरपीयमीदृशी अभिचरन् यजेतेति । यदि त्वशास्त्री-योपायो न वैरिणं हन्तुमुपायः श्येनेन जहि श्येनस्तवोपाय इत्यर्थः । तदलमति-प्रसङ्गेन । कामाधिकारेषु तावन्न फलाकाङ्क्षी विधिः फलन्त्वधिकारे हेतुरिति
10 स्थितम् ।

## निषेधविधेरपि प्रत्यवायानपेक्षनिवर्तकत्वम्

प्रतिषेधाधिकारेऽपि प्रत्यवायो न कल्पते ।
निषेध्याद् विषयादेव लब्धत्वादधिकारिणः ।।
तत्रासौ कल्प्यमानोऽपि नरकादिफलोदयः ।
15 अवैधत्वं प्रपद्येत न ह्याकाङ्क्षेदृशी विधेः ।।
विधेरपेक्षे द्वे एव नियोज्यविषयौ प्रति ।
तत्पूरणेन तृप्तस्तु न वाञ्छति ततोऽधिकम् ।।
नियोज्यस्तावदेतावान् क्रुद्धोऽरिहननोद्यतः ।
विषयस्तन्निवृत्तिश्च नियोगो यत्र गम्यते ।।

---

20 सत्यम्, अधिकारावस्थायां प्रयोक्तृत्वमनपेतं विषयविषयन्तु तत् न फलविषय-मित्यतः फलस्याविधिस्पृष्टत्वात् तत्र निषेधशास्त्रस्य प्रवृत्तेरनर्थत्वमिति **ननु न विधिः फले नियोज्यम्'** इत्यादिनाह । यद्युपाये न प्रवर्तयेत्, तर्ह्यधिकारविधेः को व्यापार इत्याशङ्क्याह **उपायानभिज्ञस्येति** । **यावदप्राप्तमिति** । यथा नात्मसम्पत्तये विधिर्द्रव्या-र्जनं प्रयुङ्क्ते, जीवनप्रयुक्तत्वात् तस्येति । **न फलाकाङ्क्षीति** । नियोज्यविषयसमर्पक-
25 पदद्वयादेव निराकाङ्क्षस्य तस्य प्रतीतेः ।

**निषेध्याद् विषयादेवेति** । यद्धन्यात् तन्न । हननप्रवृत्तो न हन्यादित्यर्थः ।

**निषेधविधेर्विषयनिरूपणम्**

नन्वेतावन्न विबुध्यामहे निषेधविधेः को विषय इति ? भावार्थाः कर्मशब्दा ये तेभ्यः क्रिया प्रतीयत इति स्थिते नञर्थस्तावत् पूर्वापरीभूतत्वाभावान्न विधेर्विषयः, अनन्विताभिधानाच्च । न हि नञोऽनन्तरं लिङ्विभक्तिः श्रूयते, अपि तु हन्तेः । हननमपि न विधेर्विषयः तस्य धर्मत्वप्रसङ्गात् । न प्रयोगस्य वैयर्थ्यप्रसक्तेर्हनने च पुरुषस्य स्वतः प्रवृत्तेर्नञ्विशिष्टोऽपि न हन्त्यर्थोऽस्य विषयः, तयोर्विशेषणविशेष्यभावाभावात् ।  5

युक्तं दध्ना जुहोतीति होमे दध्यनुरक्तता ।
हन्तेः स्वरूपनाशात्तु न नञर्थानुरक्तता ॥

पुरुषप्रयत्नोऽपि न केवलो विधेर्विषयः, स्वतः सिद्धत्वात्, नापि नञर्थानुरक्तः, हन्तिवत्, तत्रापि नञर्थस्य विशेषणत्वानुपपत्तेः ।  10

अथायमब्राह्मणादिन्यायेन हन्तौ पर्युदस्ते भावार्थान्तरे नियोगः कल्प्यते ? न हन्यादिति कोऽर्थः ? अन्यत् किमपि कुर्यादिति । तर्हि किं तद्भावान्तरमिति न विचारयितुं शक्यते । यत्किञ्चिदिति चेन्न, तस्य स्वतः सिद्धत्वेन विध्यानर्थक्यात्, अवश्यं जीवन् पुमान् किञ्चित् करोति पठति गच्छति भुङ्क्ते च ।  15

अथ विषयांशं परिहृत्य प्रमाणांशे नञ् निविशते, स हि प्रवर्तमानं पुमांसं रुणद्धि यद् हन्यात् तन्नेति ।

तदप्यनुपपन्नम् । अन्विताभिधानेन विधिविभक्तेर्हन्तिनावरुद्धत्वात् । प्रेरणाशक्तिस्वभावो विधिः स्थितः, यस्तु निषेधात्मा नञ् पार्श्वे स्थितस्तत्र विधिः सङ्क्रामति, सङ्क्रान्तावपि नञश्च विधेश्च सम्बन्धे सति विधेः स्वरूपनाशोऽवगम्यते । स्वभावो ह्येष नञो यदयं येन येन सम्बध्यते तस्य तस्याभावं  20

---

**नञर्थस्तावदिति ।** पूर्वापरीभूतस्य साध्यस्य साधको हि हन्तिर्न नञ्, तस्य स्वतः सिद्धत्वात्, जीवतः प्रयत्नमात्रस्यावश्यम्भावित्वात् ।

**प्रमाणांशे नञ् निविशते** निवृत्तिज्ञापकत्वेन ।

**अन्विताभिधानेनेति ।** प्रकृत्यर्थसमभिव्याहृतस्य विधेरवगमात् ! **विधेः स्वरूपनाश इति ।** 'कुर्यात्' इति हि विधिर्नञा सम्बन्धे च 'न कुर्यात्' इति स्यात् ।  25

बोधयतीति । अतो विधिसम्बन्धे नञ इष्यमाणे एतावान् वाक्यार्थोऽवतिष्ठते हननविधिर्नास्तीति, ततश्च हननस्य विधित्वञ्च स्यात् ।

अत्रोच्यते । दध्ना जुहोतीति होमस्य वचनान्तरचोदितत्वाद् विधिशक्ति-रुपपदं सङ्क्रामतीति यथावर्णितम्, एवमिहापि हनने स्वतः प्रवृत्तत्वेन विधि-
5 वैफल्यात्, नञश्च श्रूयमाणस्यानर्थक्यप्रसङ्गाद्, विधायिका शक्तिर्नञर्थमेव स्पृशति इति किं नेष्यते ?

ननूक्तमत्र भावार्थः कर्मशब्द इति । तत्र दध्यनुरक्तो होम एव विधीयत इति फलतो विधिविहितो भवति न प्रमाणतः । इह तु नञस्तदुपमर्दस्वभावत्वाद् न केनचित् संसर्गो दध्यादेरिव कल्पते । मैवम् । निवृत्तिमेव कुर्वन्नञ्विशेषणं
10 विशेषणीभवति । सेयं नञुपहिते हन्तौ श्रुते हनननिवृत्तिर्गम्यते, यथा सिद्धरूप-दध्यनुप्रवेशेऽपि न होमस्य साध्यमानावस्था निवर्त्तते, तथा नञनुविद्धहन्त्यर्थाव-गतौ न पूर्वापरीभावबुद्धिर्निवर्त्तते । न ह्यब्राह्मणवन्न हन्यादिति सिद्धरूपबुद्धिः । सोऽयं हनननिवृत्तिरूपः पूर्वापरीभूतोऽर्थो विधिविषयो भविष्यति । अथ वा विभक्त्यर्थेन नञ् सम्भत्स्यते । शुद्धस्य लिङादेरर्थः प्रवर्तको नञुपहितस्य
15 तस्यार्थो निवर्तक इति शब्दशक्तिरेवैषा, कोऽत्र पर्यनुयोज्यत इति ।

यत्तु साक्षान्नञोऽनन्तरं विधिविभक्तिर्नोत्पद्यते तत् तस्याधातुत्वात्, धातोः परे तिङादयः प्रत्यया भवन्ति नान्यस्मादिति, योग्यतया तु नञर्थेन सम्बन्धः, न च तत्रायमर्थोऽवतिष्ठते हननविधिर्नास्तीति । किन्तु नञुपहितो विधिरौदास्ये पुरुषं नियुङ्क्ते, तदवच्छेदकश्च हन्तिः, अन्यथा सर्वक्रियौदासीन्यं प्रतीयेतेत्यलम्
20 अतिविमर्देन । निषेधविधेरपि सिद्धोऽनुबन्धद्वययोगः ।

एवं नियोगव्यापारे समाप्ते फलकल्पना ।
नृबुद्धिप्रभवैव स्यादतः सापेक्षता भवेत् ॥
कथं नरो निवर्तेत प्रत्यवायभयाद् विना ।
मा निर्वर्तिष्ट विधिना तावदुक्तं निवर्तनम् ॥

---

25 **होमस्य वचनान्तरेति ।** 'अग्निहोत्रं जुहोति' इत्यनेन वचनेन ।

**न प्रमाणत इति ।** जुहोतेः परस्या विधिविभक्तेः श्रवणात् । **विभक्त्यर्थेन नञ् संभत्स्यत इति ।** नन्वेवं विधेः स्वरूपनाश इति चोदितम्, नेत्याह **शुद्धस्येति ।**

प्रवृद्धतररागान्धः　प्रत्यवायेऽपि　कल्पिते ।
न　निवर्तत　इत्येवं　किं　विधेरप्रमाणता ॥
फलं　भवतु　मा　वा　भूत् पुरुषोऽपि प्रवर्तताम् ।
मा प्रवर्तिष्ट वा स्वे तु नास्त्यर्थे खण्डना विधेः ॥

प्रवर्त्तनावगमजनने हि विधिव्यापार इति असकृदुक्तम् । तत्र तस्य न किञ्चिद् वैकल्यम् । 5

ननु विधेः फलापेक्षिता नास्ति चेत् किं तर्हि अश्रूयमाणफलेषु विश्वजिदादिषु स्वर्गादिफलं कल्प्यते ? उच्यते, अश्रूयमाणत्वादधिकारानुबन्धस्य निरधिकारस्य च विधेर्विधित्वानिर्वाहादधिकारानुबन्धः कल्प्यते । तत्र सर्वान् प्रति अविशिष्टत्वात् स्वर्गकामश्चोदनाशेषभावेन नियोज्यः कल्प्यते । न चेयं 10 पौरुषी कल्पना श्रुत्येकदेशः स इति हि तद्विदः ।

---

**निरधिकारस्य च विधेरिति** । विधेर्हि विधित्वं प्रवर्तकत्वं प्रवर्त्यञ्च विना कं प्रवर्तयेदिति । यथा चोक्तम् 'न ह्यनुद्दिश्य देवदत्तं यज्ञदत्तं वा लिङादयः प्रयुज्यन्ते' इति । 'अविभागाच्च शेषस्य सर्वान् प्रत्यविशिष्टत्वात्' इति सूत्रम् । स फलतया 15 कल्प्यमानः स्वर्ग एव कल्प्यो निरतिशयप्रीतिरूपत्वात् तस्य, तादृश्यास्तु प्रीतेः सर्वैरभ्यर्थ्यमानत्वात् । **चोदनाशेषभावेन** । विश्वजिता यजेतेति चोदनाया एकदेशत्वेन । "**श्रुत्येकदेशः सः**" इति सूत्रप्रतीकम् । "अपि वा आम्नानसामर्थ्याच्चोदनार्थेन गम्येतार्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्तेऽर्थतो ह्यसमर्थानामानन्तर्येऽप्यसम्बन्धस्तस्माच्छ्रुत्येकदेशः सः" इति सूत्रम् । अपि वेति पक्षव्यावृत्तिः, अर्थेन प्रयोग- 20 विधानेन 'विश्वजिता यजेत' इत्यादिना फलचोदना गम्येत । कुतः ? प्रयोगवचनस्य आम्नानसामर्थ्यात् । फलचोदनं फलवचनं विना तस्य आम्नानं निरर्थकं स्यात् । ननु श्रूयमाणस्याभावाद् अध्याहार्यं तन्नेत्याह "अर्थानां प्रयोगवचनानाम् अर्थवत्त्वेन हेतुना व्यवहितान्यपि प्रतीयन्ते सम्बध्यन्ते फलवचनानि । अर्थतो ह्यसमर्थानामानन्तर्येऽप्यसम्बन्धः । 25

अपि पश्यामि धावन्तं दूरे पातं वनस्पतिम् ।
त्वां ब्रवीमि विशालाक्षि याहि रक्ष जरद्गवम् ॥ इतिवत् ।"

तदियमधिकारानुबन्धकल्पना न फलकल्पनेति । सोऽयमनुबन्धद्वयावच्छिन्नो नियोगो वाक्यार्थः ।

वाक्यार्थत्वञ्चास्य प्रधानत्वाद् अन्यो हि यज्यादिरर्थोऽवगम्यमानस्तदनुप्रवेशेन प्रतीयते गुणो भवति । नियोगस्तु स्वमहिमाक्षिप्तदृष्टोपकारानेकक्रियाकारककलापोपबृंहितस्वरूपः प्रतीयत इति प्राधान्यमवलम्बते । कार्यञ्चेत् प्रधानमुच्यते नियोग एव कार्यम् । फलञ्चेत् प्रधानमुच्यते तदपि न सिद्धम्, अपि तु साध्यम् । साध्यत्वञ्चास्य नियोगाधीनमिति नियोग एव प्रधानम् । पुरुषस्तु नियोज्यमानत्वादप्रधानमिति । एवं नियोग एव प्रधानत्वाद् वाक्यार्थः ।

**नियोगस्तु चतुर्विधः**

स च प्रतीतिभेदपर्यालोचनया चतुरवस्थ उच्यते । उत्पत्तिविधिरग्निहोत्रं जुहोतीति, अग्निहोत्राख्यकर्मस्वरूपोत्पादव्यतिरेकेणार्थान्तरानवगमात् ।

विनियोगविधिः दध्ना जुहोतीति, पयसा जुहोतीति, उत्पत्तिविधितः प्रतिपन्ने भावेऽर्थे तत्र दध्यादिगुणविनियोगावगमात् ।

---

तस्माच्छ्रुत्येकदेश एव फलवचनशब्दो व्यवहितश्रुतोऽपीह सम्बध्यते । 'वसन्ताय कपिञ्जलान्' इत्यत्र 'आलभेत' इतिवत् । **तदियमधिकारानुबन्धेति** । प्रेर्यं विना विधेः प्रेरकत्वासिद्धेर्बहिःसिद्धेश्चानुष्ठातारमधिकारिणं विना असम्भवात्, अधिकारिणमेव प्रथमं विधिरपेक्षते, न फलम्, फलं विनापि नित्याधिकारे यावज्जीवादौ विधेराकाङ्क्षानिवृत्तेर्बहिःसिद्धेर्लभाच्च ।

**तदनुप्रवेशेनेति** । किंविषयं नियोगं कुर्यादिति तद्विषयमवच्छेदकं कुर्वन् । **तदपि न सिद्धमिति** । न हि सिद्धं फलमुद्दिश्य कश्चित् प्रवर्तते, यच्चोद्दिश्य प्रवर्तते, तत् प्रधानं साध्यञ्चेत् तर्हि तत्साध्यता नियोगाधीना स्वर्गकामस्य हि नियोगः । स्वर्गस्य हि साध्यतामनापादयन्ननुष्ठेय एव स्यादिति ।

**चतुरवस्थ उच्यते** । चतसृष्ववस्थास्वेकतया प्रत्यभिज्ञानात् । यथा ग्रामं गच्छेद् अश्वेन गच्छेद्धनकामो गच्छेत् तस्माद् एवं गच्छेदिति न भिन्ना विधयः प्रतीयन्तेऽपि तु एक एव ।

अधिकारविधिः, अग्निहोत्रं जुहुयात् स्वर्गकाम इति, निर्ज्ञाते कर्मणि तत्राधिकृतस्य पुंसस्ततोऽवगमात् ।

प्रयोगविधिस्तु क्रमपर्यन्तं प्रयोगे पदार्थानामवगम इति, अयञ्चाधिकार-विधेरेव व्यापारविशेष इति तदेवास्योदाहरणम्, अग्निहोत्रं जुहुयात् स्वर्गकाम इति । 5

क्वचिदेकस्मिन्नेव वाक्ये रूपचतुष्टयं विधेरवगम्यते, न तत्र पृथगुदाहरण-मपेक्ष्यते । यथा एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति ।

अन्यान्यपि नियोगस्य रूपाणि व्यापारभेदादवगम्यन्ते । स हि भावार्थ-सिद्ध्यर्थं तत्समर्थमर्थमाक्षिपतीति तत्प्रयोजक उच्यते, यथा माणवकस्थस्या- 10 ध्ययनस्याचार्यकरणविधिः ।

## नियोगस्य प्रकारान्तरम्

क्वचिदन्याक्षिप्ते वस्तुनि लब्धे सति तत्राप्रयोजको विधिर्भवति । यथा क्रय-

---

**अधिकारविधेरेव व्यापारविशेष इति ।** यत एवंभूतेन यजिनैवमितिकर्तव्यताकेन 15 चैतत् फलं जन्यतेऽतस्तत्फलकामेन अयं मया एवमनुष्ठेय इत्यधिकारविधेरेव परिस्पन्दः । इत्थंरूपः प्रयोगविधिरित्युच्यते ।

**एतस्यैव रेवतीष्विति ।** एतद्धि अपूर्वं कर्म चोद्यते, वचनान्तरेण तस्याप्रतिपादनात्, अतोऽयमेवोत्पत्तिविधिः । रेवतीषु वारवन्तोयाख्यगुणविधानाच्च विनियोगविधित्वम्, पशुकामपदसम्बन्धाच्चाधिकारविधित्वम् । अधिकारविधित्वाच्च प्रागुक्तप्रयोग- 20 विधित्वमिति ।

**माणवकस्थस्येति ।** "अष्टवर्षं ब्राह्मणमुपनयीत" इत्याचार्यकरणविधिः, आचार्यकरणे आत्मनेपदविधानात् । तत्र च न कटं कुड्यं वा कारयितुं समीपं नीयते माणवकः, अपि त्वध्यापयितुमित्ययमेवाध्यापनविधिर्ज्ञातः । स चाध्यापनसिद्ध्या स्वसिद्धिं पश्यन्न-ध्यापनमाक्षिपन् येन विनाध्यापनं न सिद्ध्यति तदप्याक्षिपतीति माणवकाध्ययनमविनि- 25 युक्तमप्याक्षिपति ।

**क्वचिदन्याक्षिप्ते वस्तुनीति ।** ज्योतिष्टोमे अरुणयैकहायन्या सोमं क्रीणातीति श्रुतम् । तथा 'षट् पदान्यनुनिष्क्रामति सप्तमं पदमभिगृह्णाति । अथ यर्हि हविर्धाने

नियुक्तैकहायन्या लाभे सति न पादपांसुग्रहणार्थमन्यामेकहायनीमाक्षिपति विधिरिति । प्रकरणपरिपठितपदार्थपटलपरिग्रहश्च ग्राहक इति विधिरुच्यते ।

क्वचित् प्रकरणपरिपठितस्यापि तेनागृहीतस्य द्वादशोपसदादेः प्रकरणादुत्कर्षदर्शनात् । अत एव नियोगगर्भो विनियोग इत्याचक्षते ।

5 क्वचिद् विनियोजकश्रुत्यादिप्रमाणविरहेऽपि पश्वेकत्वाद्युपादानं शेषीकुर्वन् उपादायक इत्युच्यते । पशुना यजेतेति विभक्त्या हि प्रातिपदिकार्थो विनियुक्तः, तत्स्थमेकत्वम् उक्तमेव, न विनियुक्तम् एकेनेत्यश्रवणात्, पशुरुपादीयमानो

---

प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यात्' इति षट्पदानि यदासौ गौः सोमक्रयार्थं नीयमाना अनुनिष्क्रान्ता भवति तदा सप्तमपदात् पांसुं गृह्णीयात् । यर्हि यदा ऋत्विजो हविर्धाने 10 हविर्धानशकटे प्रवर्तयेयुस्तदानेन पांसुना शकटाक्षमञ्ज्याद् म्रक्षयेदित्यर्थः । तत्र किं क्रयार्थं पदपांसुग्रहणार्थञ्चैकहायन्यानयनमुत क्रयार्थमेवेति संशयः, तत्रोभयार्थतामाशङ्क्य क्रयार्थमेवानयनं स्थापितम् । न हि विशिष्टं देशमनीतया सोमक्रयः कर्तुं शक्यत इति नीयमानायां चावश्यम्भावि सप्तमं पदमिति नान्याक्षेपः । **ग्राहक इति विधिरुच्यत इति** । यद् यत् प्रकरणे पठितं तत् तदविशेषेण 'खले कपोत' न्यायेनात्मीयत्वेन 15 स्वीकरोत्यतश्च 'मदीयस्त्वम्' इत्यनेन रूपेण गृह्णन् ग्राहक इत्युच्यते ।

**तेनागृहीतस्य द्वादशोपसदादेरिति** । द्वादशोपसत्ता अहीनस्येति ज्योतिष्टोमे श्रूयते । तत्र यद्यप्येतत् प्रकरणे श्रुतम्, तथापि तिस्र उपसदो भवन्तीति वचनान्तरेणोपसत्त्रयप्राप्त्या निराकाङ्क्षीकृतो न द्वादशोपसत्तां प्रकरणश्रुतामप्यपेक्षते । यदि हि तस्यापेक्षा स्यात् तदा हीनशब्दो द्वादशाहे प्रसिद्धोऽपि न हीयते दक्षिणयेत्यहीन इति कथञ्चिद् 20 ज्योतिष्टोमवाचकत्वेन परिकल्प्य वाक्यसमन्वयः क्रियत इति । **अत एवेति** । नियोगेनागृहीतत्वाद् द्वादशोपसदादेर्नियोगापेक्षाया अभावात् सदपि श्रुत्यादिप्रमाणषट्कमध्यपरिपठितं प्रकरणाख्यं प्रमाणं न विनियोगकल्पनायां क्षममिति । विस्तरतश्चैतत् प्रथमाह्निके व्याख्यातमिति ।

**उपादानं शेषीकुर्वन्निति** । 'पशुना यजेत' इति विनियुक्तस्य पशोरुपादीयमानस्य 25 नियोग एकत्वसङ्ख्यां शेषीकुर्वन् । ननु नियोगः किं करोति ? विभक्तिरेव यथा प्रातिपदिकार्थस्य शेषतामाह तथा स्वार्थस्यापि वदिष्यति, नेत्याह **विभक्त्या हीति** । **एकेनेत्यश्रवणादिति** । यथा पशुनेति पश्वर्थस्य करणत्वं प्रतीयते, न तथैकत्वस्य, एकेनेति निर्देशाभावादित्यर्थः ।

न सङ्ख्यारहितस्तत्र उपादातुं शक्यते, श्रुतसङ्ख्यापरित्यागकारणाभावाच्चैकत्वविशिष्टः पशुरुपादीयत इत्युपादानशेषीकृतमेकत्वम् ।

वैकृतस्तु सौर्यादिविधिः प्राकृतमितिकर्त्तव्यताजातमाकर्षंश्चोदक इत्युच्यते ।

**नियोगस्य वाक्यार्थत्वे सिद्धान्तः** 5

तदिदमेकस्यैव भगवतो लिङर्थस्य प्रयोक्तृशक्तिखचितात्मनः प्रचुरव्यापारवैचित्र्यमुपदर्शितमिति । अलमनया महामतिमानसविलासवत्या मीमांसार्थकथया । सोऽयमीदृशो नियोगो वाक्यार्थः ।

तस्य द्वादशलक्षण्यां तत्तद्रूपं प्रकाशितम् ।
तन्नेह लिख्यतेऽस्माभिर्ग्रन्थगौरवभीरुभिः ॥ 10

---

**न सङ्ख्यारहितस्तत्रोपादातुं शक्यत इति**। अपरिच्छिन्नस्योपादानासम्भवादवश्यमेको द्वौ बहवो वोपादीयन्त इति ।

**तस्य द्वादशलक्षण्यां तत्तद्रूपं प्रकाशितमिति**। किं किं प्रकाशितमित्याकाङ्क्षानिवृत्त्यर्थं दिङ्मात्रमुच्यते। प्रमाणलक्षणे तावत् तस्य नियोगस्य स्वातन्त्र्यप्रतिपत्त्यर्थं वेदस्य नित्यत्वेन प्रामाण्यं प्रतिपादितम्, अर्थवादस्मृत्यादिनामधेयादिद्वारायातमप्रामाण्यं 15 सर्वप्रकारं परिहृतम्। तथा हि नित्यत्वेन प्रमाणाद् वेदाद् योऽवगतो नियोगः, स न लौकिकः 'हरीतकीं भक्षयेद् विरेककामः' इति नियोगवद् विनियोगनिष्ठः, अपि तु स्वतन्त्र एवेति तत्र साधितम्। द्वितीयाध्याये भेदलक्षणे च क्व तस्य प्राधान्यं क्वाप्राधान्यं क्वाभेदः क्व वा भेदः कानि च तस्य भेदकानि प्रमाणानीति चिन्तितम्। तथा ह्याग्नेयोऽष्टाकपालो भवतीत्यादौ प्राधान्यम्। समिधो यजतीत्यादौ त्वप्राधान्यम्। आग्नेयोऽष्टाकपालो भवति, 20 समिधो यजतीत्यादौ च भेदः। आग्नेयोऽष्टाकपालः, व्रीहीनवहन्तीत्यादौ त्वभेदः; उभयत्रैकस्य नियोगस्य साध्यत्वात्। तथा यजेत दद्याज्जुहुयादित्यादौ शब्दान्तरकृतो भेद इत्यादि। तृतीये शेषलक्षणे श्रुत्यादिप्रमाणषट्केन यः पदार्थानां विनियोगः पराङ्गत्वलक्षण प्रतिपादितस्तस्य परस्परान्वयरूपस्वरूपतिरस्कारेण योऽयमत्यन्तं पारार्थ्यलक्षण ऐदमर्थ्येनानुष्ठानपर्यन्तो विशेषस्तत्र नियोगस्यैव व्यापारः, अत एव 'नियोग- 25 गर्भो विनियोगः' इत्याद्युक्तम्। अतो यो मदीयो ममोपकारी स भवद्भिः श्रुत्यादिभिः प्रमाणैरैदमर्थ्यद्वारेण मयि समर्प्यो नान्य इति तत्र चिन्तितम्। श्रुत्यादिप्रमाणस्वरूपञ्च

दिङ्मात्रन्त्वेतदाख्यायि नियोगस्य यथागमम् ।
अमुष्मिन्नपि वाक्यार्थे विवदन्ते मनीषिणः ॥

**फलस्यैव प्रवर्तकत्वम्**

लिङादेरवगम्यमानः कार्यरूपः प्रेरणात्मा च वाक्यार्थो नियोग इत्युक्तम् ।
5 न चासावेवंरूपोऽपि परिदृश्यमानभावनादिव्यतिरिक्तोऽवगम्यते ।

क्रियैव तावत् कार्यात्मा प्रेरणात्मा फलार्थिता ।
प्रतीयते ततोऽन्यस्तु नियोगो नोभयात्मकः ॥

नन्वन्य एव क्रियाकर्तृसम्बन्धात् प्रैष्यप्रैषसम्बन्धो दर्शितः, अयुक्तोऽसौ ।

कुर्यादित्यादिशब्देभ्यः क्रियादिव्यतिरेकिणः ।
10 नार्थान्तरस्य संवित्तिः कस्यचित् प्रेरणात्मनः ॥

---

प्रथमाह्निके दर्शितम् । चतुर्थे तु प्रयुक्तिलक्षणे यत्र श्रुत्यादीनि विनियोजकतां नासादयन्ति, तत्र पश्वेकत्वादौ नियोगस्यैवौपादानिकं विनियोजकत्वं सर्वधर्माणाञ्च क्वचित् पुरुषार्थद्वारेण तस्य प्रयोजकत्वं यथा गोदोहनादेः, क्वचित् क्रत्वर्थत्वेन यथा चमसादेः । एवं सर्वधर्मास्तत्प्रयुक्ता एवेति । यथा ग्राहकाख्यो योऽसौ
15 नियोगस्य व्यापारो येन परिगृहीतान् धर्मान् श्रुत्यादीनि विनियुञ्जत इत्यादि चिन्तितम् । पञ्चमे तु "प्रयोगपर्यन्ते नियोगव्यापारे स्थिते सति पदार्थाः कथमनुष्ठेया बहुत्वात् पदार्थानाम्, एकत्वात् कर्तुर्युगपदनुष्ठानासम्भवाद् अवश्यं क्रम आश्रयितव्यः, तत्र प्रयुक्तिपर्यन्ते नियोगव्यापारे सति क्रमस्यावसरात् । उपादानात्मना व्यापारेण क्रमस्याक्षेपस्तावन्नास्ति, न च क्रमं विना गतिरस्ति । तत्राध्वर्युर्गृहपतिं
20 दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यादौ कः क्रम आश्रीयतामिति चिन्तायां प्रयोग आशुभावाद् यस्य कस्यचित् क्रमस्यानियमेनाश्रयणे प्राप्ते श्रुत्यर्थपाठादिप्रमाणषट्कावगम्यमानक्रम-परित्यागे कारणाभावादुपादानात्मकव्यापाराभावेऽप्यवगम्यमानं श्रुत्यादिभिः क्रमं न परित्यजति नियोगः" इति चिन्तितम् । षष्ठे तु क्रमपर्यन्ते शास्त्रार्थे स्थिते सति कस्तस्यानुष्ठातेति स्थाप्यते । तथा ह्यवगतेऽपि क्रमपर्यन्ते विषये शास्त्रान्नियोगोऽनुष्ठातारं
25 विना अनवगततुल्य इति स्वर्गकामो यजेतेत्यादौ स्वर्गकामादिपदानि कर्तृतया समन्वयाद-वच्छिद्याधिकारितया समनुयन्ति नियोगेन स्वरूपसिद्ध्यर्थमात्मन इत्येवं नियोगस्य रूपं चिन्तितम् । अयं तावदुपदेशषट्कः, अतिदेशषट्क इदानीं चिन्त्यते । तत्र सप्तमे

किमिदानीं करोतीति कुर्यादित्यादि च तुल्य एते प्रतिपत्ती ? अभिनव-मिदं शब्दव्युत्पत्तिमत्त्वम् आयुष्मतः । न ब्रूमो न भिन्ने एते प्रतिपत्ती इति । करोतीति प्रवृत्तक्रिय उच्यते वर्तमानकालावच्छिन्नश्च, किन्त्वसौ प्रैषस्ततोऽ-वगम्यमानोऽपि प्रेरको न भवति न च कार्यं इति ब्रूमः ।

ननु प्रेरकत्वेनैवावगम्यमानः कथं प्रेरको न भवेद्, एतदेवास्य प्रैषत्वं यत् प्रेरकत्वम् ? सत्यम् । प्रेरकत्वेनैवासौ गम्यते, न त्वसौ तथा भवति, व्यवहार मात्रमेतद् । राजाज्ञां करोमीति कार्यत्वमस्य क्रियामात्रं राजाज्ञां करोमीति । 5

आज्ञा हि नाम नैवान्यसम्पाद्यत्वेन गम्यते ।
नानुष्ठातुरियं बुद्धिराज्ञा सम्पाद्यतामिति ॥ 10
एवं हि यस्य कस्यापि प्रवर्तेत स आज्ञया ।
न चेह बालोन्मत्तादिवचनाद् यत्नवर्जितात् ॥
सत्यपि प्रेरणाज्ञाने प्रवर्तन्ते सचेतसः ।
भयं नाशङ्क्यते यस्मात् फलं वापि समीहितम् ॥
तथाविधस्य राज्ञोऽपि नाज्ञानुष्ठीयते जनैः । 15
वर्तमानापदेशेऽपि फलं यत्रावगम्यते ॥

---

सामान्यातिदेशलक्षणे "ये यस्य नियोगस्य प्रकरणे धर्माः श्रुतास्ते तस्यैव, अपूर्वप्रयुक्तत्वाद् धर्माणाम् । अतः 'ऐन्द्राग्नमेकादशकपालं निर्वपेद ब्रह्मवर्चसकामः' इत्यादीनामैन्द्राग्न-प्रभृतीनामौपदेशिकी धर्मप्राप्तिर्नास्ति, तत् किं तेषामधर्माः कर्तव्याः ? अथाधर्मका एव त इति विचार्योपकारापेक्षी नियोगस्तत्रापि प्रकृतिवद् धर्मानाक्षिपति" इति नियोगवृत्तं 20 चिन्तितम् । अष्टमे तु विशेषातिदेशे के धर्माः कस्य कर्तव्या इति विचारः । तथाहि तेजस्वितासामान्यादाग्नेयधर्मानाक्षिपति सौर्यचरुनियोगः, न दधिपयआदिधर्मानिति नियोगरूपं चिन्तितं तत्र । नवमे तूहलक्षणे कथं ते धर्माः प्रयोक्तव्याः, किं यथाश्रुता, यथोपकारा वेति तत्रोपकारद्वारेण धर्माणामाक्षेपाद् यथोपकर्तुं शक्नुवन्ति तथा प्रयोज्या, यथा 'अग्नये त्वा जुष्टं निर्वपामि' इति मन्त्रः सूर्याय........न्वयोऽन्यथा न भवतीति 25 चेद् यथा 'द्रव्यगुणसंस्कारेषु वादरिः' इत्येतद्व्याख्यानावसरे क्रियावाक्यार्थपक्षे

तत्र प्रवर्तते लोको लिङादिष्वश्रुतेष्वपि ।
भवत्यारोग्यसम्पत्तिर्भुञ्जानस्य हरीतकीम् ॥
तत्कामो भक्षयेच्चेति को विशेषः प्रवर्त्तने ।
अन्वयव्यतिरेकाभ्यां तदेवमनुमन्यते ॥
5 प्रेरकत्वं फलस्यैव न नियोगात्मनः पुनः ।

तत्रैतत् स्यात्, लोके भवतु फलार्थित्वात् प्रवर्तनमाराधयिष्यते प्रेरकाशयानुवर्तने वा, तस्य पारम्पर्येण फलहेतुत्वात् । वेदे तु वक्तुरभावात् प्रेरणावगमादेव प्रवृत्तिः । उन्मत्तवाक्यादपि लिङादियुक्तान्न प्रेरणावगमो नास्ति, भवन्नपि फलादर्शनादुपेक्ष्यते उन्मत्त एवं प्रलपतीति । वेदे पुनर्यजेतेत्यत्र प्रेरणावगमात् परित्यागकारणाभावात् तत एव प्रवर्तनम् । प्रवर्तनाभावेऽपि 10 न वेदस्याप्रामाण्यम्, प्रमाणव्यापारस्य तेन निर्वर्तितत्वादित्युक्तम् । उच्यते । वेदेऽपि वक्तास्ति, तदाशयवशेन तत्रापि फलार्थिनां प्रवर्तनमिति सम्भवदपीदमुत्तरं नाचक्ष्महे, कथान्तरप्रसङ्गात् । किन्त्विदं ब्रूमः, प्रेरणावगमादेव प्रवृत्तिसिद्धौ स्वर्गकामपदं बादरिवदन्यथा व्याख्यायताम् । अधिकारानुबन्धाभिधाने पुरुषविशेषणमात्रमेतद् भवतु किं स्वर्गसाध्यत्व-15 कल्पनया ? विशेषणत्वमेवान्यथा न निर्वहतीति चेत् ? आयातं तर्हि फलस्य साध्यत्वम् । तच्चेत् साध्यत्वेनावगम्यते तस्यैव सामर्थ्यसिद्धं लोकानुगुणमव्यभिचारि च प्रवर्तकत्वमुत्सृज्य न प्रेरणावगमस्य तद् वक्तुमर्हसीति ।

नियोगादथ निष्पत्तिः फलस्येत्यभिधीयते ।
फलं प्रत्यङ्गभूतत्वादवाक्यार्थत्वमापतेत् ॥

20 ननु विध्यर्थो न भावार्थवत् फले करणं येनास्य तदङ्गत्वं स्यात्, आक्षेप-

---

समन्वयः प्रतिपादितस्तथा भविष्यति, तदाह **अन्यथा व्याख्यायतामिति** । नन्वधिकारिपदमेतत् कथमन्यथा व्याख्याने नियोगस्याधिकारानुबन्धापेक्षिणो निर्वाह इत्याह **अधिकारानुबन्धाभिधान इति** । निर्विशेषणः पुरुषोऽधिकारी न भवति । प्रागुक्तनीत्या तु स्वर्गेच्छा कथमपि पुरुषं विशेक्ष्यति इति भवति स्वर्गस्याफलत्वेऽप्यधिकारानुबन्ध-25 लाभ इति ।

**आक्षेपकत्वात् तु तस्येति** । यः स्वर्गकामः स कथं स्वर्गसिद्धिमपश्यन् प्रवर्तेतेति

कत्वात्तु तस्य फलार्थत्वमुच्यते, प्रयोक्तृत्वं हि तस्य निजं रूपम्। यद्येवं भावार्थ एव साध्यो भवतु विध्यर्थस्य तु किमनुष्ठेयत्वमुच्यते, सोऽपि भावार्थसिद्धया सम्पद्यते, कृतो मया स्वामिनियोग इति व्यवहारादिति चेत्।

भावार्था तर्हि निष्पत्तिर्नियोगस्य फलस्य च।
इत्येकत्र पदग्रामे वाक्यार्थद्वयमापतेत्॥　　5
किञ्चान्विताभिधानेन विषयत्वावधारणात्।
नियोगस्यैव भावार्थनिष्पाद्यत्वं प्रतीयते॥
स तु भावार्थतः सिद्धः फलाय यदि कल्प्यते।
परार्थत्वादवाक्यार्थो भवेदित्युपवर्णितम्॥
भावार्थस्तु द्वयं कुर्याद् युगपद् वा क्रमेण वा।　　10
युगपन्नास्य सामर्थ्यं समत्वञ्च द्वयोर्भवेत्॥

नियोगश्च शब्दैकगोचरत्वान्मा दर्शि, फलन्तु स्वर्गपश्वादि तेन सह निष्पाद्यमानं किमिति न गृह्यते, क्रमपक्षे पूर्वं वा नियोगः पश्चात् फलं पूर्वं वा फलं पश्चाद् वा नियोगः सिद्धचेदिति। यदि पूर्व नियोगस्तदा तद्विषयाया लिप्साया अनुपपत्तेः करणांशेऽपि धीप्रवृत्तिः स्यात्।　　15

यथा नियोगनिष्पत्तिः प्रयाजादिकृतेन तु।
तत्र प्रवृत्तिः शास्त्रीया भावार्थेऽपि तथा भवेत्॥

---

नियोगः फलमाक्षिपति। कुत एतल्लभ्यत इति चेत् तदाह **प्रयोक्तृत्वं हि तस्येति।** कार्यत्वाद्ध्यसो स्वात्मनः कार्यतानिर्वाहाय सर्वं प्रयुङ्क्त इति भावः। **यद्येवं भावार्थ एव साध्य इति।** तस्यैव सिद्धया फलसिद्धेः।　　20

**किञ्च, अन्विताभिधानेनेति।** प्रकृत्यर्थानुरक्तस्य सर्वदा पदात् प्रतीतेः, निर्विषयस्य च प्रतीतिवदनुष्ठानासिद्धेरतो विषय एव 'यत एतद्विषयो नियोगोऽतोऽहममुं नियोगमेतेन करणभूतेन साधयामि' इति तं प्रति करणीभवतीति तस्यै भावार्थनिष्पाद्यता। **समत्वञ्च द्वयोर्भवेदिति।** समत्वे चैकस्मिन् वाक्यार्थे गुणप्रधानाभावादनन्वयः।

**नियोगश्च शब्दैकगोचरत्वान्मा दर्शीति।** यदुक्तं कुर्यादित्यस्यार्थः कुर्यादित्यनेनैव शब्देन प्रतिपाद्य इति। **तद्विषयाया लिप्साया अनुपपत्तेरिति।** तद्विषयायाः भावार्थ-विषयायाः। पुरुषार्थसाधने हि लिप्सातः प्रवृत्तिर्भवति। नियोगस्य चापुरुषार्थत्वात् तत्साधनमपुरुषार्थसाधनम्।　　25

इष्यत इति चेत्,

नन्वेवं तस्य लिप्सार्थलक्षणेत्यभ्यधायि यत् ।
श्येनादीनामधर्मत्वं वर्णितं तद् विरुध्यते ।।

अथ पूर्वं फलसिद्धिस्ततो नियोगसिद्धिस्तर्हि फलस्य तदानीं दर्शनं
5 भवेत्, सिद्धत्वात् ।

न च भावार्थवेलायां पुत्रपश्वादि दृश्यते ।
अदृश्यमानमप्येतत् सिद्धमित्यतिविस्मयः ।।

अतश्च यत् कैश्चिदुच्यते स्वर्गसिद्धिमवान्तरव्यापारीकृत्य नियोगमनेन भावार्थः सम्पादयतीति तदप्यपास्तम्, अवान्तरस्य व्यापारस्य ज्वलनादेरिव
10 प्रधानव्यापारात् पूर्वं दर्शनप्रसङ्गादिति । अथोच्यते स्वर्गकामस्य स्वर्गं साधयितुमुद्यच्छतो यागेन योगः सम्पाद्यः, श्रूयते, स च चेत् सम्पन्नः शब्दवृत्तेन फलमपि सम्पन्नमेव । आनुभाविकी तु स्वर्गसिद्धिः कालान्तरे भविष्यतीति एतदयुक्तम्, सिद्धिद्वयानुपलम्भात् । न ह्येका शाब्दी सिद्धिरन्या चानुभाविकी नामेति । कालान्तरे चानुभाविकी सिद्धिः कुतस्त्येति चिन्त्यम् ।

15 कालान्तरे च भावार्थः क्षणिकत्वान्न विद्यते ।
शक्त्यादिरूपञ्चापूर्वं न भवद्भिरुपेयते ।।

भवन्तो ह्यपूर्वशब्देन धर्मशब्देन च नियोगमेवापचरन्ति । न च नियोगः शक्तिवद् आत्मसंस्कारवद् वा कालान्तरस्थायी भवति । स हि प्रेरणात्मकः, कार्यरूपो वा, नोभयथापि स्थैर्यमवलम्बते, तत्रैतत् स्याद्, नियोगसिद्धिराक्षिप्त-

---

20 **श्येनादीनामधर्मत्वमिति** । एवं हि श्येनादीनामपि नियोगसाधनत्वादपुरुषार्थसाधनत्वेन न लिप्सातः प्रवृत्तिः स्यात् ।

**सिद्धमित्यतिविस्मय** इति । शाब्दसिद्धयभिप्रायेणोक्तम् ।

**शब्दवृत्तेन फलमपीति** । यथा कस्यचिदमात्यस्य 'राज्ञासौ ते ग्रामो दत्तः' इति यदैवाभिहितं तदैव तस्य साध्यसिद्धया असौ ग्रामः सिद्धः, कालान्तरे तु गत्वा स्वीकारा-
25 दिनानुभाविकी सिद्धिर्भाविनीति ।

**स हि प्रेरणात्मक** इति । यदैव हि प्रेरितोऽहमिति प्रतिपत्तिरुपजायते तदैव तस्य सत्त्वम्, यदा वा साध्यमेतदिति तद्विषया प्रवृत्तिस्तदा तस्य साध्यतया सत्त्वम् ।

फलसिद्धिर्भवति विषयाद्यनुबन्धावच्छिन्नो ह्यसावेवानुष्ठेयः । तत्र यथा तेन तेन कारकचक्रेण क्रियाकलापेन विना सम्पत्तिमलभमानः तत्तदाक्षिपति तथाधिकारानुबन्धवन्ध्योऽपि नासौ सम्पत्तिमधिगच्छतीति तमप्याक्षिपति । यश्चायमधिकारानुबन्धः स एवायं फलाक्षेपः, न तु विधेः फलापेक्षितेत्युक्तम् । एतदयुक्तम् । 5

योे हि येन विना कामं न सिद्ध्येत् स तमाक्षिपेत् ।
नियोज्यमात्राक्षेपे तु नियोगो न फलात्मकः ॥

नियोज्यश्चाण्डालस्पर्शनेनेव स्वर्गकामनोत्पादमात्रेण नियोज्यतां प्रतिपन्न इति कथं नियोज्याक्षेप एव फलाक्षेपः ?

ननु च स्वर्गकामोऽत्र नियोज्यो नान्यथा भवेत् । 10
यदि स्वर्गस्य सम्पत्तिं नाधिगच्छेत् स्वकर्मणः ॥

नैतदेवम्

नरेच्छामात्रमेवेदं न शब्दस्त्वियति क्षमः ।
नियोज्यः स्वर्गकामो हि भवेज्जीवनवानिव ॥

ननु लोके काम्यमानस्य साध्यत्वं दृष्टं हरीतकीं भक्षयेदारोग्यकामस्तेन वेदेऽपि यजेत स्वर्गकाम इति स्वर्गस्य साध्यत्वमवभोत्स्यामहे । साधो ! लोकेऽपि कथमेतदवगतम्, नियोज्यसमर्पकपदवाच्यपर्यालोचनेन विधिवृत्तपरीक्षया वा । 15

पदार्थस्तावदेतावानेवङ्कामो ह्यसाविति ।
इदन्तु सिद्ध्यते तस्मादिति तस्य न गोचरः ॥ 20

---

**नियोज्यश्चाण्डालस्पर्शनेनेवेत्यनेन** एकादशाद्यपूर्वपक्षोक्तं निमित्तपरत्वं स्वर्गकामादिपदानां प्रदर्शयति । यथेच्छतोऽनिच्छतो वा चाण्डालस्पर्शे जाते स्नानेऽधिकारस्तथा स्वर्गं प्रति य इच्छां करोति तस्य यागेऽधिकार इति ।

**ननु च स्वर्गकामोऽत्रेति** । अनेन स्वर्गस्य प्रीतिरूपत्वात्, प्रीतेश्च भाव्यत्वेनैवान्वयो युक्त इति पूर्वं स्थापितं तदेव सूचितम्, चाण्डालस्पर्शे स्नायादित्यत्रेच्छा न श्रुता, इह तु सा श्रुता, अतोऽत्र साध्यत्वेनैवान्वयो युक्त इति यावत् । 25

**भवेज्जीवनवानिव** । असाध्येऽपि स्वविशेषणे ।

विधेरेष स्वभावश्चेदायुष्मन् ! साधु बुध्यसे ।
भाट्टैः किमपराद्धं तैर्नित्येऽपि फलवादिभिः ॥
अधिकार्यनुपादेयविशेषणविशेषितः ।
जीवन् वा स्वर्गकामो वा समानः काम्यनित्ययोः ॥
5 विधिवीर्यस्वभावस्तु क्रमेरपि तथाविधः ।
सप्रत्ययप्रेरकतां विधिर्नोपैति निष्फलः ॥

ननु कामाधिकारे स्वर्गः श्रूयते नित्याधिकारे त्वसौ न श्रूयते, अश्रूयमाणः कस्यानुरोधेन कल्प्यते ? विधेरेवेति ब्रूमः । स्वर्गेन श्रुतेनापि किं करिष्यति यद्यसौ विधिना नापेक्ष्यते, घृतकुल्या अस्य भवन्तीत्यादिवदश्रुतोऽपि 10 चासौ विधिनाकृष्यत एव । तस्माद् विधिरत्र प्रमाणं न श्रवणाश्रवणे इति काम्यवन्नित्येऽपि फलमभ्युपगन्तव्यम्, न वा क्वचिदपीति ।

प्रतिषेधाधिकारेऽपि विधिवृत्तपरीक्षया ।
एवं नरकपातादिफलयोगो न दुर्भणः ॥

येन हि दुर्विषहक्लेशद्वेषकलुषितमनसा ब्राह्मणहननं सुखसाधनमिति 15 कर्त्तव्यमिति गृहीतम्, निरर्गलरागरसिकेन सुरापानं सुखसाधनमिति गृहीतम्, स ततो विधिना वार्यते यदि तदसुखसाधनमिति ज्ञाप्यते । तस्मान्नित्येषु प्रत्यवायपरिहार इव उपात्तदुरितक्षय एव वा प्रतिषिध्यमानेषु कर्मसु नरकपातः

---

**नित्येऽपि फलवादिभिरिति** । प्रत्यवायपरिहारं ये फलमिच्छन्ति ।

**घृतकुल्या अस्य भवन्तीत्यादिवदिति** । यथा 'स्वाध्यायोऽध्येतव्यः' इत्यस्य 20 दृष्टेनार्थावबोधलक्षणेन फलेन फलवत्त्वाद् विधेः "यदृचोऽधीते घृतकुल्या भवन्ति" इत्येवमादीनामर्थवादमात्रतयैवान्वयः, न पुनः फलतया विधिस्तान्यपेक्षते । अश्रुतोऽपि चासाववबोधादिः ।

**उपात्तदुरितक्षय एवेति** । प्रत्यवायस्य परिहारोऽनुत्पत्तिः प्रागभावस्तस्य नित्यत्वात् साध्यत्वानुपपत्तिः, अत उपात्तदुरितक्षयो नित्यानां फलमिति केचित् । अन्ये तूभयमेव 25 फलमिति । अपरे तु येषामकरणे प्रत्यवायः श्रूयते तेषां करणात् प्रत्यवायपरिहारः, येषान्त्वकरणात् प्रत्यवायश्रुतिर्नास्ति तेषां करणादुपात्तदुरितक्षयः फलमित्याहुः । उपात्तस्य सञ्चितस्य दुरितस्य क्षयः प्रध्वंसः ।

फलमित्यभ्युपगमनीयम् । इतरथा ह्यर्थानर्थविवेको न सिद्ध्यति ।

एवञ्च ब्रह्महत्यादेरपि नैवास्त्यधर्मता ।
किं पुनः श्येनवज्रादेरित्यर्थग्रहणं वृथा ॥
करणांशेऽपि लिप्सातः प्रवृत्तिर्यद्युपेयते ।
इतिकर्त्तव्यतांशे तु शास्त्राद् यदि तदप्यसत् ॥
न हि तत्करणं शुद्धं स्वफलायोपकल्पते ।
सेतिकर्त्तव्यताकं हि करणं करणं विदुः ॥

अवान्तरविभाग एवैष करणेतिकर्त्तव्यतालक्षणः, सकलाङ्गोपवृंहितस्वरूपस्तु भावार्थः काम्यमानोपायतां प्रतिपद्यते नैकेनाप्यंशेन न्यूनः । अत एव काम्यानां कर्मणां सर्वाङ्गोपसंहारेण प्रयोगमिच्छन्ति । तस्मात् करणवदितिकर्तव्यतायामपि लिप्सात एव प्रवृत्तिः स्यात् ।

उभयत्रापि लिप्सातः सति चैवं प्रवर्तने ।
अग्नीषोमीयहिंसादेः श्येनादिवदधर्मता ॥

यदप्युक्तं कामाधिकारेषु काम्यमानभावार्थयोरुपायोपेयभावमात्रप्रतिपादनपर्यवसितो विधिव्यापार इति तदपि न सम्यक्, विधिपुरुषयोर्हि प्रेर्यप्रेरकलक्षणः सम्बन्धः । तत्र यागादयो विषयत्वेन प्रतीयन्ते नेष्यमाणोपायत्वेन । साध्यसाधनमात्रप्रतिपादनपर्यवसितव्यापारस्तु विधिर्विनियोगपर एव स्यात्, ततश्चाप्रवृत्तप्रवर्तकत्वं नाम निजं रूपं जह्यात् ।

---

**इतरथा हीति ।** ब्रह्महत्यादेरनिष्टसाधनत्वानभ्युपगमेन । "कोऽर्थः ? योऽभ्युदयाय ज्योतिष्टोमादिः, कोऽनर्थः ? यः प्रत्यवायाय श्येनो वज्र इषुरित्येवमादिः' इति **योऽर्थानर्थविवेकः ।**

**ब्रह्महत्यादेः** साक्षाद्धिंसारूपस्य । **श्येनवज्रादेः** फलद्वारेण, न साक्षात् ।

**अत एव काम्यानां कर्मणामिति ।** यत एव सकलाङ्गोपवृंहितस्वरूपो भावार्थः काम्यमानोपायतां प्रतिपद्यते सर्वेषामङ्गानामुपसंहारेणानुष्ठानसम्पत्त्या ।

**विनियोगपर एव स्यादिति ।** विनियोग ऐदमर्थ्यम्, यज्ञात् स्वर्गो भवतीत्यादि ।

विधेश्चतुरवस्थत्वं फलतः किल कथ्यते ।
प्रेरकत्वञ्च तद्रूपं सर्वावस्थानुगामि यत् ॥
कार्यात्मतापि विध्यर्थे प्रेरणाज्ञप्तिपूर्विका ।
प्रेर्येणैव सता पुंसा तत् कार्यमवधार्यते ॥
5 लिङादिश्रुतितश्चादौ प्रेरणैव प्रतीयते ।
साध्यसाधनसम्बन्धबुद्धिस्तद्बुद्धिपूर्विका ॥

नन्वेवं काम्येषु कर्मसु विधितः प्रवृत्ताविष्यमाणायामप्रवर्तमानः प्रत्यवेयाद् विध्यतिक्रमात् ? मैवम् । स्वर्गं संसिषाधयिषोस्तत्राधिकारादन्यस्त्वनधिकृत एव क्षत्रियादिरिव वैश्यस्तोमे । नासावकुर्वन् प्रत्यवायमर्हति, स्वर्गार्थी 10 तु विधितः प्रवर्तत एव, लिप्सया तु करणांशे प्रवृत्तिरिष्यमाणा क्रत्वर्थमितिकर्त्तव्यतांशमपि सैव स्पृशेत् । क्रतूपकारकामो हि तत्र प्रवर्तते इत्येवं सर्वत्र विधिरुत्सीदेदेवेत्यलं प्रसङ्गेन ।

अपि च

प्रमाणान्तरसम्पर्कविकले भवतः कथम् ।
15 नियोगात्मनि वाक्यार्थे व्युत्पत्तिर्व्यवहारतः ॥

ननूक्तमाकूतविशेषपूर्विकां चेष्टामात्मनिष्ठां दृष्ट्वा परत्रापि तथानुमानमित्ययुक्तमिदम्, स्वात्मन्यपि प्रेरणावगमनिमित्ताभावात् । न ह्यात्मसंविदिव स्वप्रकाशा प्रेरणा । संवित्स्वप्रकाशेति चेत् ? तदुत्पादे तर्हि निमित्तं मृग्यम् । न तावच्छब्दस्तदानीं व्युत्पत्त्यभावात्, स्वात्मनि प्रेरणावगमपूर्विकां हि चेष्टामुप- 20 लब्धवतस्ते परत्र चेष्टादर्शनात् तदनुमानं सेत्स्यति, तन्निमित्तं लिङादिशब्द इति भोत्स्यते, स पुनर्व्युत्पत्तिकाले स्वात्मन्येव प्रेरणावगमश्चिन्त्यो वर्त्तते, प्रमाणान्तरात्तु तदवगम इति चेद्, उत्तिष्ठासिद्धं शब्दैकगोचरत्वम् ।

या चेयं पूर्वावधारितसुखसाधनभावे कपित्थादौ स्वात्मनि प्रवृत्तिरुप-

---

**फलतः किल कथ्यत** इति । न साक्षात् प्रेरकत्वयोगेन त्वयापि । तत् सर्वत्र 25 वैध्येव प्रवृत्तिरिति तात्पर्यम् ।

**स्वर्गार्थी तु विधितः प्रवर्तत एव,** अप्रवर्तमानो न स्वर्गार्थी स्यादिति भावः ।

लब्धा तत्र प्रेरकत्वेन फलार्थिता निर्ज्ञाता, नान्या काचित् प्रेरणा । तदुक्तं 'स्मरणादभिलाषेण व्यवहारः प्रवर्तते' इति । फलविषया हीच्छा तत्र स्वसंवेद्या ।

अतश्च प्रेरकाज्ञानं शब्दादपि परस्य यत् ।
कल्प्यते कल्प्यतां तत्र प्रेरिका सैव सुन्दरी ॥　　5
चपेटापरिहाराय मोदकप्राप्तयेऽपि वा ।
प्रवर्तते वटुर्नासौ जुहुधीति नियोगतः ॥

**फलस्य प्रवृत्तिजनकतायां दोषोद्धारः**

कथं तर्ह्येवमाचष्टे आचार्यचोदितोऽहं जुहोमीति, अस्त्वयं व्यपदेशः, आचार्यचोदना तु न तत्र कारणम्, अपि तु हिताहितप्राप्तिपरिहारार्थित्व-　10
मेवेत्यतः फलं प्रवर्तकं युक्तम्, अनुभवसाक्षिकत्वात् ।

येऽप्याहुः प्रयोक्त्राशयस्य प्रवर्तकत्वं यतोऽननुविधेयवचनान्न प्रवर्तमानः कश्चिद् दृश्यते, अनुविधेयस्य पुंसः किञ्चिदब्रुवतोऽपि भ्रूभङ्गा-दिनाशयमवगम्य प्रवर्तत इति ।

एतदप्ययुक्तम् । यतः प्रयोक्त्राशयानुमानेन स्वार्थसम्भावनया लोकः　15
प्रवर्तते, न पुनः प्रयोक्त्रैव प्रीयतामिति तत्प्रीतिरपि स्वप्रीतिहेतुत्वेनार्थ्यते न तत्प्रीतित्वेन । बुद्धोऽपि हि नाम सकलसत्त्वहितप्रतिपन्नः परार्थं स्वप्रयो-जनायैव सम्पादयति परार्थसम्पादनद्वारकन्तु तत् । तस्मात् स्वप्रीतिरेव प्रवर्तिका । प्रयोक्त्राशयस्य च प्रवर्तकत्वे वेदार्थप्रयोक्त्राशयानवधारणाद्

---

**नान्या काचित् प्रेरणा**कूतविशेषः 'प्रवर्तितव्यं मयाऽत्र' इत्यादिकः ।　20

**स्मरणादभिलाषेणे**त्यस्य पूर्वमर्धम् "तद्दृष्टावेव दृष्टेषु संवित्सामर्थ्यभाविनः" इति ।

**अननुविधेयवचनादिति ।** यस्मिन्नाराधिते कार्यं किञ्चित् सिध्यति सोऽनु-विधेयः ।

**वेदार्थप्रयोक्त्राशयानवधारणादिति ।** नित्यत्वे तदाशयाभावादनवधारणम्,　25
अनित्यत्वे तु ज्योतिष्टोमादिकर्मानुष्ठानं लोकः कुरुतामित्येवंरूपस्तस्याशयः । यदि न

अप्रवृत्तिरेव प्राप्नोति । तस्मात् फलमेव प्रवर्तकम् ।

यत्पुनः फलस्य प्रेरकत्वे दूषणमभ्यधायि सिद्धासिद्धविकल्पानुपपत्तेरिति, तदप्ययुक्तम्, इच्छाविषयीकृतस्य प्रवर्तकत्वाभ्युपगमात् । असिद्धे कथं नेति चेत्, असिद्धत्वादेव । इदानीञ्च तदसिद्धं नैकान्तासिद्धस्वरूपमेव खपुष्पवत् ।

5 सुखे दुःखनिवृत्तौ वा पुंसां भवति कामना ।
न पुनर्व्योमपुष्पादि कश्चित् कामयते नरः ॥

येऽपि रागादेः प्रवर्तकत्वमभ्युपगतवन्तस्तैरपि कामनाविषयीकृतं फलमेव प्रवर्तकमभ्युपगतम् । इच्छाविशेषा एव हि रागादयः ।

यदपि श्रेयःसाधकं प्रवर्तकमुच्यते तदपि न चारु, सत्यामपि श्रेयः-
10 साधनतायामनर्थित्वेन प्रवृत्त्यभावात् ।

नन्वर्थिनोऽपि नानियतविषया प्रवृत्तिरपि तु निर्ज्ञातश्रेयःसाधनभावेऽर्थे । तस्मात् तत्साधनावगमः प्रवर्तकः ? सत्यम् । द्वये सत्यपीच्छैव प्रवर्तिका वक्तुं युक्ता, तस्यां प्रवृत्तिदर्शनात् । प्रवृत्तिर्हि नाम प्रयत्नः, प्रयत्नश्चेच्छाकार्यमिति काणादाः । विषयनियमे तु श्रेयःसाधनत्वं कारणं न प्रवृत्त्युत्पादे । किञ्च
15 भावनावगतं श्रेयःसाधनत्वं प्रवर्तकमिष्यते तैः, तच्च न पृथगभिधातुं युक्तम्, भावनायाः त्र्यंशत्वेन तत्स्वरूपावगमसमये एतदंशयोः स्वर्गयागयोः साध्यसाधनभावावगतिसिद्धेः । न चांशद्वयावच्छिन्नस्य व्यापारस्य श्रेयःसाधनत्वं रूपं

---

कुरुते तदसावाज्ञाभङ्गात् स्वामिवत् कुप्यतीति नावधार्यते ।

**तच्च न पृथगभिधातुं युक्तमिति।** भावनैवावगम्यमाना स्वसामर्थ्यवशाद्
20 यागस्य श्रेयःसाधनत्वं विना नावगम्यतेऽतो भावनाशब्दादंशत्रयात्मकतत्स्वरूपवत् फलसाधनत्वमप्यंशगतं समधिगतमेवेत्यव्यभिचरिततद्रूपत्वाद् भावनायाः पृथक्शब्दान्तरेणाभिधानं तस्यायुक्तम्, गतार्थत्वात् । न चांशत्रयात्मिकायास्तस्या एकांशगतेन श्रेयःसाधनत्वेन व्यपदेशो युक्तः। यदि हि तदपेक्षया श्रेयःसाधनत्वम्, तत्फलापेक्षया न श्रेयःसाधनत्वम् अपि तस्य फलस्य स्वयं श्रेयोरूपत्वेन श्रेयःसाधनत्वाभावादिति।
25 कथ्यमानो हि पृथग्धर्मः स वक्तुं युक्तो योंऽशत्रयसाधारणः। न च श्रेयःसाधनत्वमंशत्रयसाधारणमिति भावः। तैरिति माण्डनान् निर्दिशति। न **चांशद्वयावच्छिन्नस्येति।**

वक्तुमुचितम्, अनिष्पन्नस्य तस्य ताद्रूप्याभावात्। न ह्यनिष्पन्ने गवि तदेकदेशे सास्नादौ गोत्वरूपं सामान्यं निविशते, न चांशत्रयपूरणमन्तरेण भावनाख्य-व्यापारनिष्पत्तिरिति।

यत्तु लिङादेः शब्दस्य तद्व्यापारस्य वा प्रेरकत्वमुच्यते तत् प्रागेव प्रतिक्षिप्तम्। 5

विधिरपि स्वमहिम्ना न प्रेरकः साध्यसाधनसम्बन्धावबोधपुरःसरे तु तस्य प्रवर्तकत्वे फलस्यैव प्रवर्तकत्वमिदमनक्षरमभिहितं भवति।

यस्त्वाह प्रेरकत्वञ्चेत् फलं दर्शयतो विधेः।
प्रत्यक्षादिसमानत्वात् स्वातन्त्र्यं तस्य हीयते॥
स वाच्यः फलशून्यत्वे सुतरामस्वतन्त्रता। 10
यद्रिक्तमर्थं मूढोऽपि न कश्चिदनुतिष्ठति॥

को हि नाम निष्फलमर्थं प्रेक्षावाननुतिष्ठेत्। ननु फलेऽपि दर्शिते केचित् तत्र न प्रवर्तन्त एव। किञ्चातः, कामं मा प्रवर्त्तिषत, न हि कारको विधिरपि तु ज्ञापक इत्युक्तम्। ननु फलमप्रदर्शयन्नपि ज्ञापयेत्? न ज्ञापयितु-मुत्सहते। प्रेक्षावान् हि ज्ञाप्यते। न च फलं विनासौ तथा ज्ञापितो भवति, 15 इत्यलं बहुभाषितया।

फलस्यैवेष्यमाणस्य पश्यन् प्रेरकतामतः।
यमर्थंमधिकृत्येति सूत्रं व्यधित सूत्रकृत्॥

तस्मात् पुंसः प्रवृत्तौ प्रभवति न विधिर्नापि शब्दो लिङादि-
व्यापारोऽप्येतदीयो न हि पटुरभिधा भावनानामधेया। 20
न श्रेयःसाधनत्वं विधिविषयगतं नापि रागादिरेवं
तेनाख्यत् काम्यमानं फलममलमतिः प्रेरकं सूत्रकारः॥

---

अंशद्वयं करणेतिकर्तव्यताख्यम्। **अनिष्पन्नस्य** फलांशापेक्षया अपरिपूर्णस्य। **ताद्रूप्येति** ताद्रूप्यं श्रेयःसाधनत्वम्। श्रेयःसाधनत्वं हि भावनायाः सामान्यम्, न भावनैकदेशस्य। अन्यथा हि 'भावनायाः श्रेयःसाधनत्वम्' इति व्यपदेशो न स्यात्। 25

**प्रत्यक्षादिसमानत्वादिति।** यथा प्रत्यक्षं वस्तु दर्शयति, केवलं यस्तु तत्रार्थी स प्रवर्तते। एवं विधिः फलं प्रदर्शयति, फलार्थिनस्तु तत्र प्रवृत्तिरिति।

**वाक्यार्थनिरूपणे प्रकरणसङ्गतिचिन्ता**

आह,

परपक्षं प्रतिक्षिप्य प्रेरकं कथितं फलम् ।
एवं परमतद्विष्टैर्वाक्यार्थः स्वयमुच्यताम् ॥

5 उच्यते । 'यमर्थमधिकृत्य पुरुषः प्रवर्तते तत् प्रयोजनम्' इति वदता सूत्रकृता फलं प्रवर्तकमिति प्रदर्शितम् । "प्रमाणेनायं खलु ज्ञाता अर्थमुपलभ्य तमीप्सति जिहासति वा । तस्येप्साजिहासाप्रयुक्तस्य समीहा प्रवृत्तिरुच्यते । सामर्थ्यं पुनरस्याः फलेनाभिसम्बन्धः" इति च ब्रुवाणो भाष्यकारोऽपि फलेप्सां प्रवर्तिकां प्रादीदृशदिति तदीयां सरणिमनुसरद्भिरस्माभिरपि तथैव 10 तत् कथितम् ।

वाक्यार्थस्तु न क्वचिदपि सूत्रकारभाष्यकाराभ्यां सूचित इति चेत्, पृथक्प्रस्थाना इमा विद्याः, प्रमाणविद्या चेयमान्वीक्षिकी न वाक्यार्थविद्येति ।

यद्येवं पदार्थोऽपि कस्मादिह दर्शितः "व्यक्त्याकृतिजातयः पदार्थः" 15 इति ? स्थाने प्रश्नः । स तु शब्दानामर्थास्पर्शितां वदन्तञ्च शमयितुं शब्दप्रामाण्यसिद्धये सूत्रकृता यत्नः कृतः ।

यद्येवं वाक्यार्थमपि बाह्यं वास्तवमन्तरेण शब्दप्रमाणता न प्रतिष्ठां लभत इति तत्रापि प्रयत्नः कर्तव्य एव । सत्यम् । पदार्थप्रतिपादनयत्नेनैव तु कृतेन तत्र यत्नं कृतं मन्यते सूत्रकारो यदयं पृथक् पदार्थेभ्यो न वाक्यार्थ- 20 मुपदिशति स्म । तस्मादयमस्याशयः, पदार्थ एव वाक्यार्थं इति । तत् किममुमेव पक्षमनुमोदामहे पदार्थ एव वाक्यार्थ इति ? बाढं ब्रूमः । किन्च नैकपदार्थो वाक्यार्थोऽनेकस्तु पदार्थो वाक्यार्थः ।

नन्वनेकोऽपि भवन् पदार्थ एवासौ । न च पदार्थो वाक्यार्थो भवितुमर्हति । सामान्ये हि पदं वर्तते, विशेषे वाक्यम् । अन्यच्च सामान्यम् अन्यो विशेषः । 25 अन्यत्राप्युक्तम् 'यत्राधिक्यं स वाक्यार्थः' इति । तस्मादन्यः पदार्थोऽन्यश्च वाक्यार्थः ।

उच्यते । यदेतदुक्तमस्माभिरनेकः पदार्थो न पुनरेक इति, तन्न गृहीतम् आयुष्मता । एतदुक्तं भवति परस्परं संसृष्टपदार्थसमुदायो वाक्यार्थ इति । संसर्ग एवाधिक इति यत्राधिक्यमित्युच्यते । न चानाक्षिप्तविशेषत्वेन संसर्ग उपपद्यत इति विशेषो वाक्यार्थ इत्युच्यते । संसर्गस्तु स्वरूपतो न वाक्यार्थोऽपदार्थत्वात्, गौः शुक्ल आनीयतामिति पदार्थग्रामे संसर्ग- 5 वाचिनः पदस्याश्रवणात् । श्रवणेऽपि सुतरामनन्वयाद् गौः शुक्ल आनीयतां संसर्ग इति कोऽस्यार्थः ? तस्मात् संसृष्टो वाक्यार्थो न संसर्गः । तदुक्तम् 'व्यतिषक्ततोऽवगतेर्व्यतिषङ्गस्य' इति । न च तन्तुभिरिव पटो वीरणैरिव कटस्तदतिरिक्तोऽवयविस्थानीयः पदार्थैर्निवर्त्यमानो वाक्यार्थ उपलभ्यते, जातिगुणक्रियावगमेऽपि अवयविबुद्धेरभावात् । न च पदार्था- 10 वयवी वाक्यार्थः, तेन पृथग् वाक्यार्थं नोपदिष्टवानाचार्यः ।

ननु गुणप्रधानभावमन्तरेण न संसर्गोऽवकल्पते, न चैकस्मिन् वाक्ये बहूनि प्रधानानि भवन्ति, प्राधान्यमेव हि तथा सति न स्यात् । गुणास्तु बहवो भवन्ति । तदिदमनेकगुणोपरक्तमेकं किञ्चित् प्रधानम् । स वाक्यार्थ इति तद्विषयेयमेकस्वभावा बुद्धिः । सत्यम् । तथापि त एव संसृष्टाः पदार्था 15 अवभासन्ते न तदारब्धः कश्चिदेकः । संसर्गसिद्धिकृतस्तु गुणप्रधानभावोऽभ्युपेयते । स च गुणप्रधानभावो न नियतो येनैकमेवेदं प्रधानमिति व्यवस्थाप्येत । क्वचित् क्रिया प्रधानं कारकं गुणः व्रीहिभिर्यजेतेति, क्वचित् कारकं प्रधानं क्रिया गुणो द्रव्यस्य चिकीर्षितत्वेनावगमाद् व्रीहीन् प्रोक्षतीति । 20

---

**व्यतिषक्ततोऽवगतेरिति ।** प्राभाकरवचो ज्ञापकत्वेनाह । व्यतिषक्तेभ्यः सम्बद्धेभ्यः पदार्थेभ्यो व्यतिषङ्गः सम्बन्धोऽवगम्यते । न ह्यसति सम्बन्धे सम्बद्धपदार्थप्रतीतिरित्यार्थी सम्बन्धप्रतीतिः ।

**प्राधान्यमेव हि तथा सति न स्यादिति ।** न हि प्रधानानां परस्परसम्बन्धो भवति परस्परसम्बद्धपदार्थप्रतिपादकञ्च वाक्यम्, अतः सम्बन्धबलात् सर्वेषां प्राधान्याभावः । **द्रव्यस्य चिकीर्षितत्वेन** द्रव्यसंस्कारकत्वेन । 25

**वाक्यस्वरूपविचारारम्भः**

सिद्धतन्त्रं क्वचित् साध्यं तत्तन्त्रमितरत् क्वचित् ।
शब्दप्रयोगतात्पर्यपर्यालोचनया भवेत् ।।

तस्माद् गुणप्रधानभावानियमादन्योन्यसंसृष्टः पदार्थसमुदायो वाक्यार्थ
5 इति । एतावदेव श्रेयः । संसर्गावगमे च सर्ववादिनामविवादः ।

वाक्यार्थं मन्वते येऽपि नियोगं भावनां क्रियाम् ।
तैरप्यन्योन्यसंसृष्टः पदार्थग्राम इष्यते ।।

ननु संसर्गवदन्यव्यवच्छेदोऽपि गम्यते, गौः शुक्ल आनीयतामिति श्रुते कृष्णादिभ्यो व्यवच्छिद्यते । अन्यापोहस्तु न पदार्थ इत्युक्तम्, तस्मान्न भेदो
10 वाक्यार्थः ।

ननु संसर्गोऽपि न शब्दार्थः । सत्यम् । स हि शब्दस्याभिधेयो न भवति, न तु ततो न प्रतीयते । अनभिधेयः कथं प्रतीयत इति चेत्, एतदग्रे निर्णेष्यते । व्यवच्छेदे तु न सा गतिः । तस्मात् संसृष्टाः पदार्था वाक्यार्थ इति स्थितम् ।

15 अथ वा गुणीभूतेतरपदार्थानुगृहीत एक एव प्रधानभूतः पदार्थो वाक्यार्थ इत्येकाकारप्रतीतिबलादुपेयताम् ।

**फलस्य वाक्यार्थत्वकथनम्**

एकस्त्वयमसावर्थ इति न निर्णेतुं शक्यते । यदि त्ववश्यमेकस्य कस्यचिदभिषेककलशो दातव्यस्तत् फलस्यैव दीयताम् । न हि निष्प्रयोजनं
20 किञ्चिद् वाक्यमुच्चार्यते ।

क्वचित् साक्षात् पदोपात्तं क्वचित् प्रकरणागतम् ।
क्वचिदालोचनालभ्यं फलं सर्वत्र गम्यते ।।

---

**शुक्लगुणसंस्पृष्ट इति** । ( अस्य प्रतीकस्य मूलेऽभावः । ) यदि ह्यन्यव्यवच्छेदस्तस्य नास्ति तदा शुक्लेनैव गुणेन संसर्गो न स्यादित्यार्थोऽसौ ।

25 **क्वचित् प्रकरणागतम्** । फलवत्प्रकरणे समाम्नानात् प्रयाजादिष्विव । **क्वचिदालोचनालभ्यं** विश्वजिदादाविव । नित्येषु विधिस्वरूपपर्यालोचनालभ्यम् ।

सकलेन च कारककलापेन क्रिया निर्वर्त्यते, क्रियया च फलम्, न तु फलेनान्यत् किमपि निर्वर्त्यत इति प्रधानत्वात् फलमेव वाक्यार्थः ।

ननु फलमपि पुरुषार्थमिति पुरुषः प्रधानं स्यात्, नैतदेवम् । फलं सुखात्मकत्वात् पुरुषाश्रितं भवति, सुखादीनामात्मगुणत्वात्; न चैतावता पुरुषः प्रधानम् । सोऽपि हि फलार्थमेव यतते । भावना तावत् फलनिष्ठ एव व्यापारः, नियोगस्यापि फलं विना न प्रवर्तकत्वमित्युक्तम् । क्रियाया अपि केवलाया वाक्यार्थत्वमपास्तम् ।

तस्मात् फलस्य साध्यत्वात् सर्वत्र तदवर्जनात् ।
क्रियादीनाञ्च तादर्थ्यात् तस्य वाक्यार्थतेष्यते ॥

ननु फलस्य स्वर्गादेर्निसर्गतः सिद्धरूपत्वात् कारकैः सह सम्बन्धो न प्राप्नोति । सिद्धस्य च कः सम्बन्धः ? क्रियागर्भं इति चेत्, तर्हि फलमपि कारकाण्यपि क्रियया सम्बध्यन्ते, को विशेषः ? सत्यम् । परन्तु कारकाणि साधनत्वेन फलन्तु साध्यत्वेन । क्रियया हि फलं साध्यते न फलेन क्रियेत्यतः फलस्यैव प्राधान्यमिति सिद्धम् ।

अन्योन्यसङ्गतिविशेषित एव यस्माद्
वाक्यार्थभावमुपयाति पदार्थपुञ्जः ।
एतच्च चेतसि निधाय ततो न भिन्नं
वाक्यार्थमभ्यधित कञ्चन सूत्रकारः ॥
प्राधान्ययोगादथ वा फलस्य
वाक्यार्थता तत्र सतां हि यत्नः ।
प्रयोजनं सूत्रकृता तदेव
प्रवर्तकत्वेन किलोपदिष्टम् ॥

**उद्योगस्य वाक्यार्थतावादिनां मतनिरासः**

अपरे पुनर्लिङादिशब्दश्रवणे सति समुपजायमानमात्मस्पन्दविशेषमुद्योगं

---

अथवा फलमेव वाक्यार्थो न संसर्ग इति **'प्राधान्ययोगादथ वा फलस्य'** इत्यादिनाह ।

नाम वाक्यार्थमाचक्षते, तत्स्वरूपन्तु वयं न जानीमः। कोऽयमात्मस्पन्दो नामेति। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा हि नव आत्मनो गुणा विशेषगुणा भवन्ति नान्ये। तत्रायमात्मस्पन्दो बुद्धिर्वा स्यात्, प्रयत्नो वा, इच्छाद्वेषयोरन्यतरो वा; अन्ये तु विकल्पयितुमपि न युक्ताः। तत्र यदि 5 बुद्धिरात्मस्पन्द उच्यते तर्हि प्रतिभा वाक्यार्थ इत्युक्तं भवति, न नूतनं किञ्चिदुत्प्रेक्षितमेतत्। अथ प्रयत्न आत्मस्पन्दस्तर्हि भावनाया नामान्तर-करणमुद्योग इति। अथेच्छाद्वेषयोरन्यतरोऽसौ, तर्हि सुखेच्छा दुःखजिहासा वा वाक्यार्थ इत्यक्षपादपक्ष एवायम्, नापूर्वं किञ्चित्। अथापि भाट्टपरिकल्पितो व्यापार आत्मस्पन्दः, सोऽपि भावनैव नार्थान्तरम्। अथानुष्ठेयः प्रेरकः 10 कश्चिदर्थ उद्योगः, स तर्हि नियोग एव; उपसर्गान्यत्वमिदं न वस्तु अन्यत्।

तस्मादश्रुतपूर्वेण कृतमुद्योगपर्वणा।
स भारतमनुष्याणां गोचरो न तु मादृशाम्॥

**प्रतिभाया वाक्यार्थत्ववादिमतनिरासः**

15 अन्यैस्तु प्रतिभा वाक्यार्थ इष्यते। तत्पक्षस्तु संसर्गनिर्भासज्ञाननिराकरणेन प्रागेव प्रतिक्षिप्तः।

प्रतिभा खलु विज्ञानं तच्च शब्देन जन्यते।
न तु शब्दस्य विषयो रूपधीरिव चक्षुषः॥

बाह्यस्य विषयस्याभावात् सैव विषय इति चेन्न, तस्य समर्थितत्वात्। 20 योऽपि व्याघ्र आयात इत्युक्ते शूरकातरनराधिकरणनानाप्रकारकार्योत्पादः स बाह्येऽर्थे व्याघ्रागमनादौ प्रतिपन्ने वासनानुसारेण भवन् न प्रतिभामात्र-हेतुको भवति। तस्य हि ज्ञायमानोऽर्थः करणं न तज्ज्ञानमात्रम्। अर्थस्तदानीं नास्तीति चेद्, विप्रलम्भकवाक्यमिदम्, असत्यार्थं भविष्यति न

---

**न तु शब्दस्य विषय** इति। अर्थो हि तस्य विषयः।

25 **नानाप्रकारकार्योत्पाद** इति। नानाप्रकाराणि पलायनसंरम्भादीनि कार्याणि बाह्यस्यार्थस्यैकाकारत्वेऽपि भवन्तीति बाह्यार्थानपेक्षा, स्ववासनानुसारेण प्रमातॄणां

त्वबाह्यविषयं तत् । यथा अवस्थिते वनितात्मनि बाह्येऽर्थे वासनानुसारेण कुणप इति, कामिनीति, भक्ष्यमिति प्रतिभा भवन्ति तथा शब्दार्थेऽपि व्याघ्रागमनेऽवगते शूराणामुत्साहः, कातराणां भयमित्यादि कार्यं भवति । न त्वेतावता प्रतिभा शब्दार्थो भवितुमर्हति । तस्माद् वाक्यप्रयोजनत्वेन वा यदि प्रतिभा वाक्यार्थः कथ्यते, कथ्यतां नाम, न त्वसौ शब्दस्याभिधेया । 5
अनभिधेयापि संसर्गवद् वाक्यार्थ इति चेत्, तत्राप्युक्तम्, संसृष्टा अर्था वाक्यार्थो न संसर्गः । एवमिहापि प्रतिभान्तोऽर्था वाक्यार्थो न प्रतिभेति । शब्दस्य प्रत्यक्षवद् वर्तमानार्थनिष्ठत्वाभावाद् अनागताद्यर्थाभिधायिनोऽर्थासन्निधानेन प्रतिभापरत्वं यदुच्यते, तदप्ययुक्तम् । अनागतादिविषयत्वेऽपि तस्यार्थाविषयत्वं प्रसाधितमिति कृतं विस्तरेण । 10

वाक्यार्थः परमार्थ एव तदयं नो कल्पनानिर्मितः
तद्वानप्युदितः पदस्य विषयस्तेनार्थसंस्पर्शिता ।
अप्रामाण्यमतश्च ग्राह्यविषयाभावेन यद् वर्ण्यते
तच्छब्दस्य निरस्तमित्यकलुषं प्रामाण्यमस्य स्थितम् ।।

**इति न्यायमञ्जर्यां पञ्चममाह्निकम् ।।** 15

---

वाक्यादुपजायमाना प्रतिभैव वाक्यार्थ इति । **प्रतिभान्तोऽर्थाः** । प्रतिभया वाक्यार्थज्ञानेन विषयीकृताः । ननु वाक्यजन्ये ज्ञाने यद्यर्थाः प्रतिभान्तीत्यभ्युपगम्यते तदातीताद्यर्थप्रतिपादके वाक्येऽर्थानामसत्त्वात् कथं वाक्यार्थज्ञानजनकत्वमित्याशङ्क्याह **शब्दस्य प्रत्यक्षवदिति** ।

भट्टश्रीशङ्करात्मजश्रीचक्रधरकृते 20
न्यायमञ्जरीग्रन्थिभङ्गे पञ्चममाह्निकम् ।।

# षष्ठमाह्निकम्

**पदस्वरूपनिरूपणार्थं प्रश्नः**

ननु नाद्यापि शब्दस्य निरणायि प्रमाणता ।
बीजं पदार्थवाक्यार्थबुद्धेर्न हि निरूपितम् ॥

उच्यते । किमत्र निरूपणीयम् ? यदनन्तरं यद् भवति तत् तस्य निमित्तम् । पदवाक्यश्रवणे च सति पदार्थवाक्यार्थसम्प्रत्ययो भवति इति ते एव तत्र निमित्तम् । 5

किं पुनरिदं पदं नाम किञ्च वाक्यमिति । उक्तमत्र वर्णसमूहः पदम्, पदसमूहो वाक्यमिति ।

**स्फोटवादविचारः**

नन्वेतदेव न क्षमन्ते । न हि वर्णानां समूहः कश्चिदस्ति वास्तवस्तेन 10 कुतस्तत्समूहः पदं भविष्यति । तदभावाच्च नतरां पदसमूहो वाक्यमवकल्पते । न च वर्णानां व्यस्तसमस्तविकल्पोपहतत्वेन वाचकत्वमुपपद्यते, तस्मादन्य एव स्फोटात्मा शब्दोऽर्थप्रतिपादक इति प्रतिजानते ।

नन्वेवमस्तु स्फोटोऽन्य एवार्थप्रतिपादको भवतु, का क्षतिर्नैयायिकानाम् ? कथं न क्षतिः ? आप्तप्रणीतत्वेन हि शब्दस्य प्रामाण्यं तैरुक्तम् । स्फोटस्य च 15 नित्यत्वेन आप्तप्रणोतत्वम्, अतश्च यस्यानित्यत्वं वर्णात्मनः शब्दस्य साधितम्,

---

**बीजं पदार्थवाक्यार्थबुद्धेः** पदवाक्ये ।

**व्यस्तसमस्तविकल्पोपहतत्वेनेति** । व्यस्तानां प्रत्येकवाचकत्व इतरवर्णोच्चारण-वैफल्यप्रसङ्गः । सामस्त्यन्तु नास्ति क्रमोपलभ्यमानानामिति वक्ष्यति । **स्फोटात्मा** अभिव्यञ्जकैर्नादैः स्फुटीक्रियते व्यक्तिं नीयत इति स्फोट इति नाम्ना व्यपदेश्यः । 20

**स्फोटस्य च नित्यत्वेनेति** । स ह्यक्रमो निरवयवश्च नित्य एव कल्पयितुं शक्यते; अर्थप्रतीत्या हि स कल्प्यते न चानित्यादर्थप्रतीतिरुपपद्यते सङ्केतकालावगतस्येदानीन्तनस्य चान्यत्वात्; स च स्थित एव केवलमभिव्यज्यते ध्वनिभिरिति ।

नासावर्थप्रतीतिहेतुरतो न प्रमाणम् । यश्चार्थप्रतीतिहेतुः स्फोटात्मा शब्दस्तस्य नानित्यत्वं न चाप्तप्रणीतत्वमित्यस्थाने नैयायिकाः क्लिष्टा भवेयुः । तस्मादनित्यानां वर्णानामेव वाचकत्वं प्रतिष्ठापनीयम्, पराकरणीयश्च स्फोट इति ।

5 तदुच्यते । गकारादिवर्णावगमे सत्यर्थप्रतीतेर्भावात् तदभावे चाभावात् तेषामेवार्थप्रत्यायनसामर्थ्यम् । त एव च श्रवणकरणकावगमगोचरतया शब्दव्यपदेशभाज इति न प्रतीत्यनुपारूढः स्फोटो नाम शब्दः कश्चित् प्रत्यक्षानुमानातीतः परिकल्पनीयः ।

**वर्णानां नार्थप्रत्यायकत्वम्**

10 आह, कथमेवं भविष्यति ? दूरापेता इमे मनोरथाः । कुतो वर्णानामर्थप्रत्यायकत्वम् ? ते हि वर्णा गकारादयोऽर्थं प्रतिपादयन्तः समस्ताः प्रतिपादयेयुः व्यस्ता वा । न तावद् व्यस्ताः, एकैकवर्णाकर्णने सत्यप्यर्थप्रतीतेरनुत्पादात् । सामस्त्यं वर्णानां नास्त्येव । तद्धि सत्तामात्रेण वा स्यात् प्रतीयमानत्वेन वा । नैयायिकपक्षे तावत् सत्तया यौगपद्यमविद्यमानम्, आशुविनाशिनः शब्दस्य 15 दर्शितत्वात् ।

अथापि मीमांसकमतेन नित्यः शब्द इष्यते, तत्रापि सत्तया यौगपद्यस्य सकलवर्णसाधारणत्वात् केन वर्णसमुदायेन कोऽर्थः प्रत्याय्येतेति नावधार्यते ।

अथोच्यते, न चक्षुरादीनामिव वर्णानां कारकत्वम्, येनागृहीतानामेव सतां यौगपद्यमात्रमर्थप्रत्ययनाङ्गं स्यात्; ज्ञापकत्वात् तेषां गृहीतानां सतां 20 धूमादिवत् प्रत्यायकत्वमिति प्रतीतावेव सामस्त्यमुपयुज्यत इति ।

एतदप्यघटमानम् । प्रतीतिसामस्त्यं हि किमेकवक्तृप्रयुक्तानां वर्णानामुत नानापुरुषभाषितानाम् । तत्रानेकपुरुषभाषितानां कोलाहलस्वभावत्वेन स्वरूपभेद एव दुरवगम इति कस्य सामस्त्यमसामस्त्यं वा चिन्त्येत । सत्यपि

---

**न चक्षुरादीनामिव कारकत्वमिति ।** चक्षुरादीनि ह्यगृहीतसङ्गतीनि यतः प्रमां 25 जनयन्ति अतस्तान्यर्थस्य न ज्ञापकानीत्युच्यन्ते ज्ञापकधर्मविरहात्, अपि तु अर्थप्रतीतेर्जनकानीति ।

वा तथाविधे सामस्त्ये नास्त्येवार्थप्रतीतिः । एकवक्तृप्रयुक्तानान्तु प्रयत्नस्थान-करणक्रमापरित्यागादवश्यम्भावी क्रमः, क्रमे च सत्येकैकवर्णकरणिकार्थप्रतीतिः प्राप्नोति, न चासौ दृश्यत इति व्यस्तसमस्तविकल्पानुपपत्तेर्न वर्णा वाचकाः । वर्णविषया अपि बुद्धयस्तथैव विकल्पनीयाः । ता अपि न युगपत् सम्भवन्ति, क्रमे च सत्येकैकवर्णबुद्धेरर्थसम्प्रत्ययः प्रसज्यत इति । 5

यदप्युच्यते, पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यवर्णः प्रत्यायक इति, तदप्ययुक्तम् । संस्कारो हि नाम यदनुभवजनितस्तद्विषयमेव स्मरणमुपजनयति, न पुनरर्थान्तरविषयं ज्ञानमिति । स्मृतिद्वारेण तर्ह्यर्थप्रत्यायकोऽसौ भविष्यतीति चेत्, एतदपि नास्ति, ज्ञानयौगपद्यप्रसङ्गात्, अन्त्यवर्णज्ञानानन्तरं हि पूर्ववर्णस्मरणमिव समयस्मरणमपि तदैवापतति, ततश्च ज्ञानयौगपद्यम् । 10 न च क्रमोत्पादे किञ्चित् कारणमुत्पश्यामः । अथापि तेन क्रमेण भवेतां तथापि तदानीमन्त्यवर्णज्ञानमुपरतमिति कस्य साहायकं पूर्ववर्णस्मृतिर्विद-धातीति । एतच्चानेकपूर्ववर्णविषयामेकां स्मृतिमभ्युपगम्योक्तम् । न पुनरेका सर्ववर्णगोचरा स्मृतिः । कुतः—

भिन्नोपलम्भसम्भूतवासनाभेदनिर्मिताः । 15
भवेयुः स्मृतयो भिन्ना न त्वेकानेकगोचरा ॥

अथ वदेत् सङ्कलनाज्ञानमेकं सदसद्वर्णगोचरं भविष्यति तदुपारूढाश्च वर्णा अर्थं प्रत्याययिष्यन्तीति, तदपि दुराशामात्रम्, तथाविधज्ञानोत्पत्तौ कारणाभावात् । न चेन्द्रियमतीतवर्णग्रहणसमर्थम्, न संस्कारो वर्तमानग्राही भवति, न च युगपदिन्द्रियं संस्कारश्चेमां बुद्धिं जनयतः, संस्कारस्य सहचर- 20 दर्शनाद्याहितप्रबोधस्य सतः स्मरणमात्रजन्मनि निर्ज्ञातसामर्थ्यस्येन्द्रियेण व्यापाराभावात् । तस्मान्न वर्णा वाचकाः ।

---

**क्रमेण ते स्मरणे** इति । एकस्य स्मरणस्योत्पादकाले ज्ञानस्य ज्ञानान्तर-विरोधित्वादन्त्यवर्णज्ञानस्य विनश्यत्ता द्वितीयस्मरणोत्पादकाले तस्य विनाश इति ।

**सङ्कलनाज्ञानमिति** । क्रमगृहीतानामेकस्मिन्ननन्तरकालभाविज्ञाने सङ्कलितानां 25 समुच्चितानां प्रतिभासनं सङ्कलनाज्ञानं शतादिसमुच्चयज्ञानवत् ।

अतश्च एवं यदि ते वाचका भवेयुर्विपरीतक्रमप्रयुक्ता अप्यर्थं गमयेयुः। क्रमश्चेदपेक्ष्यते स व्यतिरिक्ताव्यतिरिक्ततया चिन्तनीयः। अव्यतिरेके त एव ते वर्णा इति कथं न बोधकाः? व्यतिरेके तु किमप्यभ्यधिकं वाचकमभ्युपगतं भवतीति मत्पक्षमाजिगमिषति भवान्।

5 ननु व्युत्पत्तिवशेन शब्दोऽर्थप्रत्यायकतामुपयाति, व्युत्पत्तौ च यावन्तो यत्क्रमका वर्णा यमर्थमभिवदन्तो दृष्टास्ते तावन्तस्तत्क्रमकास्तमर्थमभिवदिष्यन्तीति किं विकल्पमालया? तदुक्तम्,

> यावन्तो यादृशा ये च यदर्थप्रतिपादने।
> वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥ इति।

10 तदुच्यते। व्युत्पत्तिरेवेयं विचारणीया वर्त्तते। परावगतिपूर्विका हि शब्दात् स्वयमवगतिः, परावगतौ च के, कियन्तः, कथं, कमर्थं प्रतिपादयन्तोऽनेन दृष्टा येभ्यस्तथैव तमर्थं प्रतीयादिति दुरधिगमा हि वर्णवर्तनी।

> यावन्तो यादृशा ये चेत्येवं तावत् प्रभाषसे।
> कियन्तः कीदृशाः के चेत्येवं यावन्न पृच्छ्यसे॥

15 **वर्णाभिव्यक्तस्फोटानुमानप्रणाली**

तस्मात् सर्वप्रकारमवाचका वर्णाः, अस्ति चेयं शब्दादुच्चारितात् तदर्थावगतिर्न चेयमकरणिकैव भवितुमर्हति, तदस्याः करणं स्फोट इति। कार्यानुमानमिदमस्तु, परिशेषानुमानं वा, अर्थापत्तिर्वा, सर्वथा अर्थप्रतीतिलक्षणकार्यवशात् कल्प्यमानम्, तत्करणं स्फोट इत्युच्यते। स च निरवयवो नित्य

---

20 **किमप्यभ्यधिकमिति।** वर्णस्वरूपातिरिक्तश्चेदपेक्ष्यते स एव तर्हि स्फोटः, सर्वथा स्वरूपमात्रस्यावाचकत्वमायातमिति मत्पक्षाभ्युपगमः।

**कार्यानुमानमिदमस्त्विति।** अर्थप्रतिपत्तिलक्षणात् तावत् कार्यमात्रात् तत्कारणमात्रावगमः; तत्र कारणमात्रस्य निर्विशेषस्य गोत्वस्येव शाबलेयादिविशेषशून्यस्यासम्भवात्, वर्णानाञ्च पूर्वनीत्या कारणत्वप्रतिषेधादन्यत्र चाप्रसङ्गात् स्फोटस्यैव-
25 कारणत्वकल्पनेति कारणमात्रावगतौ कार्यानुमानम्। कारणविशेषावगमे तु **परिशेषानुमानमिति। अर्थापत्तिर्वेति** एवंरूपञ्च। परिशेषानुमानं कार्यानुमानसहितमर्थापत्ति-

एको निष्क्रमक इति न वर्णपक्षक्षपणदक्षदूषणपात्रतां प्रतिपद्यते । अतश्च स्फोटोऽर्थप्रतिपादकस्तत्र शब्दादिति प्रातिपदिकार्थोऽप्युपपन्नः ।

अथ वर्णाः 'शब्द'शब्देनोच्यन्ते, ते चार्थप्रतिपादकाः, तथापि शब्दादित्येकत्वं विभक्त्यर्थो न सङ्गच्छते, शब्देभ्यः प्रतिपद्यामह इति व्यवहारः स्यात् । स्फोटात्मनि तु शब्देऽर्थप्रतिपादक इष्यमाणे शब्दादिति प्रातिपदिकार्थो विभक्त्यर्थश्च द्वयमप्युपपन्नम् । 5

ननु न स्फोटः 'शब्द'शब्देनोच्यते; किन्तु वर्णा एव । श्रोत्रग्रहणे ह्यर्थे 'शब्द'शब्दः प्रसिद्धः, ते च श्रोत्रग्रहणा इति । नैतदेवम् । शब्दत्वस्यापि श्रोत्रग्रहणात्मनो निर्झरझाङ्कारवप्रभृतीनाञ्च सत्यपि श्रोत्रग्रहणत्वे शब्दकार्यनिर्वर्त्तकत्वानुपपत्तेः । तस्माद् यतोऽर्थप्रतिपत्तिः, स शब्दः । अर्थप्रतिपत्तिश्च स्फोटादेव न वर्णेभ्य इति स्फोट एव शब्दः । 10

नन्वेवं सति धूमादीनामप्यर्थप्रतीतिहेतुत्वाच्छब्दत्वं प्राप्नोति ? मैवं वादीः, अथ गौरित्यत्र श्रोत्रजप्रतिभासे बहवोऽर्थाः प्रतिभासन्ते, तत्र कस्तेषां शब्द इत्युपक्रम्य यतोऽर्थप्रतिपत्तिः स शब्द इत्युपसंहृते कुतो धूमादीनां शब्दत्वशङ्कावकाशः ? 15

ननु चेयमर्थप्रतीतिर्वर्णेषु भवत्सु भवन्ती तेष्वभवत्सु चाभवन्ती तानुत्सृज्य कथं स्फोटकार्यतामुपयायात् ? उच्यते । अनन्यथासिद्धं तद्भाव-

---

तयाऽन्यैरभिहितं तन्नाम्नो वा अस्याभिधाने न काचित् क्षतिरिति । **वर्णपक्षक्षपणक्षमेति** । किमेकैकः प्रत्यायकोऽथ संहता इत्यादि यद्दूषणम् । **प्रातिपदिकार्थोऽप्युपपन्नः**, संस्कारस्य शब्दशब्दवाच्यत्वाभावात् ; विभक्त्यर्थस्त्वेकत्वमेकत्वादुपपद्यते संस्कारस्येति । 20

**शब्दकार्यनिर्वर्तनानुपपत्तेः**, । शब्द्यते कथ्यतेऽनेनार्थ इति शब्दशब्दनिर्वचनसामर्थ्यादर्थप्रतीतिजनक एव शब्दः ।

**अथ गौरित्यत्र श्रौत्रे प्रतिभास इति** । भाष्यकृता हि 'अथ गौरित्यत्र कः शब्दः' इत्युक्तम् । अस्य चार्थः, गौरित्यत्र ज्ञाने ये प्रतिभासन्ते जातिगुणक्रियावर्णस्फोटादयोऽर्थास्तेषु मध्ये कः शब्द इति । गौरिति ज्ञाने वर्णाः, वर्णाभिव्यङ्ग्यस्फोटः, तद्वाच्यश्चार्थो जात्यादिः, तदेकार्थसमवेताश्च गुणक्रियादयः, प्रतिभासन्त एवेति । 25

भावित्वं तत्कार्यतामवगमयति नान्यथासिद्धम्। इदन्त्वन्यथासिद्धम्। का पुनरन्यथासिद्धिः ? स्फोटव्यञ्जकत्वाद् वर्णानां तदानन्तर्यमर्थप्रतीतेरुपप्लवते, वर्णाभिव्यक्तः स्फोटोऽर्थप्रतिपत्तिमादधाति, भ्राम्यति जनो वर्णैरियमर्थ-प्रतीतिरुत्पादितेति।

5 **वर्णाः खलु स्फोटव्यञ्जका इति मतप्रदर्शनम्**

ननु स्फोटव्यक्तावपीदानीं वर्णानां क्व गतास्ते व्यस्तसमस्तविकल्पाः ? आह च भट्टः,

यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः।
सोऽपि पर्यनुयोगेन नैवानेन विमुच्यते ॥ इति।

भाष्यकृताऽपि "ननु संस्कारकल्पनायामदृष्टकल्पना" इत्याशङ्क्य प्रति-
10 विहितं "शब्दकल्पनायां सा च शब्दकल्पना च" इति।

नैष दोषः। न स्फोटव्यक्तौ विकल्पाः प्रभवन्ति। कुतः ? एके तावदा-चक्षते प्रथमवर्णश्रवणवेलायां स्फोटोऽभिव्यक्तो भवति, न च द्वितीयादिवर्ण-वैफल्यम्, तदवगतेरेवातिशयकरणाद्, यथा रत्नपरीक्षकाणां प्रथमदर्शने रत्न-रूपममलमप्रकाशमानमपि पुनः पुनः परीक्षमाणानां चरमे चेतसि चकास्ति
15 निरवद्यं रत्नतत्त्वम्। एवमिहापि प्रथमवर्णश्रुत्या व्यक्तेऽपि स्फोटे स्फुटतर-प्रतीत्यै वर्णान्तराणि प्रयोक्ष्यन्त इति।

**ध्वनयः स्फोटव्यञ्जका इति मतप्रदर्शनम्**

अपरे तु वदन्ति ध्वनय एव स्फोटस्य च व्यञ्जकाः। तैश्च मरुद्भिरनवयव

---

20 **संस्कारकल्पनायामदृष्टकल्पनेति।** बहुभिर्ज्ञानैरेकस्य प्रसिद्धस्मरणरूपकार्यपरिहा-रेणार्थप्रतिपत्तिजनकस्य जननं संस्कारस्येति कल्पना।

**सा च शब्दकल्पना चेति।** सा च संस्कारकल्पना च, तथाविधसंस्कारकल्पनां विना क्रमभाविभिर्वर्णैः स्फोटस्याभिव्यङ्क्तुमशक्यत्वात्। शब्दस्य च निरवयवस्यैक-स्याक्रमस्यानुपलभ्यमानस्य कल्पना।

**अपरे तु वदन्तीत्यादिना** वर्णा एव पारमार्थिका न सन्ति, कुतस्तेषां क्रमेण
25 सामस्त्येन वा स्फोटाभिव्यक्तौ व्यापारः। ननु ध्वनयोऽपि स्फोटस्य ध्वननात् प्रकाशनाद वर्णा एव नेत्याह **तैश्च मरुद्भिरिति।**

एव एष स्फोटोऽभिव्यज्यमानस्ताल्वादिस्थानकरणसंयोगोपाधिवशोपप्लव-माननानाकारगकारादिभागयोगीव प्रतिभासते। मरुतां चञ्चलत्वादुच्चारित-प्रध्वंसिनस्ते तं काल्पनिकाकारमवभासयन्ते। दृष्टञ्चोपाधिवशादसत्यमपि रूपमवभासमानं यथा कृपाणमणिदर्पणादिव्यञ्जकभेदेन श्यामदीर्घादिरूपं वदनस्य। नादात्मको हि शब्दो वीणावेणुमृदङ्गपटहादिव्यञ्जकभेदेन नानात्व-मुपगच्छन् दृश्यते। तस्मान्न पारमार्थिका एव ते वर्णाः, न च स्फोटस्य व्यञ्जका इति क्व समस्तव्यस्तविकल्पाः प्रभवेयुः ?

उपाधिभेदेन प्रतिभासमाना असत्याकाराश्च तेऽर्थप्रत्ययान्वयव्यतिरेका-नुविधायिनो दृश्यन्ते। तेन यदुच्यते शब्दकल्पनायां कल्पनाद्वैगुण्यमिति तत्रैक-गुणापि कल्पना नास्ति का कथा द्वैगुण्यस्येति ?

तस्मात् स्फोटात्मकादेव शब्दादर्थप्रत्ययो वर्णानुविधायित्वन्तु तस्या-न्यथासिद्धमिति सिद्धम्।

**स्फोटस्य प्रत्यक्षत्वम्**

अपि च तार्किकाणामनुमानप्रियत्वात् तत्परितोषायेदमनुमानमभ्यधायि न परमार्थतः। परमार्थतस्तु श्रौत्रे प्रत्यये प्रतिभासमानः प्रत्यक्ष एव स्फोटः।

आह, किमिदमपूर्वं तस्कराचरितं वर्तते। वर्णाः प्रत्यक्षमुपलभ्यमाना अपि दुर्भगा न प्रत्यक्षाः, स्फोटः पुनरनवभासमानोऽपि सुभगः प्रत्यक्ष इति।

उच्यते। न ब्रूमो वर्णा न प्रत्यक्षा इति। ते पुनरसन्तोऽपि उपाधि-वशाद् वदनदैर्घ्यादिवदवभासन्ते। शब्दस्त्वेको निरवयवः प्रतीयते। तथा च पदमिति वाक्यमित्येकाकारप्रतीतिरस्ति। न च भिन्ना वर्णास्तस्यामालम्बनी-भवन्ति। न हि सामान्यप्रत्ययो व्यक्त्यालम्बनः, अवयविप्रत्ययो वा अवयवा-लम्बनः। न च सेनावनादिबुद्धिवदयथार्था पदवाक्यबुद्धिः, बाधकाभावात्।

---

**नानाकारगकारादिभागयोगीवेति।** कथमिति चेत्, तदाह **ताल्वादिस्थानकरणेति।** वायूनां यो विशिष्टैः स्थानकरणैः संयोगः, स एवोपाधिस्तथाविधोपप्लुतरूपप्रदर्शकः। **नादात्मकोऽपीति।** नादात्मकोऽवाचकः।

एकार्थप्रत्यायकत्वोपाधिकृतेयमेकाकारा बुद्धिरिति चेत्, एकार्थप्रतीतिरिदानीं कुतस्त्या ? पदवाक्यप्रतीतिपूर्विका हि पदार्थवाक्यार्थप्रतीतिः। पदार्थवाक्यार्थ-प्रतीत्याख्यकार्यैक्याच्च पदवाक्यबुद्धिरेकाकारेति दुरुत्तरमितरेतराश्रयत्वम्। औपाधिकत्वञ्च सामान्यावयविबुद्धेरपि सुवचम्। बाधसन्देहरहितप्रतीति-
5 दार्ढ्यात् तत्र परिहार इति चेत्, तदितरत्रापि समानम्। तस्मात् पदबुद्धेः पदस्फोटो वाक्यबुद्धेश्च वाक्यस्फोटो विषय इति प्रत्यक्ष एव स्फोटः। तत्र पदस्फोटात् पदार्थप्रतिपत्तिः, वाक्यस्फोटाच्च वाक्यार्थप्रतिपत्तिः।

**वाक्यस्फोटनिरूपणम्**

आह, यदि निरवयवः स्फोटात्मा शब्दो भवति, वाक्यमपि शब्द एव,
10 तस्य पदात्मकास्त्ववयवा मा भूवन्। तस्य चेत् पदात्मानोऽवयवा भवन्ति पदस्यापि तर्हि वर्णात्मानोऽवयवा भवन्तु।

उच्यते। किञ्चिदुच्छ्वसितमेव मे हृदयम्। मन्ये, भविष्यति आयुष्मतो विवेकालोकः, बोध्यमानो भोत्स्यसे किञ्चित्। ध्वन्युपाधिभेदप्रवृत्तवर्णभेदा-वभासविप्रलब्धबुद्धिं भवद्विधं बोधयितुं पदस्फोट एष निरवयवोऽस्माभि-
15 र्दर्शितः। परमार्थतस्तु पदस्फोटो वाक्यावयवभूतो नास्त्येव। निरवयवमेव वाक्यं निरवयवस्यैव वाक्यार्थस्य बोधकम्। यथा पदस्यावयवा न सन्ति तथा वाक्यस्यावयवाः पदानीति। तथा चाहुः "वाक्ये पदानामसत्त्वादसत्त्वं तदर्थे पदार्थानां निरवयवौ वाक्यवाक्यार्थौ" इति। अवयवकल्पनायां हि यथा वाक्यस्यावयवाः पदानि पदानामवयवा वर्णा एवं वर्णानामप्यवयवै-
20 र्भवितव्यम्, तदवयवानामप्यवयवान्तरैरित्यानन्त्यात् का व्यवस्था स्यात्? वर्णान् प्राप्य तु यद्यवयवकल्पनातो विरन्तव्यं तद् वाक्य एव विरम्यताम्। एकघटनाकारा हि वाक्यार्थबुद्धिस्तथाविधादेव वाक्यादुत्पत्तुमर्हति। वृद्धव्यवहाराद्धि शब्दार्थे व्युत्पद्यन्ते व्यवहर्त्तारः। तत्रास्य पदस्य प्रयोग एव न

---

**औपाधिकत्वञ्च सामान्यावयविबुद्धेरपीति।** अत्र यद्येकार्थप्रतीतिजनक-
25 त्वादेकत्वमुच्यते, तदा दाहदोहाद्येकार्थकारितोपाधिनिबन्धनः सामान्यप्रत्ययोऽपीत्य-तिप्रसङ्गः।

केवलस्य दृश्यते, व्यवहारानङ्गत्वाद् । वाक्यन्तु प्रयोगार्हमिति तत्रैव व्युत्पत्तिः, तत एवार्थसम्प्रत्ययः, अवयवप्रतिभासस्तु भ्रममात्रम्, अर्थोऽपि वाक्यस्यैक एव नरसिंहाकारः । जात्यन्तरं हि नरसिंहो नाम, तत्र न नरार्थो नापि सिंहार्थः ।

एवं पदार्थेभ्योऽन्य एव वाक्यार्थः पानकादिवत् । यथा पानकं शर्करा-नागकेसरमरिचादिभ्योऽर्थान्तरमेव, यथा च सिन्दूरहरिताललाक्षादिभ्योऽ-र्थान्तरमेव चित्रम्, यथा वा षड्जर्षभगान्धारधैवतादिभ्योऽर्थान्तरमेव ग्रामरागस्तथा पदेभ्यो वाक्यं पदार्थेभ्यो वाक्यार्थः ।　5

**वाक्यांशानां काल्पनिकत्वम्**

कथं तर्हि तदंशावगम इति चेत् ? कल्पनामात्रं तत्, नासौ परमार्थः । तच्छब्दानुगमे तदर्थानुगमदर्शनात् पारमार्थिकत्वं भागानामिति चेत्, न, कूपसूपयूपानामेकाक्षराननुगमेऽप्यर्थानुगमाभावात् । न च केवलानुगममात्रेण तत्कारणभावो वक्तुं शक्यः, रेणुपटलानुगामितया करितुरगादिवत् पिपीलिका-पङ्क्तेरपि दृश्यमानायास्तत्कारणत्वप्रसङ्गात् । तस्मात् प्रकृतिप्रत्ययांशवद-सत्पदार्थपरिकल्पनं वाक्यार्थावगमोपायतयाश्रीयते, न त्वर्थस्तदीयस्तत्राश्व-कर्णादिवदुपलभ्यते । असत्यमपि सत्योपायतां प्रतिपद्यमानं दृश्यते । अलीका हि दंशादयः सत्यमरणकारणं भवन्ति, लिप्यक्षराणि चासत्यान्येव सत्यार्थ-प्रतिपत्तिमादधति । स्वरूपसत्यानि तानीति चेत्, न, रेखारूपतया तेषामर्था-प्रतिपादकत्वात् । गकारोऽयमित्येवं गृह्यमाणा रेखा अर्थप्रत्ययहेतवः । ता येन रूपेण सत्यास्तेन नार्थप्रतिपादिकाः, येन चार्थप्रतिपादिकास्तेन न सत्या इति ।　10 15 20

---

**अर्थान्तरमेव ग्रामराग इति ।** ग्रामरागो यत्रांशतया षड्जादयः स्वराः स्थिताः ।

**करितुरगादिवदिति ।** यथा सत्सु करितुरगादिषु गच्छत्सु रेणुपटलस्योद्गम-दर्शनात् तत्कारणता कल्प्यते, एवं पिपीलिकापङ्क्तिरपि कदाचिद् रेणुपटलोद्गम-पूर्वभाविनी दृश्यत इति तस्या अपि तत्कारणत्वप्रसङ्गः । **अश्वकर्णादिवदिति ।** अश्वकर्णाख्या ओषधिर्न तत्राश्वार्थः कश्चिन्नापि कर्णार्थं इति ।　25

ननु प्रकृतिप्रत्ययाद्यंशा अपि परमार्थसन्त एव, तथा प्रतिभासात्, तदर्थ-
प्रत्ययहेतुत्वाच्च । नैतदेवम् । अन्वाख्यानभेदेन तेषां स्वरूपेणेयत्तानिश्चया-
नुपपत्तेः । भवतीत्यत्र भूशब्दः प्रकृतिः क्वचिदन्वाख्यायते क्वचिद् भवशब्दः ।
प्रत्ययादेशागमगुणवृद्धिवर्णलोपाद्यन्वाख्यानविसंवादात् कः पारमार्थिकः प्रकृति-
5 प्रत्ययविभागः ? कल्पनामात्रन्त्वेतत् 'इयं प्रकृतिरेष प्रत्ययः' इति ।

एवं पदार्थानामपि वाक्यार्थपरिकल्पनयैवापोद्धारः । तदुक्तम्,

अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत् ॥(वा०प० ३।१।१)इति ।

अपि च पारमार्थिकत्वे पदानां नियतमविसंवादि रूपं प्रतीयेत,
विसंवादि तु तत् । नामाख्यातसाधारणवर्णसन्निवेशदर्शनान्न नियतं तेषां रूपम्,
10 अतः काल्पनिकमेव तन्न वास्तवम् । न च निश्चेतुमपि तत् पार्यते । "काले
नदन्ति नागाः" इत्यत्र हि कीदृशः पदविभागः ? अर्थद्वयोपपत्तेः, उभयत्र च
वर्णतुल्यत्वात् । किं 'कालेन कृष्णेन दन्तिना हस्तिना अगास्त्वम्' इत्येवमेतानि
पदानि व्यवस्थाप्यन्ताम्, अथ 'काले समये नदन्ति शब्दायन्ते नागाः करिणः
फणिनो वा'इति । तस्मादनियमान्न पदतदर्थविभागः पारमार्थिकः ।

15 अथ प्रथमप्रतिपन्नवाक्यार्थानुसारेण पदतदर्थविभागो व्यवस्थाप्यते ? तर्हि
किं तेन तदानीं व्यवस्थापितेन, वाक्यार्थस्य प्रथममेव प्रतिपन्नत्वात् ।

किञ्च दध्यत्र मध्वत्रेति दधिमधुपदयोरिकारोकारयोरदर्शनेऽपि तदर्थ-

---

**प्रत्ययादेशेति** । प्रत्ययविसंवादः क्वचिल्लकारः प्रत्ययः, अन्यत्र त्यादय इत्येव-
मन्यत्रापि ।

20 **वाक्यार्थकल्पनयैवेति** । कल्पनया असतामप्यनपोद्धारे वाक्यार्थस्य प्रति-
पादयितुमशक्यत्वादसतामपि तेषां कल्पनयोद्धृतानां रेखागवयादीनामिव सत्यार्थप्रति-
पादकत्वम् । अपोद्धृत्यैव वाक्येभ्य इत्यस्य पूर्वमर्धम्—"पदं कैश्चिद् द्विधा भिन्नं चतुर्धा
पञ्चधापि वा ।"

**अथ प्रथमप्रतिपन्नेति** । प्रकरणादिवशेन 'काले नदन्ति नागाः' इत्यस्मादुच्चारि-
25 ताद् विशिष्टार्थप्रतिपत्तिर्भवत्येव, भोजनादिप्रस्तावे सैन्धवमानयेति प्रतिपत्तिवत् ।

सम्प्रत्ययो दृश्यते । तस्मादपि न पारमार्थिकः पदवर्णविभागः । निरस्तावयवं वाक्यं तथाविधस्यैव वाक्यार्थस्य वाचकमिति सिद्धम् ।

**स्फोटात्मकत्वं शब्दब्रह्मणः**

ननु यथा पदेषु वर्णा न सन्ति, वाक्येषु पदानि न सन्ति, तथा महा-वाक्येष्ववान्तरवाक्यान्यपि न स्युः, ततः किं महावाक्यान्यपि प्रकरणापेक्षया　5 न तात्त्विकानि स्युः, ततः किं प्रकरणान्यपि शास्त्रापेक्षया न स्युः, ततोऽपि किमेकमेवेदं शास्त्रतत्त्वमविभागमद्वयमापतति ?

उच्यते । यदि तत्त्वं पृच्छसि, बुद्ध्यसे वा, साधो ! शब्दब्रह्मैवेदमद्वय-मनाद्यविद्यावासनोपप्लवमानभेदमर्थभावेन विवर्त्तते, न तु वाचकाद् विभक्तं वाच्यमपि नाम किञ्चिदस्ति । तस्मात् काल्पनिक एव वाच्यवाचकविभागोऽ-　10 यम्, अविद्यैव विद्योपाय इत्याश्रीयते । वाग्रूपता तत्त्वम्, सर्वत्र प्रत्यये

---

**अनाद्यविद्यावासनेति ।** अविद्यावशाद्धि वर्णपदावान्तरवाक्यमहावाक्यप्रविभाग इत्यनेन चैतदुक्तं भवति एकमेवेदं त्रयीरूपं शब्दब्रह्म परब्रह्मप्राप्त्युपायः, तस्य यदिदं विभागेन चातुराश्रम्यप्रतिपादनं तदसत्यम्,मातृमोदकन्यायेन हि तत्तद्वस्तूद्देशेन समीहावतां प्राणिनां बाह्योपायनिषेधेन पथ्यर्थिनामिव चित्रादि दर्शयद् बाह्यक्षोभनिवर्तनेन शनैः　15 शनैः शान्ततां दर्शयत् परं क्षेमं दर्शयतीति । तदुक्तम्,

त्रयोरूपेण तज्ज्योतिः प्रथमं परिवर्तते ।
पृथक् तीर्थप्रवादेषु दृष्टिभेदनिबन्धनम् ॥
शान्तं विद्यात्मकं ब्रह्म तदु हैतदविद्यया ।
तया ग्रस्तमिवाजस्रं या निर्वक्तुं न शक्यते ॥ इत्यादि ।　20

**अर्थभावेन विवर्तत** इति । तथा च आह,

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत ॥
तस्मादाकृतिगोत्रस्थाद् व्यक्तिग्रामा विकारिणः ।
मारुतादिव जायन्ते वृष्टिमन्तो बलाहकाः ॥ इत्यादि ।　25

**अविद्यैव विद्योपाय** इति । अनेन द्वारेण प्राङ्नीत्या विद्याधिगमस्य सम्भवात् । तदुक्तम् "अतत्त्वे वर्त्मनि स्थित्वा ततस्तत्त्वं प्रकाशते" इति ? **सर्वत्र प्रत्यये तदनपाया-**

तदनपायात् । यथोक्तम्,

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ।। (वा०प० १-१२४) इति।

सा चेयं वाक् त्रैविध्येन व्यवस्थितैवावभासते, वैखरी मध्यमा पश्यन्तीति । तत्रेयं स्थानकरणप्रयत्नक्रमव्यज्यमानगकारादिवर्णसमुदायात्मिका या वाक्, सा वैखरीत्युच्यते । विखर इति देहेन्द्रियसङ्घात उच्यते । तत्र भवा वैखरी । तदुक्तम्,

स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ।। इति ।

या पुनरन्तःसङ्कल्प्यमानक्रमवती श्रोत्रग्राह्यवर्णरूपाभिव्यक्तिरहिता वाक्, सा मध्यमोच्यते । तदुक्तम्,

---

**दिति** । यथा रुचककुण्डलादीनामपायोपजनेऽपि सुवर्णरूपताया अनपायात् तस्या एव तात्त्विकत्वमेवं यत् प्रतीयते तत् सर्वं वागूरूपतानतिक्रमेणेति ।

**वागूरूपता चेदिति** । यावत् पदार्थः 'घटोऽयम्' इति न प्रत्यवमृष्टस्तावद् प्रकाशितो न भवति, वागूरूपताव्यतिरेकेण चान्यस्य प्रत्यवमर्शकत्वं नास्ति; अत उक्तम्, **सा हि प्रत्यवमर्शिनीति** । न प्रकाशः प्रकाशेत प्रकाशोऽप्यप्रकाशः स्यात्, व्यापारस्य प्रत्यवमर्शस्याकरणात् । प्रकाशरूपतामेवासौ न लभेतेत्यर्थः ।

**सा चेयं वाक् त्रैविध्येन व्यवस्थितेति** । तत् त्रैविध्यप्रतिपादनं सर्वावस्थस्य शब्दस्यार्थाविनिर्भागज्ञापनाय । **पूर्विखर इति** । पूःशब्देन विखरशब्देन च देहेन्द्रियसङ्घात उच्यत इति ।

प्रसिद्धेन पूःशब्देन साम्यं दर्शयति, **स्थानेषु विधृत इति** । स्थानेषु ताल्वादिषु विधृते प्रतिहते वायौ सति तस्मान्निमित्तात् कृत आत्मलाभाय वर्णानामक्षराणां परिग्रह उपादानं यया । यतः प्राणाख्यस्य वायोर्वृत्तिर्व्यापारो निबन्धनं कारणमस्याः । **प्रयोक्तॄणा-** मुच्चारयितॄणां सम्बन्धिनी ।

**या पुनरिति** । या पुनः बुद्ध्युपादाना बुद्धावेव प्रतिभासते, न वैखरीवद्

केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी ।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ।। इति ।

या तु ग्राह्यभेदक्रमादिरहिता स्वप्रकाशसंविद्रूपा वाक्, सा पश्यन्तीत्युच्यते । तदुक्तम्,

अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा । 5
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ।। इति ।

तदलमतिप्रसक्तानुप्रसक्त्या, द्राघीयसी चर्चेयं प्रकृतान्तरायकारिणीति न प्रतन्यते । इह त्वेतावतैव पुनः प्रयोजनम्, वर्णपदपूर्वको व्यवहारो न भवतीति । वाक्येन लोके व्यवहारात् तस्य चावयवावयविव्यवस्थानुपपत्तेर्निर्भागमेव तद् वाचकम्, निर्भागश्च तस्य वाच्योऽर्थं इति । अवान्तरवाक्यमपि प्रयोगयोग्यं 10 व्यवहारकारणमिति तन्न निह्नूयते । अविद्यावस्थेयं वर्तते तत्रेयं व्यवहारवर्तनी ।

---

बहिः श्रोत्रेणापि सा मध्यमा । **क्रमरूपानुपातिनी** । वैखर्यास्तत्कार्यत्वात् तदवस्थाभाविनः क्रमस्यानुकारानुवर्तिनी । यादृशी मूर्तिरालेखयितव्या तथाविधैव बुद्धिस्था निरूप्यते । एवं च स्थूलोऽपि शब्दः प्रथमं बुद्धौ निवेश्यः सक्रमश्चासौ, बुद्धिनिविष्टत्वमेव मध्यमत्वम् । एवं च वैखरीधर्मस्य क्रमस्यात्मसन्निवेशलक्षणस्य च पश्यन्तीधर्मस्यानुगमादुभयोर्वाग्धर्म- 15 योर्मध्ये भावान्मध्यमात्वम् । **प्राणवृत्तिमिति** । प्राणस्य प्राणाख्यस्य वायोर्व्यापारं हि स्वरूपनिष्पत्तयेऽतिक्रम्यावधीर्य प्रवर्तते सा ।

**अविभागा तु पश्यन्ती** । अविभागा अविद्यमानभेदा, विवक्षाया अभावात् । **सर्वतः** स्वात्मनो विषयाच्च संहृतस्तिरोधापितः क्रमो यया, तदवस्थयोर्वाच्यवाचकयोरुभयोरपि क्रमस्याप्रतिभासनात् । स्वात्मैव ज्योतिः प्रकाशोऽस्या न पुनर्वैखरीवत् परसंवेद्यापि । 20 **सूक्ष्मा** ज्ञेयेनार्थेनासम्भिन्नाकारा ज्ञानप्रतिलीनाकारा वा । अत एवोद्भूतेन ज्ञानात्मना रूपेण पश्यति शब्दतत्त्वं न विवक्षयोपादत्त इति व्यापाराश्रयया सञ्ज्ञया ज्ञानानुस्यूता शब्दावस्था मध्यमावस्थायाः कारणमुक्ता । **अनपायिनी** च सा विषयापगमेऽपि चिदवस्थाया अविचलनादिति ।

अथ तस्यां तथाविधायामवस्थायां शब्दरूपानुगमे किं प्रमाणमिति तदाह 25 **अलमतिप्रसक्तेति । तस्य चावयव(वि?)व्यवस्थानुपपत्तेरिति** । यथा प्रतिपादितम् 'काले नदन्ति नागाः' इत्यत्र ।

यथादृश्यमानैवास्तु, विद्यायां सर्वमेवेदमसारमिति। पदेन वर्णेन वा व्यवहाराभावात् तस्य केवलस्याप्रयोगात् तत्स्वरूपमस्यामपि दशायां न वास्तवमिष्यत इति।

तस्मादेकः क्रमविरहितः कल्पितासद्विभागो
5 वाक्यस्फोटो जनयति मतिं तादृशीं स्वाभिधेये।
वर्णास्त्वेते प्रकृतिलघवः कल्पनैकप्रतिष्ठा-
स्तस्मिन्नर्थे विदधति धियं नेत्यलं तत्कथाभिः॥

### स्फोटवादनिरसनम्

अत्राभिधीयते। किमयमनुमानमहिम्ना स्फोटाभ्युपगमः, प्रत्यक्षप्रतीति-
10 बलवत्तया वा? न तावदनुमानतः स्फोटस्वरूपमुपपादयितुं पार्यते, परिदृश्यमानविशिष्टानुपूर्वीकवर्णकलापकरणेनार्थप्रतीतेर्घटमानत्वात्।

### समस्तवर्णानामेव वाचकत्वं न व्यस्तानाम्

ननु व्यस्तसमस्तादिविकल्पैरुत्सादितं वर्णानां वाचकत्वम्। नैतत्, दुर्विकल्पास्ते। व्यस्तानां तावद् वाचकत्वं नेष्यते वर्णानाम्, समस्ता एव ते
15 वाचकाः।

यत्तु तत्सामस्त्यं नास्ति क्रमभावित्वादिति, तदसत्, क्रमभाविनामपि समस्तानां कार्यकारिणामनेकशो दर्शनात्। यथा युगपद्भाविनः समास्त्रयो ग्रावाण एकामुखां धारयन्तो दृश्यन्ते, तथा क्रमभाविनोऽपि समस्ता ग्रासा एकां तृप्तिमुत्पादयन्तो दृश्यन्ते। एकस्मिन्नपि हि ग्रासे हीयमाने न भवति
20 तादृशी तृप्तिः। अतः समस्ता एव ते ग्रासास्तृप्तेः कारणम्। न च समस्ता अपि ते ग्रासा युगपत् प्रयोक्तुं शक्याः, तथैकानुवाकग्रहणे संस्थानां क्रमभाविनीनामपि सामस्त्ये सति सामर्थ्यमेकया संस्थया विना तदामुखीकरणासम्भवात्। एवं तावल्लोके सामस्त्यं क्रमभाविनां दृष्टम्। वेदेऽपि

---

प्रकृतिलघवः स्वभावत एव लघवोऽसारा अस्थिराः। परं यदि सङ्कलनाद्या-
25 त्मिकायां कल्पनाबुद्धावारूढानां तेषां स्थितिर्न स्वरूपेण, क्षणिकत्वादिति।

उखा स्थाली।

दर्शपूर्णमासाभ्यामितीतरेतरयोगशंसिना द्वन्द्वेन समर्पितसाहित्यानामाग्नेयादियागानां पक्षद्वयप्रयोज्यत्वेन चापरिहार्यक्रमाणामेकाधिकारसम्पादकत्वं दृष्टम् । तथा 'ऐन्द्रवायवं गृह्णाति' 'आश्विनं गृह्णाति', इति सोमग्रहणाभ्यासानां समस्तानां क्रमभाविनाञ्चैकप्रधाननिर्वर्तकत्वं दृष्टमिति । अतश्च नायं विरोधः सामस्त्यञ्च क्रमभावित्वञ्चेति । एवं क्रमवर्तिनोऽपि वर्णा एवार्थाभिधायिनो भविष्यन्ति ।

### स्फोटस्य नानुमानिकत्वम्

ननु ग्राससंस्थादीनां युक्तं समस्तानां क्रमभावित्वम्, यतः कार्यमपि तदीयं तृप्त्यादि क्रमेण निर्वर्त्यमानं दृश्यते । यद्येवमाग्नेयादिभ्यस्तर्हि क्रमेण निर्वर्त्यमानं किं कार्यमुपलभ्यते ? अवान्तरापूर्वमिति ब्रूमः, शब्दप्रामाण्यात् । परमापूर्वनिर्वृत्तिस्तु तेषां सामस्त्ये सति सेत्स्यतीत्युच्यते । अवान्तरापूर्वनिर्वृत्ताविदानीं क्रमभाविनामाग्नेयावयवभूतक्रियाक्षणानां किम-

---

**पक्षद्वयप्रयोज्यत्वेनेति** । दर्शे हि त्रयः प्रयुज्यन्ते पूर्णमास्याञ्च त्रय इति । **तथैन्द्रवायवं गृह्णातीति** । सोमेन यजेतेति उक्तम् । तत्र कथं यजेतेत्यपेक्षायां 'ऐन्द्रवायवं ग्रहं गृह्णाति' 'आश्विनं ग्रहं गृह्णाति' इत्यादयः सोमग्रहग्रहणाभ्यासा उक्ताः । सोमरसो विशिष्टपात्रस्थः सोमग्रहस्तस्य देवतोद्देशेन यदादानं तद् ग्रहणम्, तेषां ग्रहणानां विशिष्टदेवतोद्देशेन बहूनां यानि सम्पादनानि तान्येव कृतस्य ग्रहणस्य पुनःकरणरूपतया अभ्यासाः । न ह्यभ्यासं विनासौ सोमरस ऐन्द्रवायवमकृत्वा आश्विनः कर्तुं शक्यत इति, ते च क्रमभाविनः । ऐन्द्रवायवो हि तदा भवति यदेन्द्रवायुभ्यां सङ्कल्प्यते, सङ्कल्पश्च न यागं विना भवतीति प्रकृत्यंशो यागः; स च क्रमेण निर्वर्त्यमानोऽपि ज्योतिष्टोमाधिकारलक्षणं प्रधानाधिकारं निर्वर्तयतीति ।

**अवान्तरापूर्वमिति** । भट्टपक्षेऽवान्तरापूर्वं शक्तिरूपम्, प्रभाकरमते तु अवान्तराग्नेयादिनियोग एव । कुतस्तस्यानुपलभ्यमानस्य कल्पनेति चेत्, तदाह **शब्दप्रामाण्यादिति** । आग्नेययागस्य क्रियारूपत्वात् क्षणिकत्वेनान्यप्रधानयागकालेऽनवस्थितत्वेन फलनिर्वृत्तौ सहकार्ययोगात् तत्करणं निष्फलमेव प्रसज्येत । न च निष्फलं प्रमाणभूतशब्द उपदिशतीति तत्कल्पनम् । **आग्नेयावयवभूतक्रियाक्षणानामिति** । चतुरो मुष्टीन्निर्वपतीति व्रीहीनवहन्ति तन्दुलान् पिनष्टीत्यादय आग्नेययागावयवाः क्रियाक्षणाः ।

वान्तरं कार्यम्, का वा तस्य निर्वृत्तिरुपलभ्यते ? न ह्यवान्तरापूर्वेण स्वर्गमात्रा काचिदभिनिर्वर्त्यते, शास्त्रार्थस्य तदानीमनिष्पन्नत्वात्, अतः किमवान्तरापूर्वेण कृतेनापि । यत् किञ्चित् त्ववान्तरापूर्वप्रायं कार्यं वर्णेष्वपि न न दर्शयितुं शक्यते । किं तदिति चेत् ? स्वरूपग्रहणं संस्कारो वा भविष्यति । तयोः प्रधानकार्या-
5 वयवत्वं नास्तीति चेत् ? मा भूदवयवत्वम्, तदुपयोगिता तु विद्यत एव । अवयवा-वयविव्यवहारस्तु अवान्तरपरमापूर्वयोरपि दुरुपपादः । पदानान्तु वाक्यार्थ-प्रतिपत्तिलक्षणप्रधानकार्यावयवभूतपदार्थज्ञानाख्यकार्यनिर्वर्तकत्वमतिस्पष्टमस्त्ये-वेति न तेष्वेष दोषः प्रादुःष्यात् । वर्णानामपि गमनक्रियालक्षणानामिव ग्रामप्राप्तौ, ग्रासानामिव तृप्तौ, संस्थानामिवामुखीकरणे यद्यपि क्रमोपचीयमानतत्कार्य-
10 मात्रासमुन्मेषो नास्ति, तथापि तदौपयिकस्योपलब्धिसंस्कारादिकार्यस्य करणात् तत्कार्यावयवी तावत् कृतो भवतीति न समस्तानां क्रमकारित्वमपहीयते । तत्र पूर्वे वर्णा अतीता अप्युपकरिष्यन्ति, चरमवर्णस्तु वर्तमान इतीदृश एवायं काल्पनिकः क्रियाक्षणसमूह इव वर्णसमूहोऽर्थप्रत्यायकः ।

अथ वा क्रमोपलब्धेष्वपि वर्णेषु मानसमनुव्यवसायरूपमखिलवर्णविषयं
15 सङ्कलनाज्ञानं यदुपजायते तदर्थप्रत्यायनाङ्गं भविष्यति । दृश्यते च विनश्व-रेष्वपि पदार्थान्तरेषु क्रमानुभूतेषु युगपदनुव्यवसायो मानसः, 'शतमाम्राणि भक्षितवान् देवदत्तः' इति । न चायं प्रत्ययो नास्ति, सन्दिग्धो, बाध्यते वा । अनभ्युपगम्यमाने चेदृशि समुच्चयज्ञाने तन्निबन्धना भूयांसो व्यवहारा उत्सीदेयुः । स चायं सङ्कलनाप्रत्ययः स्मर्यमाणानुभूयमानप्राक्तनान्त्यवर्ण-
20 विषयतया सदसद्वर्णगोचरश्चित्ररूप उपेयते । यदि वान्त्यवर्णेऽपि तिरोहिते भवन् असद्वर्णगोचर एव, न चित्राकारः, सोऽर्थप्रतीतिहेतुरेक एवेति निरवकाशा व्यस्तसमस्तविकल्पाः ।

ननु सङ्कलनाप्रत्ययेऽपि यदि ते वर्णाः क्रमेणावभासन्ते, तदसावपि

---

अनुव्यवसायरूपमिति । बाह्येन्द्रियेण व्यवसितस्य निश्चितस्य अनु पश्चात्
25 मानसं यन्निश्चयनं सोऽनुव्यवसायः । तन्निबन्धना भूयांसो व्यवहारा इति । यथा प्रदर्शितम् शतमाम्राणीत्यादिव्यव............तिः । प्रामाणिकी व्यवस्था ।

पूर्वोत्पन्नैकैकवर्णबुद्धिनिर्विशेष एव स्यादिति तदुपारूढा अपि वर्णा नार्थप्रतीतिहेतवो भवेयुः ? यदि त्वेकसुमनस्स्तबकाकारावभासी स प्रत्ययः तदा तस्मिन् क्रमानवगमाद् विपरीतक्रमा अपि ते वर्णा अर्थप्रतीतिकारिणः स्युः ।

उच्यते, विशिष्टानुपूर्वीकवर्णमालानुभवसमनन्तरभावी हि सङ्कलनाप्रत्ययोऽर्थप्रतीतेर्हेतुः, न स्तबकाकारपरिच्छेदमात्रम्, विपरीतक्रमाशङ्कनञ्च तदानीं कुतस्त्यम् ? स्तबकावभासे तावत् क्रम एव नास्ति, कस्य वैपरीत्यमवैपरीत्यं वा ? यदनन्तरजन्मायं समुच्चयप्रत्ययस्ताश्च तद्विशिष्टक्रमावभासिन्य एव पूर्वभाविन्यो वर्णबुद्धय इति कुतो वैपरीत्यविकल्पः ? तस्मात् प्रथमावगमनियतानुपूर्वीकास्ते तदनन्तरभाविसमस्तावभासिसङ्कलनाप्रत्ययोपारूढा वर्णा अर्थप्रतीतिकारिण इति न दोषः ।

यथा "पूर्ववर्णजनितसंस्कारसहितोऽन्त्यवर्णः" इति तत्रभवता मीमांसाभाष्यकृता वर्णितं तथा वा वर्णानामर्थप्रत्यायकत्वमस्तु ।

नन्वत्रोक्तं संस्कारस्यार्थप्रतीतिजनकत्वं न दृष्टपूर्वम्, स्मृतावेव तस्य व्यापार इति । किमियं राजाज्ञा, स्मृतिरेव संस्कारेण कर्तव्येति ? नेयं राजाज्ञा नयाज्ञा त्वेषा । न हि संस्कारो नाम स्वतन्त्रः कोऽपि धर्मी, किन्तु पट्वभ्यासादरप्रत्ययगृहीतेष्वर्थेषु यदात्मनः स्मरणकारणं स संस्कारः । सा च स्मृत्यैव कार्येण कल्प्यमाना शक्तिः । न च शक्तिरूपस्य संस्कारस्य शक्त्यन्तरमर्थप्रतीतिजन्मनि सम्भवति । येनैव कार्येण सा कल्प्यते शक्तिस्तदपहाय किं कार्यान्तरं कुर्यात् ? स्मरणहेतोश्च संस्कारस्य प्रसवकारणमनुभवः । अनुभवहेतोस्त्वस्य नूतनचरितस्य संस्कारस्य जन्मनिमित्तमेव नोत्पश्यामः । तस्मान्नासावर्थप्रतीतिहेतुर्भवति ।

नैतत्सारम्, वर्णानुभवसंस्कृतमतेः पुंसोऽर्थप्रतीतिदर्शनात् । न हि स्मरणशक्तिः संस्कारः, किन्त्वात्मगुणो वासनाख्यः । स च स्मृतिमिवार्थप्रतीतिमपि जनयितुमुत्सहते । सर्वत्र नो दर्शनं प्रमाणम्, स्मरणजननकौशलमपि तस्य तथादर्शनादवगम्यते, तदिदमनुभवजननमपि ततो दृश्यत एव । वर्णाश्च तदनुभवाश्च व्यतीताः । अन्यच्च शब्दतत्त्वं नानुभूयत इति वक्ष्यामः । अस्ति चार्थप्रतीतिर्नासौ निष्करणिका, करणव्यतिरेकेण हि सा अनुद्भवन्ती करण-

माक्षिपति । यदस्याः करणं स संस्कार इति स्मृतिरिवार्थप्रतीतिरपि तत्कार्यत्वात् तदनुमापिका भवत्येव ।

यत्तु, कुतस्तादृशः संस्कार उदेति ? जडप्रश्नोऽयम्, अनुभवहेतुकस्य सुप्रसिद्धत्वात् । तथा चाह, 'वस्तुधर्मो ह्येष यदनुभवः पटीयान् स्मृतिबीजमाधत्ते' इति ।

ननु स्मृतिबीजमिति यदुच्यते तत् कथमनुभवबीजं स्यात् ? नैष नियमः स्मृतेरेव बीजमिति । अनुभवस्तावत् तथाविधमात्मधर्ममाधत्ते । स कार्यभेदोऽपि नोत्पत्तौ कारणान्तरं मृगयते, कार्यभेदश्च तथादर्शनादवगम्यत इत्युक्तम् ।

अथ वा किमनेन निर्बन्धनेन । साक्षादर्थप्रतीतिकारी संस्कारः स्मृतिद्वारेण तां करिष्यति । पूर्ववर्णेषु संस्कारात् स्मरणमन्त्यवर्णे श्रोत्रेन्द्रियादनुभव इत्येवं स्मर्यमाणानुभूयमानवर्णकरणकोऽर्थप्रत्ययः स्यात्, को दोषः ?

नन्वनुभवक्रमाहितसंस्कारसामर्थ्यमनुरुध्यमानाः स्मृतयोऽपि क्रमेणोत्पत्तुमर्हन्ति, न युगपदिति । ततश्च प्राक्तन एव दोषः सामस्त्याभावादिति । नैषदोषः, नानावर्णविषयैः क्रमभाविभिरनुभवैः क्रमोपचयात्मा पुटपाकैरिव कार्तस्वरस्यैक एवात्मनः संस्कारः तादृगुपाधीयते येन सर्वानेव पूर्वदृष्टान् वर्णानसौ सकृत् स्मरतीति । संस्कारात् संस्कारोत्पत्तिरलौकिकीति चेत्, नालौकिकी, स्वाध्यायाध्ययने सिद्धत्वात्; उच्चारणक्रियायाः क्षणिकत्वात् । तदाहिते संस्कारान्तरकारिणि संस्कारेऽनिष्यमाणेऽन्त्यमुच्चारणं प्रथमोच्चारणान्न विशिष्येत, ततः किं पुरुषायुषेणापि नानुवाक एव आमुखीक्रियेत ?

नन्वयमीदृशः प्रकार एकस्मरणसिद्धये कल्पनीयः, अर्थप्रतीतिहेतुता वा संस्कारस्य कल्पनीयेति । सर्वथेयमदृष्टकल्पना अतो न पश्यामहे तत्र कः संस्कारं प्रति पक्षपातः, कश्च स्फोटं प्रति विद्वेषः, यदेष कल्प्यते, नैष इति । उक्तमत्र तेनैव सुगृहीतनाम्ना भाष्यकारेण "शब्दकल्पनायां सा च शब्दकल्पना च" इति ।

ननु नास्ति कल्पनाद्वैगुण्यम्, संस्कारो हि यथाप्रसिद्धिः स्थित एव, का तत् कल्पना ? न हि वयं स्मरणैककारणत्वं संस्कारधर्ममतिलङ्घितवन्तो भवन्त इव । कथं न लङ्घितवन्तो भवन्तः ? सर्ववर्णविषयैकस्मरणकारिता भवद्भिरपि

कल्पितैव । यैव हि वर्तनी वर्णानामर्थप्रतीतौ सैव स्फोटव्यक्तावपि, ताञ्च कल्पयित्वा शब्दोऽन्यः कल्पितः । एवमतश्च संस्कारोभयवादिविहितस्य स्मरणकारित्वमुल्लङ्घ्यार्थप्रत्ययकारित्वं केवलमस्माभिरभिहितम् । भवद्भिस्तु मूलत एवारभ्य नवं विश्वमुत्थापितम्, अपूर्वस्य शब्दस्य तावदस्तित्वम्, पुनर्वर्णव्यतिरिक्तत्वम्, पुनरवयवराहित्यं कल्पितमिति कथं न कल्पनागुरुत्वम् ? 5
तदुक्तम्,

सद्भावव्यतिरेकौ च तथावयववर्जनम् ।
तवाधिकं भवेत् तस्माद् यत्नोऽसावर्थबुद्धिषु ।। इति ।

यत् पुनरवादि, प्रथमवर्णबुद्धिवेलायामिव व्यक्तं स्फोटतत्त्वमुत्तरोत्तर-बुद्धिभिरतिशयिततरप्रत्ययतां नीयते रत्नतत्त्ववदिति, स एष विषम 10
उपन्यासः । रत्नस्य हि सावयवत्वात् प्रथमप्रत्ययाविषयीकृतसूक्ष्मतरावयव-विशेषग्राहिणामुत्तरोत्तरप्रत्ययानामस्ति तत्रावकाशः । स्फोटस्तु वर्णस्वरूप-वदनंश इति तत्स्वरूपसर्वस्वमाद्येनैव वर्णेन व्यक्तम्, किमिदानीमन्ये वर्णाः करिष्यन्ति ? एकदेशव्यक्तिस्तु निरवयवस्य वर्णस्येव न सम्भवति । यथोक्तम्,

अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः । 15
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ।। इति ।

योऽपि द्वितीयो दृष्टान्त उदाहारि, यथा अनुवाकः श्लोको वा प्रथम-संस्थया गृहीतोऽपि संस्थानान्तराभ्यासैः स्फुटतरपरिच्छिन्नो भवति, तथा स्फोटोऽपि प्रथमवर्णव्यक्तौ वर्णान्तरैरतिशयिताभिव्यक्तिर्भविष्यतीति, सोऽपि न सदृशो दृष्टान्तः, श्लोकानुवाकयोरनंशत्वानुपपत्तेः । केचिदवयवा 20
वर्णात्मानः पदात्मानो वा प्रथमायां बुद्धावपरिस्फुरन्तः संस्थाभ्यासलब्धा-

---

सद्भावव्यतिरेकौ चेति । स्फोट............क्रियतेऽसौ वर्णेभ्योऽर्थबुद्धिजन्मन्येव क्रियतां कल्पना ला............"आवृत्या न तु स ग्रन्थः प्रत्यावृत्ति निरूप्यते" इति । उपलब्ध्यनन्तरसत्ताकानादि............ आवृत्त्या अ............ति प्रत्यावृत्तिनिरूपणमस्ति । उपलब्ध्यनन्तरसत्ताकानादि............ क्रमस्तु केषां क्रम इति । 25
स एव वा स्फोटादिति । शब्दस्यार्थप्रतीतिहेतोर्वर्णादि............ सापेक्षत्वात् सर्वथा............

तिशयायां तस्यां प्रकटीभवन्ति । स्फोटस्त्वेकवर्ण इव निरंश इति तत्र को बुद्धेरतिशययोगः ? तस्मादयमपि न सङ्गतो दृष्टान्तः ।

**न च ध्वनिव्यङ्ग्यः स्फोटः**

येऽपि च मन्वते, ध्वनिव्यङ्ग्यत्वात् स्फोटस्य न तत्र वर्णविकल्पावसर 5 इति, तेऽपि न सम्यग्दर्शिनः । पराणुभ्यः वर्णप्रतीतिध्वनिभ्यः शब्द-प्रतीतेरनुत्पादात् । अतिद्रुतोच्चिचारयिषया अनुपलभ्यमानवर्णविभागाच्च शब्दादर्थप्रत्ययाभावात् ।

अथ ध्वनयः शब्दव्यक्तिमादधानाः स्थानकरणानुरोधेनासत्यमेव वर्ण-भेदमुपदर्शयन्ति, श्यामादिरूपमिव मुखस्य खड्गादय इत्युच्यते, तदप्यसत्, 10 असत्यत्वे निमित्ताभावात् । प्रतीयन्ते हि निर्बाधया बुद्ध्या वर्णास्तदतिरिक्तस्तु शब्दो न प्रतीयते । यश्च न प्रतीयते सोऽस्ति, ये च प्रतीयन्ते ते न सन्ति इत्युच्यमाने शशो नास्ति विषाणमस्तीति स्यात् । तस्मादयमपि न कल्पनागौरव-परिहारक्षमः पन्थाः । अतः सुष्ठूक्तम्, "शब्दकल्पनायां सा च शब्दकल्पना च" इति । तस्मात् स्फोटप्रतिपत्तौ यः क्रम आस्थेयः सोऽर्थप्रतिपत्तावेवा-15 स्थीयतामिति किं तेन स्फोटेन ?

अन्ये तूपलब्ध्यनन्तरसत्ताकानां वर्णानामर्थप्रत्यायकत्वमाचक्षते, तदिह नेष्यते, क्षणिकत्वाद् वर्णानाम्, उपलब्धेरूर्ध्वं सत्तानुपपत्तेः । सर्वथा व्युत्पत्त्य-नुसारेण वर्णानामर्थप्रत्यायकत्वम्, तद्यथापुरा दृष्टं तथाभ्युपगम्यत इति । तदुक्तम्, "यावन्तो यादृशा" इति ।

20 यत्त्वत्र प्रतीपमुक्तम्, कियन्तः कीदृशा इति, तत्र प्रतीतयः प्रष्टव्या न तपस्विनो वयमिति यत् किञ्चिदेतत् ।

यत्पुनरभ्यधायि क्रमव्यत्यासप्रयुक्ता अपि वर्णाः प्रत्यायका भवेयुः; क्रम एव वा स्फोटः स्यादिति, तदपि न पेशलम् । क्रमो हि नाम स कालभेदः, न च काल एव स्फोटो भवितुमर्हति, क्रमोऽपि च न स्वतन्त्रः प्रतिपादकः, 25 पदार्थान्तरवृत्तिर्वा, किन्तु वर्णाश्रित एव । तत्र चोक्तम्,

द्वये सत्यपि तेनात्र विज्ञेयोऽर्थस्य वाचकः ।
वर्णाः किन्तु क्रमोपेताः किन्तु वर्णाश्रयः क्रमः ॥

क्रमः क्रमवतामङ्गमिति किं युक्तिसाध्यता ।
धर्ममात्रमसौ तेषां न वस्त्वन्तरमिष्यते ।। इति ।

तस्माद् ये यावत्क्रमका यमर्थं प्रत्याययन्तो दृष्टा वर्णास्ते तत्क्रमका वर्णास्तमर्थं प्रत्याययिष्यन्तीति न स्फोटादर्थावगतिरिति । तदेवं न कार्यानुमानमर्थापत्तिर्वा स्फोटसिद्धये प्रभवतीति सिद्धम् । 5

**न वा स्फोटः प्रत्यक्षः**

यदप्यभाणि, शब्दादर्थं प्रतिपद्यामह इति व्यवहारः स्फोटपक्षसाक्षितामेवावलम्बत इति, तदप्यसारम् । वर्णानां वाचकत्वे यथोक्तनीत्या साधिते तत्पक्षेऽपि तथा व्यवहारोपपत्तेः ।

ननु कथमुपपत्तिः ? संस्कारस्तावन्न शब्दशब्देनोच्यते । न हि तथा लोके 10 प्रसिद्धिः । संस्कारे च वाचके व्युत्पत्तिरपि दुरुपपादा । परावगतिपूर्विका हि शब्दात् स्वावगतिर्न च परस्थः संस्कारः परस्य प्रतीतिमुपजनयन् ग्रहीतुं शक्यः, परोक्षत्वाद् । वर्णेष्वपि शब्दशब्दो वर्तमानः प्रतिवर्णं वा वर्तेत, वर्णसमुदाये वा । प्रतिवर्णं वर्तमाने च शब्दे न शब्दादर्थप्रतिपत्तिः स्यात्, एकस्य वर्णस्य वाचकत्वायोगात् । समुदाये तु न वर्तितुमर्हति 15 शब्दशब्दः, जातिशब्दत्वात् । द्विवचनबहुवचनान्तव्यक्तिशब्दप्रयोगे हि तत्सामानाधिकरण्येन न जातिशब्द एकवचनान्तः प्रयुज्यते । न हि भवति देवदत्तयज्ञदत्तौ पुरुष इति, धवखदिरपलाशा वृक्ष इति, तथा गकारौकारविसर्जनीयाः शब्द इत्यपि ।

ननु वनशब्दवत् तर्हि समुदायवाची भविष्यति शब्दशब्दः, वनं वृक्षा न 20 जातिशब्दवदिति चेन्न, तत्र समुदायव्यतिरेकनिर्देशदर्शनादाम्राणां वनं कपित्थानां वनमिति, न चैवमिह व्यतिरेकनिर्देशोऽस्ति गकारादीनां शब्द इत्यदर्शनात् ।

अथ ब्रूयादाम्रादयो वनमित्यभेदेनापि वनशब्दः प्रयुज्यते, तथेहापि गकारादयः शब्द इति प्रयोक्ष्यते, एतदपि नास्ति, वनादौ भेदव्यपदेशवशेन 25 प्रतिव्यक्ति चाप्रयोगेण प्रसिद्धे समुदायशब्दत्वे समुदायिनोरभेदोपचारादाम्रादयो वनमिति युज्यते प्रयोक्तुम्, इह तु गकारादीनां शब्द इति न

कदाचिदपि व्यक्तिरेकनिर्देशो दृश्यत इति समुदायशब्दत्वमघटमानं तत्सर्वथा वर्णशब्दवादिनामनुपपन्नोऽयं व्यपदेशः शब्दादर्थं प्रतिपद्यामह इति । उच्यते । किमनेनोपपन्नेनानुपपन्नेन वा कृत्यम् ? यद्ययमुपपद्यते ततः किम् ? अथापि नोपपद्यते ततोऽपि किम् ? न हि लोकव्यपदेशनिबन्धना वस्तुस्थितिर्भवति ।

5 ननु शास्त्रकारा अप्येवं व्यवहरन्ति 'भावमाख्यातेनाचष्टे' इति । न शास्त्रकारव्यवहारादप्याप्रमाणिकोऽर्थः शक्यतेऽभ्युपगन्तुम् । कतरच्चेदं प्रमाणं लोकव्यपदेशो नाम ? अनुमानं तावत् प्रतिक्षिप्तम् । प्रत्यक्षमपि प्रतिक्षेप्स्यते । न चान्यत् स्फोटसिद्धौ प्रमाणं क्रमते । तदस्थानेऽयं लोकव्यपदेशनिरूपणेन स्फोटाटोपः । न चात्यन्तमसङ्गतोऽयं वर्णपक्षे लौकिको व्यपदेशः ।
10 पूर्ववर्णजनितसंस्कारसहिते तावदन्त्यवर्णे वाचके सुसङ्गत एवायं व्यपदेशः । तस्य शब्दत्वादेकत्वाच्च सङ्कलनाप्रत्ययोपारूढवर्णवाचकत्वपक्षेऽपि न दोषः । न हि भेदशब्दसहित एष शब्दशब्दः प्रयुज्यते, गकारादिभ्यः शब्दादर्थं प्रतिपद्यामहे, केवलस्तु जातिशब्द एकवचनान्तो बहुष्वपि वर्णेषु न विरुद्धः । किञ्च स्फोटपक्षे सुतरामनुपपन्नोऽयं व्यपदेशः शब्दादिति । प्रातिपदि-
15 कस्यार्थस्याभावान्न हि वर्णवत् स्फोटे शब्दशब्दत्वं प्रयुञ्जानो दृश्यते व्यवहर्तृजनः । अर्थप्रतिपत्तिहेतुत्वं शब्दलक्षणमसाधु, धूमादिभिर्व्यभिचारात् ।

अथापि प्रक्रमपर्यालोचनया श्रोत्रग्राह्यत्वविशिष्टप्रतिपत्तिहेतुत्वं शब्दलक्षणमभिधीयते, तदिदं स्फोटं प्रति न सिद्धम्, तस्य श्रोत्रप्रत्ययविषयत्वाभावात् । श्रोत्रग्राह्यत्वमेव च तदितरव्यवच्छेदक्षममिति तदेव युक्तम्,
20 किमुभयोपादानेन ? श्रोत्रग्राह्यत्वञ्च वर्णेष्वेव नार्थान्तरस्येति वर्णा एव शब्दः । तदुक्तम्,

> परस्परानपेक्षाश्च श्रोत्रबुद्ध्या स्वरूपतः ।
> वर्णा एवावसीयन्ते न पूर्वापरवस्तुनी ॥ इति ।

---

शास्त्रकारा इत्यनेन निरुक्तकारयास्काचार्यान् परामृशति । अ..............ति ।
25 प्रक्रमयभिधानात् श्रोत्रग्राह्यत्वविशिष्टमिति । गौरिति................रिकल्पिता गकाराद्यारम्भकाः परमाणव उच्यन्ते । परशब्दे...........इति ।

श्रोत्रग्राह्यत्वं शब्दलक्षणं सत्तादावप्यस्तीति चेत्, न, श्रोत्रेणैवेत्यवधारणस्य विवक्षितत्वात् । श्रोत्रमनोभ्यां ग्रहणादसिद्धमवधारणमिति चेत्, न, समानजातीयव्यवच्छेदार्थत्वादवधारणस्य विवक्षितत्वात् । चक्षुरादीन्येव तेन व्यवच्छिद्यन्ते, न मनः । तथापि शब्दत्वेन व्यभिचार इति चेत्, न, जातिमत्त्वे सतीति प्रक्रमलभ्यविशेषणापेक्षणात् । स्तनयित्नुनादप्रभृतिभिरपि न व्यभिचारः, तेषां शब्दत्वाभ्युपगमात् । तदुक्तं भाष्यकृता "द्विविधश्चायं शब्दो वर्णात्मा ध्वनिमात्रश्च" इति । अर्थप्रत्यायकत्वं तु न लक्षणमित्युक्तम्, अगृहीतसम्बन्धे वर्णात्मनि शब्दे तदभावेनाशब्दत्वप्रसङ्गात् । कालान्तरेण सम्बन्धबुद्धौ सत्याञ्च शब्दत्वमित्यव्यस्थितमिदं लक्षणम् ।

यदपि शब्दस्वरूपनिरूपणप्रसङ्गेन तदभिधेयानां जातिगुणक्रियादीनां शब्दत्वाशङ्कनं तत्परिहरणञ्च, तदपि किमाशयमिति न विद्मः, तेषामतिविभक्तरूपग्रहणात् । अतः श्रोत्रग्राह्यस्य शब्दत्वात् स्फोटस्य च श्रोत्रग्राह्यत्वाभावाद् वर्णवादिनामेव शब्दादर्थं प्रतिपद्यामह इत्यनुकूलो व्यपदेशः, न स्फोटवादिनामिति स्थितम् ।

कथं पुनः श्रोत्रग्रहणत्वं स्फोटस्य न मृष्यते ? यतः पदं वाक्यमिति श्रोत्रकरणमेकाकारं ज्ञानं प्रत्यात्मवेदनीयमस्ति । न चास्य वर्णा आलम्बनीभवेयुरित्युक्तम् । न युक्तमुक्तम् । इह हि शाबलेयादौ प्रतिपिण्डं गौरिति बुद्धिरुपजायमाना सकलपिण्डसाधारणं रूपं विषयीकरोतीति गोत्वसामान्यं तदिष्यते । एवं यदि प्रतिवर्णं पदं पदमिति, वाक्यं वाक्यमिति मतिरुपजायेत जातिवत्, तर्हि पदं वाक्यञ्च सर्ववर्णवृत्ति किमपि रूपमभ्युपगच्छेम । न त्वेवमस्ति प्रतीतिः, यथा च तन्त्वाद्यवयवपरिघट्टितपटादिकार्यविषयमाद्यनयनसन्निपातसमय एव भेदग्रहरहितमवयविज्ञानमुदेति, तथा क्रमसमुच्चरदेकैकवर्णस्वरूपोपग्रहनिरपेक्षं यदि पदमिति वाक्यमिति ज्ञानं भवेत्, तत्पटादिकमवयविनमिव पदं वाक्यमेकैकरूपमनुमन्येमहि, न त्वेवमस्ति । न हि तन्तुभिरिव पटो वर्णैः पदमारभ्यते ।

यत्तु गौर्गौरित्येवं ज्ञानमभेदग्राहि दृश्यते, तदेकाजुपाधेः । भिन्नाजुपश्लेषे तु देवदत्त इत्यादौ नानाक्षरग्रहणमेव विलम्बितमनुभूयते । न चैवं पटादि-

बुद्धिषु तदवयवाः कदाचिद् विच्छेदेनावभासन्ते । तस्मान्नावयवीव जातिरिव वा पदं वाक्यमभिन्नमवभासते ।

ननु च यासौ शब्दशब्दाद् बुद्धिः, सैवेयं स्फोटबुद्धिः । किमिदानीं यदेव शब्दत्वं सामान्यं स एव स्फोटः ? मैवम्, स्फोट एवासौ न शब्दत्वं सामान्यं
5 तत् । सामान्यं हि तदुच्यते यत्रैकव्यक्तिदर्शने व्यक्त्यन्तरानुसन्धानं शाबलेयग्रहणे बाहुलेयस्येव । इह तु न गकारग्रहणे औकारानुसन्धानमिति नेदं सामान्यम् । एकरूपस्त्वयं प्रतिभासः शब्दतत्त्वविषय एव, शब्दतत्त्वं च स्फोट इत्युच्यते ।

आम्, ज्ञातममुनैव हि भयेन कैश्चित् स्फोटशङ्कितैः शब्दतत्त्वसामान्यमपह्नुतम् । अस्थान एव त्वयं सन्त्रासः । न हि शब्दत्वं स्फोटः । प्रतिवर्णं हि
10 शब्दः शब्द इति बुद्धिरस्ति । न च वर्णः स्फोटः । तदिदं शब्दत्वसामान्यमेव शब्दबुद्धेरालम्बनम्, न स्फोटः । सामान्यसिद्धौ तु व्यक्त्यन्तरानुसन्धानमकारणमिति प्रागेव निर्णीतम् । तस्मान्न शब्दबुद्धावपि स्फोटोऽवभासते पदवाक्यबुद्धावित्येतच्च सत्यमाह । यदियमेककार्यकारित्वनिबन्धना वनपृतनादिबुद्धिसमानयोगक्षेमैव पदवाक्यबुद्धिरिति । न च जात्यादिष्वसमाश्वासो
15 वैलक्षण्यस्य दर्शितत्वात् ।

यदप्येककार्यकारित्वनिबन्धनायामभेदबुद्धावितरेतराश्रयपरिचोदनमेकार्थप्रतीतिपूर्विका पदवाक्यबुद्धिः, पदवाक्यबुद्धिपूर्विका चैकार्थप्रतीतिरिति, तदपि न सम्यक् । स्मर्यमाणानुभूयमानवर्णजनितेयमर्थप्रतीतिरित्यवोचाम, नाभिन्नपदपरिच्छेदपूर्विकेति कुत इतरेतराश्रयत्वम् ? ब्रूयात् पदवाक्ययो-
20 रेकत्वमन्तरेण कथं पदवाक्यार्थप्रतीतिरेकरूपा भवेदिति सोऽयमतीव मुग्धालापः । प्रतीतिभेदाभेदौ हि विषयभेदाभेदावनुरुध्येते, नोपायभेदाभेदौ । भिन्नैरपि लोचनालोकान्तःकरणप्रभृतिभिरुपायैरभिन्नार्थग्राहिणी बुद्धिरुपजन्यत एव । तदिह पदार्थबुद्धेरेकत्वात् पदार्थ एको भवतु, योऽस्या विषयः, न त्वेकं पदं यत्कारणमिति वाक्यार्थबुद्धेरप्येकत्वादेको वाक्यार्थो भवतु, न
25 त्वेकं वाक्यं वर्गीकरणकारणं क्रमभाविनां बहूनां वर्णानामेतद्भवति यदेकार्थ-

---

कैश्चित् स्फोटशङ्किभिरिति प्राभाकरैः, भाट्टा हि गत्वादि.......................
धानाभावात् ।

प्रतिपादकत्वम्, न त्वभेदमेव पदवाक्ययोर्गमयतीति। विप्रलब्धा एव च वैयाकरणाः पदवाक्ययोरप्यभेदं मन्यन्ते किल। शब्दादनन्यभूत एव शब्दार्थ इति स पुनरेषां व्यामोहः, तद्भेदस्य दृढप्रमाणसिद्धत्वात्। शब्दाध्यासस्तु प्रतीतिविरुद्धत्वेन नेष्यत इत्यलं तत्कथया। तस्मात् प्रत्यक्षगम्योऽपि न स्फोट इति सिद्धम्। 5

**पदानां सावयवत्वसमर्थनम्**

नन्वभिन्नत्वाद् वाक्यार्थबुद्धेर्विषयभेदाभेदानुवृत्तत्वाच्च बुद्धिभेदाभेदयोरभिन्नो वाक्यार्थः स्यात्? बाढम्, अभिन्नो न त्वनवयवः; पटादेरभिन्नस्यापि सावयवत्वात्। यत्तु निरवयवत्वमुच्यते, तदतीव संवित्परामर्शकौशलशून्यव्याहृतम्। 10

अंशाः सन्ति न सन्तीति चिन्तात्यन्तमसङ्गता।
निरंशस्त्वस्ति नास्तीति युक्तं चिन्तयितुं सताम्॥

पदतदर्थभेदस्य प्रतिवाक्यं विस्पष्टमाभासमानत्वादनुगृह्यमाणावयवविभागयोश्च वाक्यवाक्यार्थयोरनवभासमानत्वादस्त्यवयवप्रतीतिः। सा तु भ्रान्तेति चेत्, न, बाधकाभावात्; भ्रान्तेश्च बीजं किमपि वक्तव्यम्। सादृश्यमिति 15 चेत्, कस्य केनेति न विद्मः। यदि हि क्वचिन्मुख्या अवयवाः प्रसिद्धा भवेयुः, तस्मात् सादृश्यादितरत्र तदभावेऽपि भ्रम इति गम्यते। न त्वेवमस्ति। पूर्वं वाक्यानामप्यभागत्वाद् नरसिंहेऽपि नरावयवाः सिंहावयवाश्च पृथक् पृथक् प्रत्यभिज्ञायन्ते, तद्वदिहाभ्युपगम्यमाने नूनं क्वचिद् वाक्ये सत्त्वमवयवानामेषितव्यम्। चित्रेऽपि हरितालसिन्दूरादिरूपम्, पानके त्वगेलादिरसः, ग्राम- 20 रागेऽपि षड्जर्षभगान्धारादिस्वरजातं पृथगवगतमिति न ते निर्भागदृष्टान्ताः।

---

शब्दाध्यासस्त्विति। शब्दाकाराध्यारोपेणार्थस्य................

अंशाः सन्ति न सन्तीति। निरंशश्चेत् प्रमाणेनोपलभ्येत, तथाविधोपलम्भादेवांशाभावसिद्धेः किमंशाभावप्रतिपादनचिन्तया; प्रत्यक्षञ्चांशानामुपलम्भादिति।

सादृश्यमिति चेदिति। यादृशा एव स्थानकरणादिसामान्यात् 'देवदत्त गामभ्याज' 25 इत्यादौ वाक्येऽभिव्यञ्जका ध्वनयस्तादृशा एव 'गामानय' इत्यत्रापि वाक्ये इति ध्वनिसादृश्याद् यथा तत्र गोशब्दोऽस्त्येवमत्राप्यस्तीति भ्रमः।

चित्रादिबुद्धयस्तर्हि दृष्टान्ता इति चेत्, बाढम्, वाक्यार्थबुद्धिरपि निर्भागेष्यत एवास्माभिः, बुद्धीनां निरंशत्वेन सर्वासामनवयवत्वात्। बुद्धिविषयीकृतस्त्वर्थो दृष्टान्तदार्ष्टान्तिकयोः सावयव एव। तस्मान्न निर्भागौ वाक्यवाक्यार्थाविति युक्तम्।

5 यदप्यभ्यधायि वृद्धव्यवहारेण सम्बन्धबुद्धिर्वाक्यवाक्यार्थयोरेव, न पदतदर्थयोः, पदेन व्यवहाराभावादिति; तदप्यसाधु, वाक्यादपि व्युत्पत्तिर्भवन्ती पदार्थपर्यन्ता भवतीति। एवं हि पदतदर्थसंस्कृतमतेरभिनवविरचितादपि वाक्याद् वाक्यार्थप्रतीतिरुपपत्स्यते। तदावापोद्वापपरतन्त्रवैचित्र्येण वाक्यानामानन्त्यादशक्या प्रतिवाक्यं व्युत्पत्तिः, सापि नापेक्षिष्यते, इतरथा हि सा 10 अवश्यमपेक्ष्येत।

यत्तु केवलं पदं न प्रयुज्यत इति तदसत्यमिति, तदप्यसत्, महावाक्यस्थानेऽवान्तरवाक्यं न प्रयुज्यत इति तदप्यसत्यं स्यात्। स्वार्थे तत् प्रयुज्यत इति चेत्, पदमपि स्वार्थे क्वचित् प्रयुज्यत एव। यत्र पदानामर्थोऽर्थप्रकरणादिना लभ्यते, तत्र यावदप्राप्तं पदमेव केवलमुच्चारयन्ति। ग्रन्थग्रहणा15 वसरेषु च स्वरूपावधारणमपि फलवद् वर्णानाम्, मा वा फलवत्त्वं पदवर्णानां भूत्, तथापि रथावयवानामिव रथकार्येष्वपर्याप्तशक्तीनामपि स्वरूपसत्त्वमनिवार्यम्। कार्यान्तराय रथाद् रथावयवाः प्रभवन्तीति चेत्, पदवर्णा अपि कार्यान्तरे प्रभविष्यन्ति। रथकार्यैकदेशमात्रां कामपि रथावयवाः कुर्वन्तीति। तदुच्यते, पदान्यपि वाक्यकार्यैकदेशं कमपि कुर्वन्त्येव। वर्णा अपि 20 केचिदर्थवन्तो भवन्त्येवेति तस्मान्नासन्तः पदवर्णाः।

---

**पदार्थपर्यन्ता भवति।** आवापोद्वापकल्पनया 'रक्तः पटो भवति' इति महावाक्यम्, रक्ताख्येन गुणेन पटस्य सम्बन्धप्रतिपादनार्थम्; अवान्तरवाक्यन्तु 'पटो भवति' इति; स्वार्थश्चास्य पटसत्तासम्बन्धलक्षण इति।

**यत्र पदान्तराणामर्थ इति।** यथा संव्रियतामपाव्रियतामित्यस्यार्थेऽर्थप्रकरणादिलभ्ये 52 द्वारमिति केवलं प्रयुज्यत इति। **कार्यान्तराय रथावयवा इति।** कार्यान्तरं रथादन्यत् काष्ठमात्रसाध्यं दर्शनं वा। **वर्णा अपि कार्यान्तर इति।** यथा अकारादयो विष्ण्वादिवाचकाः। **वर्णा अपि केचिदिति।** पदे ये वर्णाः प्रकृतिप्रत्ययादयः स्वार्थेन चार्थवन्तस्ते।

यत् पुनरवादि, वाक्यस्येव पदानि पदानामिव वर्णा वर्णानामप्यवयवान्तराणि स्युरिति तदिदमपूर्वं पाण्डित्यम्। न हि घटः सावयव इति परमाणुभिरपि सावयवैर्भवितव्यम्। उपलब्ध्यनुपलब्धी हि वस्तूनां व्यवस्थापिके। यद् यथोपलभ्यते, तत् तथा भवति, यद् यथा नोपलभ्यते, तत् तथा न भवति। वाक्यपदयोश्च भागा उपलभ्यन्ते, न वर्णानाम्। तथा ह्युक्तमेतत्, 5

अल्पीयसापि यत्नेन शब्दमुच्चारितं मतिः।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम्॥ इति।

तस्माद् वालिशचोदितमिदं वर्णस्याप्यवयवा भवन्तु, पदवाक्ययोरपि वा मा भूवन्निति। अतश्च सावयवौ वाक्यवाक्यार्थौ पदोपजननापायाभ्यां तदर्थोपजननापायदर्शनादनयैव युक्त्या पदभागा अपि प्रकृतिप्रत्ययादयस्तात्त्विका इत्यवगन्तव्यम्, न कल्पनामात्रप्रतिष्ठाः। वृक्षं वृक्षेणेत्यत्र प्रकृत्यर्थानुगमे प्रत्ययार्थो भिद्यते, वृक्षं घटमिति प्रत्ययार्थानुगमे प्रकृत्यर्थो भिद्यते, तत्र योऽर्थो यं शब्दमनुगच्छति, स तस्यार्थ इत्यवसीयते, तत् कथमसत्या भागाः? 10

यत् पुनः कूपसूपयूपादौ सत्यपि वर्णानुगमेऽर्थानुगमो न दृश्यते, तेन चाकारणमर्थप्रतीतेर्वर्णानुगम इत्युक्तम्, तदयुक्तम्; यतो नान्वयव्यतिरेकाभ्यामनुत्पन्ना प्रतीतिरुत्पाद्यते, येन कूपादौ तदुत्पादनमाशङ्क्येत, सिद्धायान्तु प्रतीतौ वाचकभागेयत्तानियमपरिच्छेदेऽनयोर्व्यापारः, न चैकत्र वर्णानुगमेऽनुगमो दृष्ट इत्यन्यत्रादृश्यमानोऽपि हठादापादयितुं युक्तः। रेणुपटलानुगतपिपीलिकापङ्क्तिद्वारकव्यभिचारोद्भावनमपि न पेशलम्, पांसुपटलविकलपिपीलिकापङ्क्तिदर्शनेन तस्यास्तत्प्रतीतिकारित्वाभावनिश्चयात्। करिकरभ- 15 20

यत् पुनः कूपसूपेति आह च

यत् कूपसूपयूपेषु समानेऽप्यूपबन्धने।
नास्त्यर्थानुगमः कश्चित् तन्न शब्दोऽपराध्यति॥
नान्वयव्यतिरेकाभ्यामपूर्वार्थोऽवधार्यते।
सङ्कीर्णेऽवगते ह्यर्थे ताभ्यां शक्तिर्नियम्यते॥ इति॥ 25

तुरगप्रभृतीनान्तु प्रत्येकं व्यभिचारेऽपि बहुप्राणिरूपसामान्यानपायात् तत्तत्कारणमेव धूलिपटलमवगम्यते ।

यदप्यश्वकर्णादाववयवार्थलोपादन्यत्राप्येवमिति कथितम्, तदपि न चतुरस्रम् । अश्वकर्णशब्दो हि क्वचिदर्थप्रकरणवशान्न्यग्भवदवयवशक्तितया 5 तिरस्कृतावयवार्थवस्त्वन्तरव्यक्तौ न सर्वात्मनावयवार्थाभावः, व्यस्तत्वेन सामस्त्येन वा पुनः प्रयोगान्तरे तदर्थसम्प्रत्ययदर्शनादश्वमारोह, कर्णे कुण्डलमिति व्यस्तयोः प्रयोगः, तुरगश्रोत्रे तु प्रतिपिपादयिषितेऽश्वकर्ण इति समस्तप्रयोगोऽपि तदर्थापरित्यागी दृश्यत इति न सर्वात्मना निरर्थका भागाः ।

यत् पुनरन्वाख्यानविसंवादात् प्रकृतिप्रत्ययविभागनियमो नावकल्पत 10 इति, एतदपि न युक्तम्, आप्ततरोक्तीनां प्रामाण्यात् त्रिमुनिव्याकरणमिति पाणिनिमतमेव हि प्रकृतिप्रत्ययविभागमवितथं प्रत्येषामः । कियत्यपि चांशे प्रायेण सर्वेषामन्वाख्यातॄणामविवादः । विकरणादिविसंवादमात्रं त्वकिञ्चित्करम् । अतः पारमार्थिकत्वात् प्रकृतिप्रत्ययांशयोर्न कल्पनामात्रेण पृथक्करणम् ।

यदप्यवर्णि, वर्णसामान्यादपि भागज्ञानं दुर्घटं कालेनदन्तिनागा इति, 15 तदप्यसारम्, स्वरस्मरणादीनां पदभेदावगमोपायानां सम्भवात् । सराम इत्याख्यातस्यान्यत् स्वरादिरूपं नाम्नोऽन्यत् । नामत्वेऽपि स इति राम इति च द्वे पदे, तयोरन्यद्रूपम् । सह रामेण वर्तत इत्येकपदेऽप्यन्यद्रूपमभियोगविशेषवतां सर्वं सुभगमिति नाशक्यः पदविभागपरिच्छेदः ।

यदपि दध्यत्र मध्वत्रेति तथाविधपदरूपादर्शनेऽपि तदर्थसम्प्रत्यय इत्युक्तम्, 20 सोऽपि न दोषः, यतस्त एवैते पदे ईषद्विकृते तत्प्रत्यभिज्ञानाच्चेति केचित् ।

अथवा इगन्तदधिमधुपदवद् यणन्तयोरपि विषयान्तरे साधुत्वात्, तथैव तद्विधाद् व्युत्पत्तुर्यणन्तेऽपि पदेऽर्थप्रतिपादके भविष्यत इत्यलमेवंप्रायैः कदाशाव्याहृतैः ।

---

25 **सराम इति ।** आख्यातपक्षे प्रत्ययस्वरेणान्तोदात्तः पदद्वयपक्षे स इति प्रातिपदिकस्वरेणोदात्तो राम इति च "कर्षात्वतोर्घञोऽन्त उदात्तः" इत्यन्तोदात्तः । सह रामया वर्तत इति तु बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणाद्युदात्तः ।

**प्रसङ्गतः पदानां लिप्यक्षराणाञ्च परमार्थसत्त्वम्**

अपि च पदानामसत्यत्वे किमर्थ एष तद्व्युत्पत्तावियान् प्रयत्नो वृद्धैराधीयते ? असत्यमपि सत्योपायतां प्रतिपद्यत इति चेत्, अदृष्टत्वादलीका हि दंशादयः सत्यमूर्छाहेतवो येऽत्रोदाहृतास्ते तथा न भवन्ति, विषाशङ्काया अपि तत्कार्यहेतुत्वात् । शङ्का हि नाम बुद्धिः । बुद्धिश्च न न कारणम् । 5
न चासती बुद्धिः ।

यदपि लिप्यक्षराणामसत्यानां सत्यार्थप्रतिपादकत्वमुच्यते, तदप्यनभिज्ञभाषितम् । रेखास्तावत् स्वरूपतः सत्यः, ताश्च खण्डिकोपाध्यायोपदेशसंस्कृतमतेर्वर्णानुमापिका भवन्ति । तथा सम्बन्धग्रहणाद् रेखानुमितेभ्यश्च वर्णेभ्योऽर्थप्रतिपत्तिरिति नासत्यास्सत्योपायाः । अयं गकार इति तु सामानाधिकरण्य- 10
भ्रमो लिङ्गलिङ्गिनोरभेदोपचारात् । यथा प्रस्थमिताः सक्तवः प्रस्थशब्देनोच्यन्ते, तथा रेखातोऽपि गकारानुमानाद् रेखैव गकार इत्युच्यते । एवमनिष्यमाणे लिप्यनभिज्ञस्यापि ततोऽर्थप्रतिपत्तिः स्यात्, रेखाणामसत्यवर्णात्मनां विद्यमानत्वात्, न चैवमस्ति । तस्माद् वर्णानुमानपुरस्सरैव रेखाभ्योऽर्थावगतिः । अभ्यस्तत्वाद् विषयस्य, सूक्ष्मत्वाच्च कालस्य क्रमो न लक्ष्यते, न त्वन्यथा 15
ततोऽवगतिः । तस्मात् पारमार्थिकत्वात् पदतदर्थानां न निरवयवौ वाक्यवाक्यार्थाविति स्थितम् ।

यत्पुनर्वाक्यभागपदवर्णापह्नववर्त्मना शब्दब्रह्मैवाद्वयमुपदर्शयितुमुपक्रम्यते, तत्र पुरस्तात् सविस्तरं समाधिमभिधास्यामः ।

यत्पुनरवादि वाचस्त्रैविध्यम्, तदपि नानुमन्यन्ते; एकैव वैखरी वाग् 20
वागिति प्रसिद्धा हि ।

अन्तःसङ्कल्पो वर्ण्यते मध्यमा वाक्
सेयं बुद्ध्यात्मा नैष वाचः प्रभेदः ।

---

शङ्काया अपि तत्कार्यहेतुत्वादिति । शङ्काविषेणापि मरणं दृश्यते यतः ।
अभ्यस्तत्वाद् विषयस्येति । अविनाभावस्मृत्यभावेऽपि रेखावगमसमनन्तरं 25
वर्णावगतेः ।

बुद्धिर्वाच्यं वाचकं चोल्लिखन्ती
रूपं नात्मीयं बोधभावं जहाति ॥

पश्यन्तीति तु निर्विकल्पकमतेर्नामान्तरं कल्पितं
विज्ञानस्य हि न प्रकाशवपुषो वाग्रूपता शाश्वती ।
5 जातेऽस्मिन् विषयावभासिनि ततः स्याद् वावमर्शो गिरो
न स्याद् वापि न जातु वाग्विरहितो बोधो जडत्वं स्पृशेत् ॥

**स्फोटवादनिराकरणोपसंहारः**

तदास्तामियं ब्रह्मचर्चा, प्रकृतमनुसरामः

इति विततया वर्णा एते धिया विषयीकृतां
10 दधति पदतां वाक्यत्वं वा त एव च वाचकाः ।
न च तदपरः स्फोटः श्रोत्रे विभात्यवबोधने
न च विधिहतो वाच्ये बुद्धिं विधातुमसौ क्षमः ॥

**पदार्थानां वाक्यार्थप्रत्यायकत्वम्**

एवं स्फोटे प्रतिहते वर्णेषु वाचकेषु स्थितेषु कश्चिदाह बाढं वर्णेभ्यः पदार्थ-
15 प्रतीतिरस्तु, वाक्यार्थप्रतीतौ न तेषां सामर्थ्यम् । कुतस्तर्हि वाक्यार्थावगतिः ? पदार्थेभ्य इत्याह । तथा च वर्णानां पदार्थप्रतिपत्तौ चरितार्थत्वान्न वाक्यार्थेऽपि सामर्थ्यम् । अपरिग्लानसामर्थ्यास्तु पदार्था आसते, ते वाक्यार्थबुद्धेर्विधातारः । अर्थापत्त्या हि वर्णानां कार्येषु शक्तयः कल्प्यन्ते, तत्र पदार्थबुद्धेरन्यथानुप-पन्नत्वाद् यथोक्तनीत्या वर्णानां तत्प्रतिपादने शक्तिरवगम्यते । वाक्यार्थप्रतीतिः

---

20 **बुद्धिर्वाच्यं वाचकं वेति** । घटमहं प्रतिपादयामीति वाच्यमुल्लिखन्ती, घटशब्द-मुच्चारयामीति तु वाचकमुल्लिखन्ती । **न प्रकाशवपुषो वाग्रूपता शाश्वती** । नैव काचित् सम्भवतीत्यर्थः । तदेवाह—**जातेऽस्मिन्निति** ।

**इति विततयेति** । क्रमोपलब्धवर्णविषयया सङ्कलनारूपवितततया । **न च विधिहत इति** । विधिना दैवेन हतो यथा सकलसदुपलम्भकप्रमाणाविषयस्तद्वद य
25 इत्यर्थः । बहुना वा क्लेशेन तस्य निराकरणादाक्रोशः ।

पुनरन्यथाप्युपपद्यमाना न तत्र तेषां शक्तिमुपकल्पयितुमर्हति ।

किञ्च, किमेकमेव संस्कारमादधाना वर्णाः पदार्थञ्च वाक्यार्थञ्च बोधयन्ति, भिन्नं वा ? तत्र च

एकयैव हि संस्कृत्या कथं कार्यद्वयं भवेत् ।
न चैषां पूर्वसंस्कारादन्योऽस्तीति प्रतीयते ॥ 5

वाक्यार्थप्रतीतेरन्यथापि भावान्न नानासंस्कारकल्पनाबीजमस्ति । अपि च पदेषु पूर्ववर्णेषु नातिदूरमतिक्रान्तेषु बुद्ध्योपसंहर्तुं शक्येषु घटमानमन्त्यवर्णवेलायामनुसन्धानम्, वाक्येषु पुनरतिचिरतरतिरोहिताक्षरपरम्परानुसन्धानमतिक्लिष्टमदृष्टपूर्वमिति दुर्घटमेतत् । व्यवहितपदोच्चारणे तु दृश्यते वाक्यार्थप्रतीतिः, यत्र पूर्ववर्णानुसन्धानगन्धोऽपि नास्ति । तस्मान्न वर्णा 10 वाक्यार्थबुद्धिहेतवः । अपि च पदार्थं वाक्यार्थञ्च प्रतिपादयन्तो वर्णा युगपत् प्रतिपादयेयुः, क्रमेण वा ? तत्र सकृदुच्चारितानां युगपदुभयकरणमनुपपन्नम्, अशक्यत्वात् । क्रमपक्षेऽपि पूर्वं चेद् वाक्यर्थप्रतिपादनम्, तदयुक्तम्, अनवगतपदार्थस्य वाक्यार्थप्रत्ययादर्शनात् ।

अथ पूर्वं पदार्थप्रतिपादनं ततो वाक्यार्थप्रत्यायनम्; हन्त तर्हि पदार्थ- 15 प्रत्ययादेव वाक्यार्थबुद्धेः सिद्धत्वात् किमिति पुनर्व्यापारान्तरे श्रम आश्रीयते ? तस्मात् पदार्थप्रतिपादनपर्यवसितसामर्थ्यानि पदानि, पदार्थेभ्यस्तु वाक्यार्थप्रत्यय इति सिद्धम् ।

अपि चान्वयव्यतिरेकाभ्यामेवमवगम्यते 'यत् पदार्थपूर्वको वाक्यार्थः' इति । यो हि मानसादपचाराच्छ्रुतेष्वपि पदेषु पदार्थान्नावगच्छति, नाव- 20 गच्छत्येव वाक्यार्थम् । यस्तु अश्रुतेष्वपि पदेषु प्रमाणान्तरतः पदार्थान् जानीयात्, जानातीवासौ वाक्यार्थम् ।

---

अन्यथाप्युपपद्यमाना पदार्थेभ्योऽपि ।

एकमेव संस्कारमिति । पूर्ववर्णजनितसंस्कारः । पूर्ववर्णैर्यो जनितः संस्कारः 25 स एव किमुभयं करोतीति ।

पश्यतः श्वेतिमारूपं हेषाशब्दञ्च शृण्वतः ।
खुरविक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीः ॥
दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित् ॥ इति ।

तदेषा वाक्यार्थबुद्धिः पदार्थप्रतीतिं न व्यभिचरति, व्यभिचरति तु 5 पदप्रतीतिमिति न तत्कार्या भवितुमर्हतीति ।

यदप्युच्यते, प्रत्येकं व्यभिचारात् समुदितानामसाधारण्यात्, न पदार्थानां वाक्यार्थावगतिहेतुत्वमिति, तदप्ययुक्तम् । प्रत्येकं तावद् गमकत्वं नेष्यत एव, समुदितानां त्वसाधारण्यं भवदपि न नः क्षतिकरम् । न ह्येते लिङ्गवत् सम्बन्धग्रहणमपेक्षमाणा अवबोधका यदसाधारण्यं नावकल्पेत, किन्त्वगृहीतसम्बन्धा 10 अपि आकाङ्क्षासन्निधियोग्यतापर्यालोचनया परस्परं संसृज्यन्ते । स एव वाक्यार्थः । संसृष्टः पदार्थः समुदायः, इतरविशिष्टो वेतर इति । नाप्यशाब्दत्वमित्थं वाक्यार्थप्रतीतेराशङ्कनीयम्, शब्दावगतिमूलत्वेन तस्याः शाब्दत्वात् । शब्दात् पदार्थप्रतिपत्तौ वाक्यार्थप्रतिपत्तिरिति सर्वमनवद्यम् । तदुक्तम्, 'पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि, अथेदानीमवगताः पदार्था 15 एव वाक्यार्थमवगमयन्ति' इति ।

**तन्मतखण्डनम्**

अत्राभिधीयते, न पदार्थेभ्यो वाक्यार्थावगतिरपि तु वाक्यादेव । तथा चायं वाक्यार्थं इति प्रसिद्धो न पदार्थार्थः । यथा हि काल्पनिकवर्णसमूहात्मकं पदं पदार्थप्रतिपत्तिमादधाति तथा काल्पनिकपदसमूहात्मकं वाक्यं वाक्यार्थ- 20 प्रतिपत्तिमाधास्यति ।

ननु पदसमूहात्मकं वाक्यमन्यन्नास्ति किन्तु पदान्येव वाक्यम्, पदानाञ्च स्वार्थे चरितार्थत्वान्न वाक्यार्थसामर्थ्यमित्युक्तम् । नैतद्युक्तम्, पदार्थानामपि चरितार्थत्वात् । क्व तेषां चरितार्थत्वम् ? स्वप्रतिपत्तौ ।

---

**संसृष्टः पदार्थः समुदाय** इति संसर्गवाक्यार्थपक्षे । **इतरविशिष्टो वेतर इति** 25 भेदवाक्यार्थवादिमते ।

ननु पदानि स्वप्रतिपत्तौ चरितार्थीभूय पदार्थप्रतिपत्तिमादधति, पुनस्तान्येव कथं वाक्यार्थप्रतिपत्तिमाधास्यन्ति ? पदार्थास्तु स्वावगतेरूर्ध्वं न क्वचित् परत्र चरितार्था इति वाक्यार्थबुद्धेर्विधातारो भवन्तु। नैतदेवम्, अन्त्यपदस्यान्यत्र चरितार्थत्वाभावात्। अन्त्यपदमेव पूर्वपदस्मरणोपकृतं वाक्यमुच्यते। तदर्थश्च पूर्वपदार्थविशिष्टो वाक्यार्थ इत्येके। तस्माद् वाक्यादेव वाक्यार्थप्रत्ययः। 5

यत्तु किमेकसंस्कारस्मरणेन कार्यद्वयं पदानि विदधति, विभिन्नसंस्कारेण वेति, कार्यभेदात् कारणभेदानुमानमिति प्रसिद्ध एष पन्थाः। एकोऽप्यतीन्द्रियः संस्कारः कार्यात् कल्प्यते, बहवोऽपि तत एव कल्पयिष्यन्ते, कार्यस्य भिन्नत्वात्। 10

यदपि चिरतिरोहितवर्णप्रबन्धानुसन्धानं दुर्घटमिति कथितम्, तदपि न चारु। कयाचित् कल्पनया वर्णानामिव पदबुद्धौ पदानामपि वाक्यबुद्धावुपारोहसम्भवात्। एतच्चानन्तरं दर्शयिष्यते।

यदपि विकल्पितं युगपद् वा क्रमेण वा वर्णाः पदवाक्यार्थप्रत्यये व्याप्रियेरन्निति, तत्राप्युच्यते। यौगपद्यं तावदनभ्युपगमादेव प्रत्युक्तम्। क्रमोऽप्येषामीदृशो यत् प्रथमं पदार्थमवगमयन्ति ततो वाक्यार्थम्। सोऽयं हि पदार्थपूर्वक एव वाक्यार्थ उक्तो भवतीति चेत्, मैवम्। पदार्थो हि नाम प्रमेयमेव न ते प्रमाणवर्गे निपतन्ति। न च पदार्थवाक्यार्थयोरत्यन्तं भेदो येन तयोर्धूमाग्न्योरिव सम्बन्धग्रहणसापेक्षयोस्तदनपेक्षयोर्वा रूपदीपयोरिव प्रत्याय्यप्रत्यायकभावः। न हि स्वशरीर एव गम्यगमकवाचोयुक्तिः प्रवर्तते। कथं भवान् स्वभावहेतुवादिनो बौद्धस्य शिष्य इव निर्वृत्तः। 15 20

ननु सामान्ये हि पदं वर्तते विशेषे च वाक्यम्, अन्यच्च सामान्यमन्ये च

---

**अन्त्यपदस्यान्यत्राचरितार्थत्वादिति।** अन्त्यपदज्ञानोत्तरकालं हि न पृथगन्त्यपदार्थप्रतिपत्तिरस्ति तस्यैव वाक्यार्थत्वादिति।

**कथं भवानित्यादिना** भट्टमुपालभते—**स्वभावहेतुवादिन इति।** स ह्यभिन्नयोरेव भागयोर्गम्यगमकभावमाह। 25

विशेषाः । यदुक्तम्, "सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि" इति व्यतिरेक एव प्रत्याय्यप्रत्यायकयोः । उच्यते, बाढम्, अस्त्ययमियान् व्यतिरेकः, किन्तु विरतव्यापारे चक्षुषीव शब्दे धूमादिवत् प्रमेयात् पदार्थादग्नेरिव वाक्यार्थस्यावगमो नास्ति । न हि पदार्थाः प्रमेयीभूतधूमवत् पुनः प्रमाणी-
5 भवितुमर्हन्ति, किन्तु पदान्येव तत्प्रतिपादनद्वारेण वाक्यार्थप्रतिपत्तौ पर्यवस्यन्ति । कथमात्मीयमेव ग्रन्थं न बुध्यन्ते भवन्तः ?

वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ।। इति ।

अवान्तरव्यापारो हि न कारकस्य प्रधाने व्यापारे कारकतां व्याहन्ति ।
10 पदानां हि द्वयी शक्तिरभिधात्री तात्पर्यशक्तिश्च । तत्राभिधात्री शक्तिरेषां पदार्थेषूपयुक्ता, तात्पर्यशक्तिश्च वाक्यार्थे पर्यवस्यतीति ।

यद्यपि पदानि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि, तथापि यदर्थ-पराणि तत्रानिवृत्तव्यापाराण्येवेति । एवं हि शाब्दता वाक्यार्थप्रत्ययस्य न हास्यते । सर्वात्मना तु विरतव्यापारे शब्दे सा अवश्यं हीयते । शब्दावगति-
15 मूलत्वात्तु शाब्दत्वे श्रौत्रत्वमपि स्यात्, श्रोत्रस्य पारम्पर्येण मूलत्वात् । शब्दे विरतव्यापारे कतमत् तत्प्रमाणं यस्य वाक्यार्थप्रतीतिः फलमिति न विद्मः । न प्रत्यक्षम्, अतीन्द्रियत्वाद् वाक्यार्थस्य, नानुमानम् 'न चानुमानमेषा धीः' इत्यादिना ग्रन्थविस्तरेण स्वयमेव निरस्तत्वाद् । न शब्दो निवृत्त-

---

**सामान्यान्यन्यथासिद्धेर्विशेषरहितानि सामान्यान्यथासिद्ध्यन्ति विशेषमाक्षि-**
20 **पन्तीति अर्थः ।**

**न चानुमानमेषा धीरिति ।**

न चानुमानमेषा धीस्तन्मात्रेण प्रसज्यते ।
प्रतिज्ञार्थैकदेशत्वात् पदार्थानां ह्यलिङ्गता ॥
पदार्थैरनुरक्तो हि वाक्यार्थः सम्प्रतीयते ।
25 नात्मना गमयन्त्येनं विना धूमोऽग्निमत्त्ववत् ॥
पक्षधर्मत्वमेतेषां वाक्यार्थे च न गम्यते ।
न हि देशादिवत् पूर्वं निष्पन्नः सम्प्रतीयते ॥

व्यापारत्वात्, "सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि" इति न्यायाद् । अर्थापत्तिरिति चेत्, किमिदानीमर्थापत्तिगम्यो धर्मः ? न चैतद् युक्तमिष्टं वा । तदिदं सप्तमं प्रमाणमवतरति पदार्था नामेति, तच्च नेष्टम् । अतो न पदार्थ-निमित्तको वाक्यार्थप्रत्ययः ।

यदप्युक्तम्, अन्वयव्यतिरेकाभ्यां पदार्थनिमित्तकत्वं वाक्यार्थस्याव-गम्यत इति तत्र पदार्थसंसर्गस्वभावत्वाद् वाक्यार्थस्य । सत्यम्, तत्पूर्वकत्व-मिष्यत एव, वाक्यप्रतिपत्तेस्तु न तज्जन्यत्वम्, शब्दव्यापारानुपरमात् । मानसे चापचारे सति पदानामपि ग्रहणं नास्त्येव, यतः क्षणान्तरे समाहितचेताः स वक्ति 'नाहमेतदश्रौषमन्यत्र मे मनोऽभूत् पुनर्ब्रूहि' इति । इतरथा हि पदानि स्मृत्वा तदर्थमेवावगच्छेन्न पुनः पृच्छेत् । तस्मात् पदार्थानां ग्रहणमेव तत्र वाक्यार्थावगमे निमित्तम् ।

यदपि पश्यतः श्वेतिमारूपमिति तदपि न किञ्चित् । किं प्रत्यक्षेण शुक्लो गौर्गच्छन्न दृश्यते ? स किं शुक्लो गौर्गच्छतीति वाक्यास्यार्थो न भवति ? प्रत्यक्षप्रतिभासात्तु प्रत्यक्षार्थ एवासौ न वाक्यार्थ इत्युच्यते । एवं श्वेतोऽश्वो धावति इति आनुमानिकोऽयं प्रत्ययः पर्वतेऽग्निरितिवत् । वाक्यश्रवणात्तु विना न वाक्यार्थो भवितुमर्हतीत्यलं प्रसङ्गेन ।

**वाक्यादेव वाक्यार्थबोधः**

तस्माद् वर्णेभ्य एव कयाचित् कल्पनया पदवाक्यभावमुपगतेभ्यः पदार्थ-वाक्यार्थसम्प्रत्यय इति युक्तम् । तस्मात् पदार्थजन्या न भवति वाक्यार्थबुद्धि-रिति सिद्धम् । अनुपरतव्यापाराद् वाक्यादेवेयमुद्भवति ।

---

असत्त्वभूतमेनं हि प्रतिपद्यामहे ततः । इत्यादिना ।

**किमिदानीमर्थापत्तिगम्यो धर्म** इति । धर्मस्य वाक्यार्थत्वाद् भवन्मते स च प्रमाणान्तरागोचरः शब्दैकप्रमाणगम्य इति यूयं स्थिताः ।

**आनुमानिकोऽयं प्रत्यय** इति । श्वेतरूपदर्शनादीनामश्वतद्भावभावित्वेनासकृद्-दर्शनात् ।

**वर्णानां पदत्ववाक्यत्वज्ञानप्रकारः**

आह, कया पुनः कल्पनया पदवाक्यभावमुपगता वर्णाः पदार्थवाक्यार्थ-प्रतीतिमादध्युरिति ।

तत्राचार्यास्तावदिमां कल्पनामदीदृशन् । प्रथमं वर्णज्ञानं ततः संस्कार-
5 स्ततो द्वितीयवर्णज्ञानं तेन प्रथमवर्णज्ञानजनितेन च संस्कारेण पटुतरः संस्कारस्ततस्तृतीयवर्णज्ञानं तेन प्राक्तनेन संस्कारेण पटुतरः संस्कारः, एवं यावदन्त्यवर्णज्ञानम्, अन्त्यवर्णज्ञानानन्तरन्तु ततः संस्कारात् सकलपूर्ववर्ण-विषयमेकस्मरणं तेनांन्त्यवर्णज्ञानस्य विनश्यत्ता विनश्यदवस्थग्रहणस्मरण-विषयीकृतो वर्णसमूहः पदमिति ज्ञायते । ततः पदज्ञानात् संस्कारस्ततस्तथैव
10 वर्णक्रमेण द्वितीयपदज्ञानं तेन प्रथमपदज्ञानजन्मना च संस्कारेण पटुतरः संस्कारो जन्यते पुनस्तेनैव क्रमेण तृतीयपदज्ञानं तेन प्राक्तनेन च संस्कारेण पीवरतरः संस्कारो जन्यते, एवं यावदन्त्यपदज्ञानमन्तरेण स्थवीयसा संस्कारेण सर्वपदविषयमेकस्मरणमुपजन्यते, संस्कारस्यैवैकत्वात् । सोऽयं स्मरणानुभव-विषयीकृतवर्णसमूहपदसमूहो वाक्यमित्युच्यते । ततो वाक्यार्थप्रतिपत्तिः ।
15 संस्कारस्य च संस्कारान्तरकरणकौशलमवश्यमेषितव्यम्, अन्यथा सर्वत्र क्रियाभ्यासोऽनर्थकः स्यादिति ।

**तन्मतखण्डनम्**

अत्र वदन्ति, नेयं प्रक्रिया साध्वी, ज्ञानयौगपद्यप्रसङ्गात् । तथा हि चरमपदप्रतिभासानन्तरं यथा पूर्वपदस्मरणं तथा तदैव सङ्केतस्मरणेनापि
20 भवितव्यम् । अनवगतपदार्थस्य हि न वाक्यार्थप्रतीतिः, अस्मृतसङ्केतस्य च न पदार्थप्रतीतिः । यत्राप्यभ्यस्ते विषये सङ्केतस्मृतिर्न संवेद्यते तत्राप्यविना-भावस्मृतिरिव बलादसौ कल्प्यते, अनवगतपदपदार्थसम्बन्धस्य नारिकेलद्वीप-वासिन इव अर्थप्रत्ययाभावात् । सम्बन्धानुभवस्य च पूर्ववृत्तत्वेनेदानीं स्मरण-मुखेनोपकारित्वात् । तस्मादन्त्यपदज्ञानानन्तरं पूर्वपदसमयस्मरणयोर्युगपदुत्पा-
25 दाज्ज्ञानयौगपद्यम् ।

अथ समयस्मरणानन्तरं पूर्वपदस्मरणमुपेयते तथा तत्स्मृतिकाले पदार्थ-ज्ञानोपजनात् पुनरपि ज्ञानयौगपद्यम् । न च तदा पदार्थज्ञानं नोदेतीति शक्यते वक्तुम्, अविकलतदुपजनकारणसामग्रीसन्निधानात्, प्रतिनायकस्य च तदानी-मभावात् । पदार्थज्ञानोत्तरकालं तर्हि पूर्वपदस्मरणमस्त्विति चेत्, एवं तर्हि चरमपदज्ञानप्रत्यस्तमयादन्त्यपदरहितं वाक्यं स्यात्, अन्त्यपदज्ञानस्य हि सङ्केत- 5
स्मृतिवेलायां विनश्यत्ता, पदार्थज्ञानवेलायां विनाश एव ।

यत्तु ब्रूयादसंवेद्यमानमपि तदानीमन्त्यपदमस्त्येवेति, स्वस्ति तर्हि न्याय-विस्तराय । अपि च तदानीमनुपलभ्यमानेनापि सता किमन्त्यपदेन क्रियते ? पुनरवगमोऽस्य भविष्यतीति चेत् ? स कुतस्त्यः । श्रोत्रस्य विरम्य व्यापारा-संवेदनात् । मनसश्च स्वातन्त्र्येण बाह्ये विषये सामर्थ्यासम्भवात् । सत्यपि 10
वा पुनस्तदवगमे ज्ञानयौगपद्यानपायात् ।

अपि च पूर्वपदैरर्थशून्यतया शुष्कनीरसतनुभिरन्त्यपदानुभवसमनन्तरं स्मृतैरपि को गुणः ? न हि तथाविधपदस्मरणमर्थप्रत्यायनाङ्गम् । अथ सार्थकानि प्राञ्चि पदानि स्मर्यन्ते ? तर्हि समयस्मरणपदार्थज्ञानादिकार्यसाङ्कर्य-कृतम् अनेकशाखं प्रतिपदं ज्ञानयौगपद्यमापद्यत इत्यसतीयं कल्पना । 15

**व्याख्यातृमते वर्णानां पदत्ववाक्यत्वप्राप्तिप्रकारः**

व्याख्यातारस्तु प्रक्रियान्तरमाचचक्षुः । वर्णानुगमरूपेण तावत् प्रथमपद-

---

**तत्स्मृतिकाले पदार्थज्ञानोपजनादिति ।** अविकलकारणस्यानुत्पत्तौ हेत्वभावात्, तस्य ह्युत्पत्तौ सङ्केतस्मरणोपकृतं पदज्ञानमविकलं कारणमिति ।

**स्वस्ति तर्हि न्यायविस्तरायेति ।** न्यायविस्तरो न्यायशास्त्रम्, तद्धि शब्दा- 20
नित्यत्वप्रतिपादनाय, आप्तोक्तत्वेन वेदप्रामाण्यसमर्थनात्; असंवेद्यमानस्य चास्तित्वे सामान्यादिवन्नित्यत्वापत्तिः । **सत्यपि वा पुनः तदवगम इति ।** पदज्ञानानन्तरपूर्वपद-सङ्केतस्मरणयोरवश्यमुत्पादात् ।

**अथ सार्थकानि स्मर्यन्ते तर्हि समयस्मरणेति ।** पदज्ञानानन्तरं हि यदैव सङ्केतस्मरणं तदैव पदार्थज्ञानमपि प्राप्नोति, सङ्केतस्मरणोत्तरकालन्तु तदभ्युपग- 25
मेऽन्त्यपदनीत्या पदज्ञानस्य विनाशात् पदशून्यः पदार्थप्रत्ययः स्यादिति समयस्मरणपदार्थ-ज्ञानयोः साङ्कर्यं युगपदुत्पत्तिः ।

ज्ञानमुत्पद्यते ततः सङ्केतस्मरणं तेन विनश्यदवस्थेन पदज्ञानेन स्वविषयावच्छेदेन पदार्थज्ञानमाधीयते यत्र वाचकावच्छिन्नं वाच्यस्वरूपमवभासते। तथाविधपदार्थज्ञानात् संस्कारस्ततस्तथैव क्रमेण द्वितीयपदज्ञानं तदनु समयस्मरणं तेन विनश्यदवस्थेन च द्वितीयपदज्ञानेन तथैव स्वावच्छेदेन
5 स्वार्थज्ञानं तेन प्रथमपदार्थज्ञानाहितेन संस्कारेण च दृढतरः संस्कारः। पुनर्वर्णक्रमेण तृतीयपदज्ञानं पुनः सङ्केतस्मरणं सङ्केतस्मृतिसहायेन तेन विनश्यदवस्थेन स्वार्थेनैव स्वावच्छिन्नं ज्ञानं तेन प्राच्येन च संस्कारेण दृढतरः संस्कारः। एवं तावद् यावदन्त्यपदज्ञानात् स्वावच्छिन्नार्थप्रतीतिः। ततः पूर्वोपचितान्महतः संस्काराद् विशिष्टसर्वविषयमेकस्मरणं यस्य स्वाव-
10 च्छिन्नाः सर्वे पूर्वपदार्था विषयतां प्रतिपद्यन्ते। तस्मिन् स्मरणे तथान्त्यपदार्थज्ञानेऽवच्छेदकत्वेन प्रस्फुरत्पदसमूहो वाक्यम्, अवच्छेद्यत्वेन प्रकाशमानोऽर्थसमूहो वाक्यार्थः। एवं स्मर्यमाणानुभूयमानौ पदपदार्थसमूहौ वाक्यवाक्यार्थावुक्तौ भवतः।

**तन्मतखण्डनम्**

15 एतदपि न विचारक्षमम्। अन्त्यपदार्थप्रतीतिसमये तदवच्छेदकतया प्रतिभासमानं पदं तत्प्रतीतौ तावत् कारणमिति नात्र विमतिः, स्वयञ्च प्रतिभासमानत्वात् कर्मापि भवत्येव। तस्य तदानीं कर्मत्वे कारणं चिन्त्यम्। न श्रोत्रं तावत् कारणम्, अन्त्यपदप्रतीत्यनन्तरमेव तद्व्यापारस्य विरतत्वात्, विरम्य च पुनर्व्याप्रियमाणत्वानुपपत्तेः। मनस्तु बाह्ये विषये स्वातन्त्र्येण
20 प्रवर्तितुमसमर्थम्। तत्प्रवृत्तौ सर्वाण्येव प्रथमपदात् प्रभृति पदानि मानसव्यवसायगोचरचारीणि भवन्तु, किं स्मर्यमाणत्वमन्येषामुच्यते?

अथ तदन्त्यपदमर्थ इवात्मन्यपि तदवच्छेदकत्वप्रतिपत्तेः करणत्वं प्रतिपत्स्यत इति मन्यसे, तदयुक्तम्, स्वप्रतीतौ तस्य कर्मत्वात्। न चैकस्यामेव

---

**स्वविषयावच्छेदेन पदार्थज्ञानमिति।** गोशब्दाद्धि गोशब्दवाच्यत्वेन सास्नादि-
25 मानर्थोऽवगम्यते न केवलं सास्नादिमत्त्वेन। **तस्मिन् स्मरणे तथान्त्यपदार्थज्ञान** इति। अन्त्यपदार्थज्ञानस्यापि वाचकावच्छेदेनैवोत्पत्तेः।

क्रियायां तदेव कर्म करणञ्च भवितुमर्हति, विस्तरतश्चायं वाचकावच्छिन्न-वाच्यप्रतिभासः प्रत्यक्षलक्षणे प्रतिक्षिप्त इत्यलं पुनस्तद्विमर्देन ।

**मतान्तरेण वाक्याद् वाक्यार्थबोधः**

आह, प्रथमं पदज्ञानं ततः सङ्केतस्मरणं ततः पदार्थज्ञानं पदार्थज्ञानात् पदज्ञानस्य विनश्यत्ता विनश्यदवस्थपदज्ञानमपेक्षमाणं श्रोत्रं प्रथमपदावच्छेदेन द्वितीयपदे ज्ञानमादधाति । द्वितीयपदज्ञानानन्तरं पुनः सम्बन्धस्मरणं ततः पदार्थज्ञानम् । तेन द्वितीयपदज्ञानस्य विनश्यत्ता विनश्यदवस्थपदज्ञानसहायाच्छ्रोत्रात् तथैव तदवच्छेदेनोत्तरोत्तरपदज्ञानं तावद् यावदन्त्यपदज्ञानमिति । तज्ज्ञानानन्तरञ्च प्राक्तनप्रक्रियावन्नात्र पूर्वपदस्मरण-मुपयुज्यते, तत्फलस्य च विनाशदशापतितपदज्ञानकृतावच्छेदमहिम्नैव सिद्ध-त्वात् । तस्य हि फलमन्त्यपदावगमसमये सकलपूर्वपदोपस्थानम्, तच्च विनश्यदवस्थपूर्वपूर्वपदज्ञानकृतोत्तरोत्तरपदानुरागबलादेव लब्धमिति किं तत्तत्स्मरणेन ? तदभावाच्च नात्र ज्ञानयौगपद्यादिचोद्यावसरः समस्ति । यथोपदर्शितान्त्यपदज्ञानमेव च वाक्यार्थज्ञानमिति न चरितार्थत्वमत्र । इत्येवं वाक्यादेव वाक्यार्थप्रत्ययः सेत्स्यति पदार्थेभ्य इति ।

**तन्मतखण्डनम्**

इयमपि न निरवद्या कल्पनेत्यपरे । प्रथमपदोपरागपूर्वकद्वितीयपद-ज्ञानोपजननानुपपत्तेः । प्रथमपदज्ञानानन्तरं सम्बन्धस्मरणं तेनैव तस्य विनश्यत्ता पदार्थप्रतिपत्तिकाले च पदज्ञानं विनष्टमेव, विनश्यदवस्था बुद्धि-र्बुद्ध्यन्तरविरोधिनीति सामान्येन श्रवणात् ।

अथ ब्रूयात्, कार्यभूतया बुद्ध्या कारणभूता बुद्धिर्विरोध्येत, न बुद्धिमात्रेण बुद्धिमात्रमिति, एतदयुक्तम् । विशेषे प्रमाणाभावात् । अभ्युपगम्यापि ब्रूमः, कार्यकारणभूतयोरेव बुद्ध्योर्भवतु वध्यविघातकभावः, तथापि पदज्ञानं संस्कार इव समयस्मृतेः कारणमेव, संस्कारेणेव तेनापि विना तदनुत्पादात् ।

---

न बुद्धिमात्रेण बुद्धिमात्रमिति । सङ्केतस्मरणं हि संस्कारकार्यम्, न पदज्ञान-कार्यमिति मन्यते ।

संस्कारप्रबोधे तस्य व्यापार इति चेत्, तेनापि द्वारेण यत् कारणं तत् कारणमेव। तदिह पदज्ञानं समयस्मरणं पदार्थज्ञानमिति त्रीणि ज्ञानानि युगपदवतिष्ठन्त इति परः प्रमादः।

अपि च पदज्ञानमुपजायमानं वर्णक्रमेण जायते न सहसैव, निरंशपद-
5 वादस्य व्युदस्तत्वात्। तत्र च द्वित्राणि त्रिचतुराणि पञ्चषाणि वाक्षराणि क्रमेण ग्रहीष्यन्ते, तद्विषया हि क्रमभाविन्य उपजननापायधर्मिका बुद्धयः। अत्रान्तरे विनश्यदवस्थमन्त्यपदज्ञानमासिष्यते तदुपरागेण द्वितीयपदज्ञान-मुपपत्स्यत इति दुराशैवेयम्।

अपि च व्यवहितोच्चारितेभ्योऽपि पदेभ्यो वाक्यार्थप्रत्ययो दृश्यते।
10 यत्रानेककार्यपर्यालोचनव्यग्रहृदयः स्वामी 'रे कन्दलक' इत्युक्त्वा कार्यान्तरं संविधाय 'तुरगम्' वदति, पुनः प्रयोजनान्तराय व्यवहृत्य 'कल्पितपर्याणम्' इत्यपि वक्ति, पुनरन्यत् किमपि कृत्वा ब्रवीति 'आनय' इति। तत्र 'रे कन्दलक कल्पितपर्याणमश्वमानय' इति वाक्यार्थावगमो भवति। भवन्मते चासौ दुरुपपादः, पदानुरागस्य तत्रासम्भवात्, सर्वपदस्मरणस्य चानभ्युपगमात्।

15 किञ्च, न प्रवरमतानुसारिणामिव सम्बन्धविशेषबुद्धिषु विशेषणविशेष्ये द्वे वस्तुनी आलम्बनम्, अपि तु विशेष्यमात्रम्, उपायभेदादेव प्रतीत्यतिशय इति। तस्मिंश्च सत्यपि पूर्वपदानुरागे तत्प्रतिभासाभावात् शुद्धमेव द्वितीयपदज्ञानं सम्पन्नमिति किं तदनुरागेण? अतश्चेयमनुपपन्ना कल्पना, यतो द्वितीय-पदस्य स्वार्थे शुद्धमेव सङ्केतग्रहणं वृत्तं यदा क्वचित् प्रथमं प्रयुक्तमासीत्,
20 अधुना तु तत्पदं पदान्तरोपरक्तं सञ्जातमिति तथाविधस्य गृहीतत्वादर्थ-प्रतिपत्तिहेतुत्वं न स्यादित्यास्तामपूर्वमिदं शङ्करस्वामिनः पाण्डित्यम्।

---

त्रीणि ज्ञानानि युगपदवतिष्ठन्त इति। पदज्ञानस्य तावद् विनश्यदवस्थस्य त्वयैव सत्ताभ्युपगता, सङ्केतस्मरणस्य च पदार्थज्ञानोत्तरकालं विनाशादिति।

सत्यपि पूर्वपदानुराग इति। यथाचार्यमतव्याख्यानावसरेऽव्यपदेश्यपदे
25 दण्डीत्यादीनां शुद्धपुरुषालम्बनत्वं प्रतिपादितमिति। तथाविधस्य गृहीतत्वादिति। अतस्तादृशस्य ज्ञानात् सङ्केतस्मरणानुपपत्तिः। शङ्करस्वामी न्यायभाष्यटीकाकृत्।

**स्वमतेन वाक्यार्थबोधप्रकारः**

आह, यदि इमाः सर्वा एव तान्त्रिकरचिताः कल्पना न साधीयस्यश्चेत्, आत्मीया काचन निर्दोषा साध्वी कल्पना निवेद्यताम्। उच्यते, न वयमात्मीयामभिनवां कामपि कल्पनामुत्पादयितुं क्षमाः

न हीयं कविभिः पूर्वैरदृष्टं सूक्ष्मदर्शिभिः।
शक्ता तृणमपि द्रष्टुं मतिर्मम तपस्विनी ।।
कस्तर्हि विद्वन् मतितर्कणीयग्रन्थोपबन्धे तव दोहदोऽयम् ।
न दोहदः पर्यनुयोगभूमिः परोपदेशश्च न तस्य शान्तिः ।।
राज्ञा तु गह्वरेऽस्मिन्नशब्दके बन्धने विनिहितोऽहम् ।
ग्रन्थरचनाविनोदादिह हि मया वासरा गमिताः ।।

तथापि वक्तव्यं कथं वर्णेभ्यो वाक्यार्थप्रतीतिरिति । उच्यते, चिरातिक्रान्तत्वमचिरातिक्रान्तत्वं वा न स्मृतिकारणम् । संस्कारकरणकं हि स्मरणं भवति । तच्च सद्यः प्रलीने चिरप्रलीने वा न विशिष्यत इति । एवं पूर्वेषां पदानां चिरतिरोहितानामपि व्यवहितोच्चारितानामपि संस्कारात् स्मरणं भविष्यति। अन्त्यपदस्यानुभूयमानत्वोपगमे ज्ञानयौगपद्यादिप्रमादप्रसङ्ग इति वरमन्त्यपदमपि स्मर्यमाणमस्तु, स्मृत्यारूढान्येव सर्वपदानि वाक्यार्थमवगमयिष्यन्ति । तत्र चेयं कल्पना, वर्णक्रमेण तावत् प्रथमपदज्ञानं ततः सङ्केतस्मरणं संस्कारश्च युगपद् भवतः, ज्ञानयोर्हि यौगपद्यं शास्त्रे प्रतिषिद्धं न संस्कारज्ञानयोः । ततः पदार्थज्ञानं तेनापि संस्कारः पुनर्वर्णक्रमेण द्वितीयपदज्ञानं ततः सङ्केतस्मरणं पूर्वसंस्कारसहितेन च तेन पटुतरः संस्कारः पुनः पूर्ववर्णक्रमेण तृतीयपदज्ञानं सङ्केतस्मरणं पूर्वसंस्कारापेक्षः पटुतरः संस्कार इत्येवं पदज्ञानजनिते पीवरे संस्कारे पदार्थज्ञानजनिते च तादृशि संस्कारे स्थितेऽन्त्यपदार्थज्ञानानन्तरं पदसंस्कारात् सर्वपदविषयस्मृतिः, पदार्थसंस्काराच्च पदार्थविषया स्मृतिरिति संस्कारक्रमात् क्रमेण द्वे स्मृती भवतः,

---

**राज्ञा तु गह्वरेऽस्मिन्निति। कश्मीरे क्वचित् खसदेशे चिरकालमरण्यान्यामसौ श्रीशङ्करवर्मणो राज्ञ आज्ञया स्थितवानिति वार्ता ।**

तत्रैकस्यां स्मृतावुपारूढः पदसमूहो वाक्यमितरस्यामुपारूढः पदार्थसमूहो वाक्यार्थः ।

ननु स्मृतेरप्रमाणत्वादप्रमाणमिदानीं वाक्यार्थप्रतिपत्तिः ? मैवम्, तथा सम्बन्धग्रहणात् । यत्र ह्यन्यथा सम्बन्धग्रहणमन्यथा च प्रतिपत्तिस्तत्रायं दोषः,
5 यथा धूमे गृहीतसम्बन्धे नीहाराद् दहनानुमितौ । इह तु क्रमवर्तिनां वर्णानामन्यथा प्रत्ययासम्भवाद् यथैव व्युत्पत्तिस्तथैव प्रतीतिरिति न किञ्चिद-वद्यम् । अचिरनिर्वृत्तानुभवसमनन्तरभाविनी च स्मृतिरनुभवायते ।

अथ वा कृतं स्मरणकल्पनया, अन्त्यपदार्थज्ञानानन्तरं सकलपदार्थविषयो मानसोऽनुव्यवसायः शतादिप्रत्ययस्थानीयो भविष्यति, तदुपारूढानि
10 पदानि वाक्यम् । तदुपारूढश्च पदार्थो वाक्यार्थः । तथाविधश्च मानसोऽनु-व्यवसायः सकललोकसाक्षित्वादप्रत्याख्येयः ।

नन्वन्त्यपदार्थज्ञानानन्तरं किं पूर्वपदतदर्थविषयेण स्मरणेन, अनुव्यव-सायेन वा ? अन्त्यपदार्थश्चेज्ज्ञातः समाप्तं कर्तव्यम् । किमन्यदवशिष्टं यद् व्यवसायेन स्मरणेन वा करिष्यते । एकाकारो हि वाक्यार्थप्रत्ययः प्रत्यात्म-
15 वेदनीयो न शक्योऽपह्नोतुम् । न चासौ स्मर्यमाणादनुव्यवसायाद् वा विना सम्पद्यत इत्यस्ति तदुपयोगः । इत्थं स्मर्यमाणारूढं सङ्कलनाज्ञानविषयीभूतं चेदं पदनिकुरुम्बं वाक्यं तथाविधश्चैष वाक्यार्थः ।

---

**यथैव व्युत्पत्तिरिति ।** स्मर्यमाणानामेव प्रत्याय्यप्रत्यायकत्वं सङ्केतग्रहणकाले गृहीतमिति ।

20 **किं पूर्वपदतदर्थविषयेणेति ।** अन्त्यपदार्थस्य पूर्वपदार्थान्वितस्यैव प्रतिभासना-दित्यन्विताभिधानाभिप्रायेण चोद्यम् । अथवा भट्टाभिप्रायेण **अन्त्यपदार्थश्चेज्ज्ञात**-स्तत् पदैर्यत् कर्तव्यं तत् कृतमेव । समाप्तः पदव्यापारः । पदव्यापारोत्पन्नपदार्थ-स्त्वाकाङ्क्षादिक्रमेणेतरपदार्थैः संसृज्यमानो वाक्यार्थतामासादयतीति **एकाकारो हि वाक्यवाक्यार्थप्रत्यय** इति । सङ्कलनाज्ञानेन विना भिन्नानां पदतदर्थानामेकाकार-
25 प्रत्ययजनकत्वासम्भवात् । भिन्ना ह्येकं किञ्चित् पूलीकारकं विना कथमभिन्नप्रतीति-विषयतामुपेयुः, वृक्षा इवैकदेशपूलीकृता वनप्रत्ययस्य ।

**पदार्थानां परस्परं सम्बन्धविचारोपक्रमः**

ननु मा भूत् पदस्फोटो वाक्यस्फोटश्च वाचकः ।
मा च भूतामिमौ वाक्यवाक्यार्थौ भागवर्जितौ ॥
भवन्तु भवदाख्याताः पदवाक्यादिकल्पनाः ।
पदार्थानान्तु संसर्गे मार्गः क इति कथ्यताम् ॥　　5

असंसृष्टा हि गौरश्वः पुरुषो हस्तीति पदार्था न वाक्यार्थभावमधिरोहन्ति । अन्त्यपदार्थज्ञानान्तरभाविना हि स्मरणेन वानुव्यवसायेन वा विषयीक्रियमाणास्ते यथावगता एव विषयीक्रियन्ते, संसर्गावगमस्तु कुतस्त्य इति चिन्त्यम् ।

**तेषां संसर्गज्ञाने शङ्का**　　10

उच्यते, अस्त्यत्र विवादः । केचिदाचक्षते अन्विता एव पदार्थाः पदैरभिधीयन्ते, अन्यथा पदानां वाक्यत्वायोगादिति ।

अन्ये मन्यन्ते शुद्धानामेव पदार्थानां पदैरभिधानम् । ते तु तथाभिहिताः सन्तः परस्परमाकाङ्क्षासन्निधियोग्यत्वपर्यालोचनया संसर्गमधिगमयन्तीति ।　　15

तत्रेदं विचार्यम् । व्युत्पत्तिर्बलीयसी, न शब्दोऽर्थमवगमयति व्युत्पत्तिमन्तरेण । व्युत्पत्तिश्च किं वाक्यस्य वाक्यार्थे पदस्य वा पदार्थे इति । यदि वाक्यस्य वाक्यार्थे व्युत्पत्तिस्तदन्विताभिधानम् । पदस्य पदार्थे व्युत्पत्तावभिहितान्वय इति ।

**वाक्यार्थबोधार्थमभिहितानामेवान्वयः**　　20

किं तावत् प्राप्तमभिहितान्वय इति, पदार्थप्रतिपत्तिपूर्वकत्वाद् वाक्यार्थप्रतिपत्तेः । न ह्यनवगतपदार्थस्य वाक्यार्थसम्प्रत्ययो दृश्यते । पदार्थप्रविभागाच्च गम्यतेऽस्य पदस्य जातिरर्थोऽस्य द्रव्यमस्य गुणोऽस्य क्रियेति । स चैवमवकल्पते

---

**अन्यथा पदानां वाक्यत्वायोगादिति** । वाक्यात् संसर्गस्य प्रतीतेः पदानां तदनभिधाने वाक्यत्वायोगः । न सर्वेषां वाक्यार्थे व्यापारः स्यात्, वाक्यार्थस्य संसर्गस्वभावत्वात् ।　　25

यदि तावत् सोऽर्थः पदैरभिधीयते । पदान्तरार्थोपरक्ते तु तस्मिन् अभिधीयमाने तदर्थेयत्तैव नावधार्यते, कदम्बाकारार्थप्रतीतेः । आवापोद्वापाभ्यां तदवधारणमिति चेत्, मैवम्; आवापोद्वापपरीक्षावसरेऽपि कदम्बप्रतीत्यनपायात् । न ह्येकमेव किञ्चिद् वाक्यमन्विताभिधायिपदग्रथितम्, अन्यत्र तु शुद्ध एव पदानामर्थः,
5 किन्तु सर्वत्र कदम्बकरूपादुपायात् कदम्बकरूपमुपेयं प्रतीयत इति दुरवगमः पदार्थविभागः । ततश्च पदार्थानामनपेक्षणे गामानयेति वाक्यादश्वबन्धननियोगः प्रतीयेत । अपेक्ष्यते तु पदानामर्थः, सोऽपेक्ष्यमाण इयानिति नियतोऽवधारयितव्यः । तदवधारणं शुद्धाभिधायिषु पदेष्ववकल्पते । तस्मात् पदपदार्थयोरौत्पत्तिकः सम्बन्ध इष्यते । वृद्धव्यवहारेषु च वाक्यादपि भवन्ती व्युत्पत्तिः
10 पदपर्यन्ता भवति । इतरथा हि प्रतिवाक्यं व्युत्पत्तिरपेक्ष्यते, सा चानन्त्याद् दुरुपपादेति शब्दव्यवहारोच्छेदः स्यात् । दृश्यते च पदार्थविदामभिनवकविश्लोकादपि वाक्यार्थप्रतीतिः । सा पदतदर्थव्युत्पत्त्यावकल्पते । वाक्यवाक्यार्थयोस्तु व्युत्पत्तावपेक्षमाणायां सा न स्यादेव, तस्मान्नान्विताभिधानम् ।

अतश्चैवं पदान्तरोच्चारणवैफल्यप्रसङ्गादेकस्मादेव पदात् तदुपरञ्जक-
15 द्वितीयपदार्थावगतिः सिद्धैव; तदपि पदमन्यानुरक्तस्वार्थवाचीत्यनेनैव न्यायेनैकमेव पदमखिलपदाभिधेयार्थवाचि सम्पन्नमिति तेनैव व्यवहारोऽस्तु । न चासौ सम्पद्यते, गौरित्युक्ते सर्वगुणक्रियावगमान्न ज्ञायते किमुपादीयतामिति । सर्वागमो ह्यनवगमनिर्विशेष एव, व्यवहारानुपपत्तेः । न हि रसविदां पूर्णोऽप्यब्धिर्मरोरतिरिच्यते, सलिलकार्यानिष्पत्तेः । नियतगुणक्रियानुरक्त-
20 स्वार्थप्रतिपादने तु गोशब्दस्य न हेतुमुत्पश्यामः ।

पदान्तरसन्निधानं नियमहेतुरिति चेत्, किं स्वरूपमात्रेण, अर्थप्रतिपादनेन वा ? स्वरूपमात्रेण जपमन्त्रपदानामिव सन्निधानं भवदप्यसन्निधानान्न विशिष्यते, अगृहीतसम्बन्धस्य तत्कृतोपकारादर्शनात् । अर्थप्रतिपादनेन तु पदान्तरं यदि नियमहेतुः ? सोऽप्यभिहितानामर्थानामन्वय उक्तो भवति ।
25 तस्मात् स एव श्रेयान् । पदेभ्यः प्रतिपन्नास्तावदर्था आकाङ्क्षासन्निधियोग्यत्ववशेन परस्परमभिसम्बध्यन्ते । यो येनाकाङ्क्षितो यश्च सन्निहितो यश्च सम्बन्धुं योग्यः स तेन सम्बध्यते नातोऽपरः । अत एवाङ्गुल्यग्रे हस्तियूथ-

शतमास्त इति नास्ति सम्बन्धो योग्यत्वाभावात् । अन्विताभिधानवादिनान्तु अन्वितस्यानभिधानात् तत्राप्यन्वयः प्राप्नोति, स च नास्ति । तस्मादभिहितानामेव पदार्थानामन्वय इति युक्तम् । तदुक्तम्, 'पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि, अथेदानीमर्था अवगता वाक्यार्थं सम्पादयन्ति' इति ।

**तत्खण्डनम्** 5

एवं प्राप्तेऽभिधीयते, न व्युत्पत्तिनिरपेक्षो दीप इव शब्दोऽर्थमवगमयतीति । व्युत्पत्तिश्च वृद्धव्यवहाराद् वृद्धानाञ्च व्यवहारो वाक्येन न पदेन, केवलस्य पदस्याप्रयोगात् ।

अर्थप्रकरणप्राप्तपदार्थान्तरवेदने ।
पदं प्रयुज्यते यत् तद् वाक्यमेवोदितं भवेत् ॥ 10
वक्ता वाक्यं प्रयुङ्क्ते च संसृष्टार्थविवक्षया ।
तथैव बुद्धचते श्रोता तथैव च तटस्थितः ॥

सेयं वाक्यस्य वाक्यार्थे व्युत्पत्तिः । वाक्यञ्च किमुच्यते ? संहत्यार्थमभिदधति पदानि वाक्यम् । एकार्थः पदसमूहो वाक्यमिति वाक्यविदः । तत्रायं पदसमूह एकार्थो भवति । एवं न संहत्यार्थमभिदध्युः पदानि यद्येकस्यैव 15 पदस्य व्यापारः । यथा हि बाह्यानि करणानि काष्ठादीनि पाके व्याप्रियन्ते, यथा च शिबिकाया उद्यन्तारः सर्वे शिबिकामुद्यच्छन्ति, यथा त्रयोऽपि ग्रावाण उखां बिभ्रति, तथा सर्वाण्येव पदानि वाक्यार्थमवबोधयन्ति । तदिदमन्विताभिधानम्, अन्यानन्वितनिष्कृष्टस्वार्थपर्यवसायित्वे हि सति न सर्वेषां वाक्यार्थव्यापारः स्यात् । 20

नन्वेवमेकैकस्य कृत्स्नकारित्वे सत्येकस्मादेव कृत्स्नसिद्धेः पदान्तरोच्चारणं व्यर्थमित्युक्तम्, नैतत् । पदान्तरेण विनैवैकस्मात् कृत्स्नकारित्वसम्पत्त्यभावात् । न तर्ह्येकं कृत्स्नकारीति चेत्, मैवम्; एकैकस्य कृत्स्नफलपर्यन्तव्यापारपतितत्वादेकैकस्मिन् सति कृत्स्नफलपर्यन्तो व्यापारो निवर्तत इत्येवमेकैकं कृत्स्नकारि भवति । 25

नन्वेवं तर्हि समुदाय एव कर्ता भवतु, किं समुदायिभिः ? ततश्च तदेवायातं निरवयवौ वाक्यवाक्यार्थाविति, नैतद्युक्तम् । सङ्घातकार्यवत्

स्वकार्यस्यापि दर्शनात् । अथ किं सङ्घातकार्यं किञ्च स्वकार्यम् ? वाक्यार्थ-प्रतिपत्तिः सङ्घातकार्यम्, स्वकार्यन्तु पदार्थप्रतिपत्तिः । यथा पाकः सङ्घात-कार्यम्, स्वकार्यं ज्वलनभरणादि काष्ठस्थाल्यादीनाम् ।

ननु यदि पदानां पदार्थप्रतिपादनं स्वकार्यम्, शुद्धस्तर्हि पदस्यार्थः । न
5 शुद्धः पदार्थः, सङ्घातकार्य एव प्रयोगात् । तत्र प्रयुक्तानामप्येषां स्वकार्यं न नावगम्यते । अत एव न निरवयवं वाक्यमिष्यते, स्वकार्यप्रतिज्ञानात् संहतास्ते सङ्घातकार्यं कुर्वन्तो दृश्यन्ते । न सङ्घात एव, संहतेष्वपि कुर्वत्सु स्वकार्यं पृथक् पृथगुपलभ्यते । यथा शकटाङ्गानामयमंशोऽनेन कृतोऽयमनेनेति न पृथक् प्रयुज्यमानानि शकटाङ्गानि मनागपि शकटकार्यं कुर्वन्तीति । एवं न केवलं पदं
10 प्रयुज्यते, प्रयुक्तमपि वा न तत्कार्याङ्गम्, पदान्तरेण तु सह व्यापारात् तदन्वि-तार्थकार्येव पदमिति युक्तम् । तदिदमुक्तम् 'संहत्यार्थमभिदधति पदानि वाक्यम्, एकार्थः पदसमूहो वाक्यम्' इति । तदेवमवयवकार्योपलम्भान्न वैयाकरणवन्निमित्तान्यपि निह्नुमहे । कृत्स्नफलसिद्ध्यवधि व्यापार-परिनिश्चयाच्च नान्यमीमांसकवच्छुद्धपदार्थाभिधानमुपगच्छाम इति ।

15 **अन्विताभिधाने दोषनिरसनम्**

यत् पुनरभ्यधायि, प्रतिवाक्यं व्युत्पत्तिरपेक्षणीया, अन्यथा नवकवि-श्लोकादर्थः पदार्थविदा न प्रतीयेतेति । तदिदं व्युत्पत्त्यनभिज्ञस्य चोद्यम् । न हीयं व्युत्पत्तिः, गोशब्दस्य शुक्लान्वितोऽर्थः, स हि व्यभिचरति कृष्णान्वित-स्यापि तदर्थस्य दर्शनात्, नापि सर्वान्वितस्तदर्थ आनन्त्येन दुरवगमत्वात् ।
20 किन्त्वाकाङ्क्षितयोग्यसन्निहितार्थानुरक्तोऽस्यार्थ इति । एताञ्च व्युत्पत्तिं वाक्यान्येवावापोद्वापरचनावैचित्र्यभाञ्जि सञ्जनयन्ति, पदार्थपर्यन्तापि भवन्ती व्युत्पत्तिरीदृशी दृश्यते न शुद्धपदार्थविषया, पदेन व्यवहाराभावादित्युक्तम् । तथापि न न ज्ञायते इयान् पदस्यार्थ इति, शकटाङ्गवदावापोद्वापाभ्यां

---

**न वैयाकरणवन्निमित्तान्यपीति** । निमित्तानि पदतदर्थाः, यदुक्तम् "शाब्दैस्तु
25 निमित्तमप्यपह्नुतम्" इति । पदपदार्थानां वाक्यार्थप्रतिपत्तावगृहीतसङ्गतीनामपि व्यापारान्निमित्तशब्देनाभिधानम् ।

तत्कार्यभेदस्य दर्शितत्वात् । तदित्थं न प्रतिवाक्यं व्युत्पत्तिरपेक्ष्यते सन्निहित-योग्याकाङ्क्षितार्थोपरक्तस्वार्थाभिधेयत्वेन हि क्वचिद् गृहीतः सम्बन्धः सर्वत्र गृहीतो भवति । ततश्च नवकविश्लोकादप्यर्थप्रतिपत्तिरुत्पत्स्यते । पदपदार्थयोस्तु न व्युत्पत्तिरुपायाभावादित्युक्तम् ।

यदपि पदान्तरोच्चारणमफलमिति, तदपि परिहृतम् । पदान्तरसन्निधाने हि सर्वाणि पदानि कृत्स्नकारीणि भवन्तीत्युक्तत्वात् । किं पदान्तरसन्निधानेन क्रियत इति चेत्, सर्वकारकेष्वपि तुल्योऽयमनुयोगः । संहत्य तु सर्वाणि कुर्वन्ति कारकाणीत्युच्यन्ते तथा पदान्यपि अर्थाभिधाने, नअपि चोपकुर्वंस्तु पदेषु नाभिहितान्वयोऽनन्वितार्थे व्युत्पत्त्यभावात्, अनुपगमे वा दुरुपपादः पदार्था-नामन्वय उपायाभावात् ।

नन्वाकाङ्क्षासन्निधियोग्यत्वान्यभ्युपाय इत्युक्तम् । न युक्तमुक्तम् । कस्येय-माकाङ्क्षा शब्दस्यार्थस्य प्रमातुर्वा? शब्दार्थयोस्तावदचेतनत्वान्नाकाङ्क्षायोगः। फलत इयं तत्र तत्र वाचोयुक्तिः, शब्दः शब्दान्तरमाकाङ्क्षत्यर्थोऽर्थान्तरमिति । प्रमातुः पुनः स्वतन्त्रस्याकाङ्क्षा न प्रमाणम्, पुरुषेच्छया वस्तुस्थितेरघटमान-त्वात् । शब्दाख्यप्रमाणपृष्ठ भावेन तु पुरुषस्याकाङ्क्षा भवन्ती भवत्यर्थानां संसर्गहेतुरित्येवं शब्दस्यायमियानिषोरिव दीर्घदीर्घो व्यापारः । उपरत-व्यापारे तु शब्दे पुरुषाकाङ्क्षामात्रं न सम्बन्धकारणम् ।

अशाब्दत्वञ्च　　वाक्यार्थप्रतीतेरित्थमापतेत् ।
व्यवधानमयुक्तञ्च　　साक्षाच्छाब्दत्वसम्भवे ॥

तस्मादन्विताभिधायीनि पदानीति स्थितम् । एष एव हि संसर्गपन्थाः ।

व्यतिषक्तार्थबुद्धया हि व्यतिषङ्गोऽवगम्यते ।
अपरन्तु न संसर्गप्रतीतेरस्ति कारणम् ॥
न खल्वानय गां शुक्लां संसर्ग इति कथ्यते ।
व्यवहारे क्वचिद् वृद्धैः पदं संसर्गवाचकम् ॥

---

**फलत इयं तत्र तत्रेति ।** पुरुषाकाङ्क्षोत्थापकत्वाच्छब्द आकाङ्क्षतीति कथ्यते । **शब्दाख्यप्रमाणपृष्ठेनेति ।** शब्देनाकाङ्क्षायोग्यानामर्थानां प्रतिपादनाच्छब्द एवाकाङ्क्षा-जनकः ।

प्रयुज्यमानमप्येतद् बालिशेन हि केनचित् ।
अनन्वितार्थमेव स्याद् दशदाडिमवाक्यवत् ॥

तस्मादन्वितानामेवाभिधानं युक्तम् ।

**अन्विताभिधानवादे शङ्का, तत्समाधानञ्च**

5 आह,

अङ्गुल्यग्रादिवाक्येषु कथं तव समन्वयः ?

उच्यते,

उक्तानामपि संसर्गे कथं तव समन्वयः ?

आह,

10 नन्वत्र योग्यताभावादसंसर्ग उपेयते ।
आकाङ्क्षादित्रयाधीनः संसर्गो हि मयेष्यते ॥

उच्यते,

मयापि योग्यासन्नादिसंसृष्टस्वार्थवाचिता ।
पदानां दर्शिता सा च तेषु नास्तीत्यनन्वयः ॥

15 आह, अन्विताभिधानवादी हि भवान् । ततश्च,

भवतोऽनभिधानं स्यादन्वयासम्भवादिह ॥

अहन्त्वभिहितान्वयवादी । तेन,

मम ह्यनन्वितत्वेऽपि नाभिधानं विरुद्ध्यते ।

उच्यते,

20 कथं मीमांसकेनापि भवता सूक्ष्मदर्शिना ।
नाद्यापि शब्दव्यापारः सुस्पष्टमवधारितः ॥
प्रकाशकत्वं शब्दस्य व्यापारो हि निसर्गतः ।
पुंसस्तु गुणदोषाभ्यां तस्मिन् सदसदर्थता ॥
क्रियाकारकसंसर्गबुद्धिरन्यापि शब्दजा ।
25 तादृश्येवायथार्था तु नरबुद्धिप्रमादतः ॥

तदुक्तम् "प्रमाणान्तरदर्शनमत्र बाध्यते" इति ।

अत एव प्रमाणत्वं शब्दे निष्प्रतिमं स्वतः ।
शब्दे कर्मणि तत्रापि बाधकानुपसर्पणात् ॥
तत्राङ्गुल्यग्रवाक्येऽपि शाब्दोऽस्त्येव समन्वयः ।

आधाराधेयक्रियानिर्देशस्यात्र प्रतीयमानत्वात् ।

वस्तुतोऽसम्भवो यस्तु तुल्य एव स आवयोः । 5
अयोग्यत्वेन संसर्गप्रतीत्यर्थनिबर्हणात् ॥

यदि तु शाब्दोऽनन्वयो भवेत् कचटतपादिवर्णनिर्देशमात्रमिदं स्याद् दशदाडिमादिप्रवादवदत्राप्यन्विताभिधानं न विरुद्धम्, बाधकस्त्वन्यविषय एव न शब्दसंसर्गविषय इत्युक्तम् । अत एव स्वसामर्थ्यसिद्धनिर्निबन्धकव्यापारे शब्दे स्वतो वेदे प्रामाण्यमनाकुलं निर्वक्ष्यत्यपौरुषेयतया विप्लवासम्भवात्, स्वव्यापारस्य तत एव शुद्धत्वमित्यलमतिप्रसङ्गेन । 10

इत्यन्विताभिधानेन वाक्यार्थज्ञानसम्भवात् ।
व्युत्पत्तिरहितः प्राज्ञैः प्रहेयोऽभिहितान्वयः ॥

### केषाञ्चिन्मतेऽन्विताभिधानखण्डनम्

तदेतदपि नानुमन्यन्ते । यदुक्तं वृद्धव्यवहाराद् व्युत्पत्तिरिति, तत्सत्यम्; वाक्येन व्यवहार इत्येतदपि सत्यम्, शिबिकोद्यच्छन्नरवत् सर्वाणि पदानि कार्ये संहृत्य व्याप्रियन्ते इत्येतदपि सत्यमेव । व्युत्पत्तिश्चिन्त्यताम्, किमेकघनाकारसङ्घातकार्यनिष्ठैव, किं वा पदार्थपर्यन्तेति ? पूर्वस्मिन् पक्षे प्रतिवाक्यं व्युत्पत्तिरपरिहार्या, सा च बहुप्रमादेत्युक्तम् । पदार्थपर्यन्तायां व्युत्पत्तौ नूनं निर्धारणीयमियान् पदस्यार्थ इति । भवद्भिरपि शकटावयवदृष्टान्तवर्णनेन पदव्यापारनिर्धारणमङ्गीकृतमेव, इतरथा हि पदार्थनियमानपेक्षणे गामानयेति विवक्षावानश्वपदमपि निमित्ततयोपाददीत । न हि भवतामनपेक्षितपदार्थ एव वैयाकरणानामिव वाक्यार्थप्रत्ययः । तदसौ यावान् आवापोद्वापपर्या- 15 20

---

तत्रापि बाधकानुपसर्पणादिति । अङ्गुल्यग्रादिवाक्येऽपि यच्छाब्दं कर्म शब्दव्यापारः समन्वयप्रतिपादनं तत्र नास्ति बाधकम्, शब्दोच्चारणमूलभूतज्ञानविषयत्वाद् बाधकस्य । 25

लोचनया गोपदस्यार्थो निर्धार्यते, तावानेव सङ्घातकार्येऽपि व्याप्रियमाणस्य तस्यार्थः ।

नन्वाकाङ्क्षितयोग्यसन्निहितार्थोपरक्तोऽस्यार्थ इत्युक्तम्, न सर्वदा संहतव्याप्रियमाणमेतत् पदं पश्यतस्तवायं भ्रमः, अर्थस्तावानस्य
5 यावत्यभिधात्री शक्तिः । कियती च तस्याभिधात्री शक्तिः, कियती तस्यानभिधात्री शक्तिः ? यावन्तमर्थमन्योन्यमाकाङ्क्षितैश्च योग्यैश्च सन्निहितैश्च संयुज्यमानं न मुञ्चति । कियन्तञ्च न मुञ्चति ? गोत्वमात्रं तद्वन्मात्रं वेत्यतस्तावत्येवाभिधात्री शक्तिरन्वयव्यतिरेकाभ्यामस्य निर्धार्यते । अतः परमेकस्य पदस्याप्रयोगात् सर्वदा सङ्घातकार्यरहितकेवल-
10 स्वकार्यचातुर्यानवधारणात् प्रधानकार्ये तात्पर्यशक्तिरस्य व्याप्रियते, नाभिधात्री । ताञ्च पृथगविवेचयता भवतान्विताभिधानमभ्युपगतम् । तच्च न युक्तम्, सर्वत्राभिधात्र्याः शक्तेरविशेषात्, पदार्थनियमानवधारणं पदान्तरोच्चारणवैफल्यमित्यादिदोषानपायात् । येनान्वितमर्थमभिदधाति गोशब्दस्तदनभिधाने तदन्वितानवगमाद् येन सह संसर्गः, स न गृह्यते, तत्संसृष्टश्च
15 गृह्यत इति विप्रतिषिद्धं स्यात् । तदभिधाने वा तद्वत् सर्वाभिधानमित्येकमेव गोपदं सर्वार्थं भवेत् । तस्मान्न सर्वत्राभिधात्री शक्तिः पदस्योपपद्यत इति नान्विताभिधानम् ।

अन्विताभिधानपक्षे च कथमङ्गुल्यग्रवाक्येऽपि नान्वयः स्यात् । शाब्दोऽ-

---

**भवतान्विताभिधानमभ्युपगतमिति ।** ननु तात्पर्यशक्त्यनभ्युपगमेऽप्यन्विता-
20 भिधानाभ्युपगमे को दोषः ? इत्याह **तच्च न युक्तमिति । सर्वत्राभिधात्र्याः शक्तेरविशेषादिति ।** अन्विताभिधानाभ्युपगमे हि एकैकस्य सर्वार्थाभिधानशक्तिरविशिष्टा, अन्यथाभिधानाभावप्रसङ्गात् । ततश्च पदार्थैयत्तावधारणं पदान्तरोच्चारणसाफल्यं च न सिद्ध्यति । तात्पर्यशक्त्यभ्युपगमे ह्येतावत्यभिधात्र्येव शक्तिर्न तात्पर्यशक्तिरित्यभिधातृशक्त्यपेक्षया पदार्थैयत्तासिद्धिः, अत एव पदान्तरोच्चारणमपि
25 सफलम् । तदन्वितार्थप्रतिपादनेऽभिधात्र्याः शक्तेरव्यापृतेः, एकरूपशक्त्यभ्युपगमे तु किमपेक्षया नियमः ? किञ्च पदान्तरोच्चारणस्य फलमिति सर्वत्राभिधात्र्याः शक्तेरविशेषादिति यदुक्तं तदेव **'येनान्वितमभिवदति'** इत्यादिना दर्शयितुमाह ।

स्त्येव समन्वय इति चेत्, अर्थासंस्पर्शी शब्दः प्राप्नोति, बहिरन्वयाभावात् । प्रकाशकत्वमात्रं व्यापार इति चेत्, बाढम् । तत्तु अनन्वितविषयं वेदितुं युक्तम्, न पुनरन्वितविषयमेवेति शक्यते नियन्तुम् ।

दशदाडिमादिवाक्यमनन्वितार्थप्रतिपादकमपि दृश्यते । यतो न तद् वाक्यमिति चेत् ? तदङ्गुल्यग्रवाक्यमपि वाक्यमेव ? आधाराधेयक्रियासंसर्ग-प्रतीतिस्तु भ्रममात्रम् । तस्मादन्वितमर्थमभिदधति पदानीत्यसमीचीनम् ।

तत् किं शलाकाकल्पाः परस्परमसंसृष्टा एव पदार्थाः पदैरुच्यन्ताम् ? एतदपि नास्ति, तथाविधव्यवहाराभावात्, पश्चादन्वयस्य च दुरवगमत्वात्, विरम्य व्यापारस्य चासंवेदनात् । तस्मात् पक्षद्वयमपि न क्षेमाय । तदुक्तम्,

मतद्वयमपीदन्तु नास्मभ्यं रोचतेतराम् ।
कुतोऽन्विताभिधानं वा कुतो वाभिहितान्वयः ॥

**तत्रैव मतान्तरम्, तत्खण्डनञ्च**

अन्या तु वाचोयुक्तिः कैश्चित् कृता, अन्वीयमानाभिधानमभिधीय-मानान्वयश्चेति । सापि न हृदयङ्गमा,

न हि द्वे अनुभूयेते क्रिये एते पृथक् स्थिते ।
अभिधानक्रिया चान्या वाच्यस्था चान्वयक्रिया ॥

ते हि क्रमेण वा स्यातां युगपद् वा । क्रमपक्षे पूर्वमन्वयक्रिया चेत्, तदिद-मन्विताभिधानमेव नान्वीयमानाभिधानम् । पूर्वं चेदभिधानमभिहितान्वय एव

---

**अन्वीयमानाभिधानमिति ।** पदार्थान्तरेणान्वयं गच्छन् पदार्थः पदैरभिधीयत इत्यत्र पक्षेऽन्वितस्यानभिधानात् पदार्थनियमानवधारणपदान्तरवैफल्यादिदोषानवकाशः । **अभिधीयमानान्वयेति ।** अभिहितान्वयपक्षे च यो दोषो वाक्यार्थस्याशाब्दत्वम्, सोऽप्यत्र नास्ति । अभिधीयमानानां शब्दैः प्रतिपाद्यमानानामभिधाविषयत्वमजहतां हि योऽन्वयः, स कथमशाब्दः स्यादिति तदभिप्रायः । यत एव वान्वयं गच्छन्तः शब्दैरभिधीयन्ते, अत एवाभिधीयमानानामन्वयः । **अभिधानक्रिया चान्येति ।** अस्मिन् हि पक्षे शब्दश्चा-भिदधदर्थश्चार्थान्तरेणानुलभ्यते, तयोश्चोपलम्भः क्रमेण युगपद् वेति ।

नाभिधीयमानान्वयः । युगपत्तु क्रियाद्वयसंवेदनं नास्ति, अर्थगतायाः क्रियायाः शब्दप्रयोगकालेऽनुपलम्भात् ।

अभिधानक्रियैवैका तदभिज्ञैः परीक्ष्यते ।
अन्वीयमानतार्थानामभिधानाद् विना कुतः ।।

5 गौः शुक्ल इति जातिगुणयोरेकद्रव्यसमवेतयोरपि शब्दमन्तरेण कुतोऽन्वयमवगच्छामः ?

उक्तेर्नूतनतैवेयं न पुनर्वस्तु नूतनम् ।
न चात्रापि निवर्तन्ते दोषाः पक्षद्वयस्पृशः ।।

**तात्पर्यशक्त्यैवान्वयबोध इति मतप्रदर्शनम्**

10 अन्ये मन्यन्ते, सामान्येनान्विताभिधानं, विशेषतश्चाभिहितान्वय इति । गोशब्दो हि स्वार्थमनवगतविशेषगुणक्रियासामान्यान्वितमभिधत्ते, तावत्यन्विताभिधानम् । शुक्लादिगुणविशेषसम्बन्धस्तु पदान्तरादवगम्यते, सोऽयं विशेषोऽभिहितान्वय इत्येतदपि तादृगेव ।

दोषोऽन्विताभिधाने यः सामान्येऽपि स तादृशः ।
15 दोषस्तुल्यो विशेषेऽपि यश्चोक्तोऽभिहितान्वये ।।

न चेदमपूर्ववस्तु वर्णितमभिहितान्वयवादिनो विशेषे एवाभिहितान्वय आश्रीयत इति प्राक्तन एवेष्टः पन्था वेदितव्यः । कथं तर्ह्ययमाभिधानिको व्यवहारः, सङ्कुलमिवैनं पश्यामः, सर्वत्र दोषसम्भवात् ।

उच्यते, न कदाचिदत्र सङ्कुलता, संहत्यकारीणि हि पदानीत्युक्तम् ।

---

20 **दोषाः पक्षद्वयस्पृश** इति । अन्वीयमानाश्चेदभिधीयन्ते तदेकेनैव पदेनेतरपदार्थान्वीयमानस्याभिधानात् पदान्तरनैरर्थक्यमित्यादि समानम्; अभिधीयमानानां चान्वये पुनरप्यशाब्दत्वम्, शब्दव्यापारस्य शुद्धाभिधानक्रियायामेवोपक्षीणत्वात् ।

**दोषोऽन्विताभिधाने य** इति । क्रियापदेन कारकसामान्यान्वितस्वार्थप्रतिपादनात् कारकपदनैष्फल्यादि समानम् । अथ कारकविशेषप्रतिपत्तये कारकपदोच्चारणं तत्रा-
25 प्याह **दोषस्तुल्यो विशेषेऽपीति** । पदानां सामान्यप्रतिपत्तावेव चरितार्थत्वाद् विशेषप्रतिपत्तेस्तद्वदेवाशाब्दत्वम्, विशेषान्वयस्यैव वाक्यार्थत्वादिति ।

समुदितैः पदैरेको वाक्यार्थः प्रत्याय्यते, स च गुणभूतेतरपदार्थसंसृष्टः कश्चित् पदार्थ एवेति किमत्र सङ्कुलम् ?

ननु किमयमन्विताभिधानपक्षः पुनरुत्थापयितुमिष्टः ? मैवम् । नेदमन्विताभिधानम् । कथं तर्हि संहत्यकारिता पदानाम् ? उच्यते, संहत्यकारिताप्यस्ति न चान्विताभिधानम् । अन्वितमर्थं पदानि संहत्य सम्पादयन्ति न त्वन्वितमभिदधति । किमिदानीं कुर्वन्ति वाक्यार्थं पदानि घटमिव मृदादीनि ? एतदपि नास्ति, ज्ञापकत्वात्तेषाम् । का तर्हीयं वाचोयुक्तिः संहत्यकारीणि पदानि न चान्वितमभिदधतीति, इयं वाचोयुक्तिः पदान्यन्वितं प्रत्याययन्ति, नान्वितमभिदधति, नाभिधात्री शक्तिरन्वितविषया; किन्त्वन्वयव्यतिरेकावगतनिष्कृष्टस्वार्थविषयैव; तात्पर्यशक्तिस्तु तेषामन्वितावगमपर्यन्ता सहव्यापाराद्, व्यापारस्य च तदीयस्य निराकाङ्क्षप्रत्ययोत्पादनपर्यन्तत्वात् । तथाहि,

> अन्यथैव प्रवर्तन्ते प्रत्यक्षाद्युद्भवा धियः ।
> अर्थं पूर्णमपूर्णं वा दर्शयन्त्यः पुरः स्थितम् ॥
> अन्यथैव मतिः शब्दे विषयेषु विजृम्भते ।
> प्रतिपत्तुरनाकाङ्क्षप्रत्ययोत्पादनावधिः ॥
> अत एव पदं लोके केवलं न प्रयुज्यते ।
> न हि तेन निराकाङ्क्षा श्रोतुराधीयते मतिः ॥

नन्वभिधानव्यतिरिक्तः कोऽन्यः शब्दस्य कृत्स्नफलपर्यन्तः प्रत्यायनात्मा व्यापारः ? अस्ति कश्चिद् यः सर्वैरेव संसर्गवादिभिरप्रत्याख्येयः । न हि संसर्गोऽभिधीयते, प्रतीयते च वाक्यात् ।

ननु संसृष्टाभिधाने सति संसर्गः प्रतीयते नान्यथा । नैतदेवम्, संहत्यकारित्वादेव संसर्गावगतिसिद्धेः । न हि संहत्यकरणमसंसृष्टञ्च कार्यं क्वचिद् दृश्यते । अपि च, प्रकृतिप्रत्ययौ परस्परापेक्षमर्थमभिदधाते, न च प्रकृत्या

---

न त्वन्वितमभिदधति एकैकशः ।

अन्यथैव प्रवर्तन्त इति । दूरात् सामान्यमात्रग्रहणे नियतव्यक्तिपरिच्छेदकारित्वाभावादपूर्णार्थप्रदर्शकत्वम् ।

प्रत्ययार्थोऽभिधीयते, नियोगस्य धातुवाच्यत्वात् । न च प्रत्ययेन प्रकृत्यर्थोऽभिधीयते यागादेर्लिङ्वाच्यत्वानुपपत्तेः । न च तौ पृथक् पृथक् स्वकार्यं कुरुतः ।

एवं पदान्यपि परस्परापेक्षीणि संहत्य कार्यं करिष्यन्ति । न च परस्परमर्थमभिधास्यन्ति । वाक्यान्यपि प्रकरणपतितान्येवमेव । तदुक्तम्,

5 प्रकृतिप्रत्ययौ यद्वदपेक्षेते परस्परम् ।
पदं पदान्तरं तद्वद् वाक्यं वाक्यान्तरं तथा ।। इति ।

अयमेव च पक्षः श्रेयान् यत् संहत्यकारित्वं पदानामसङ्कीर्णार्थत्वञ्च ।

निरपेक्षप्रयोगेऽप्यश्शलाकाकल्पना भवेत् ।
10 तदन्विताभिधाने तु पदान्तरमनर्थकम् ।।
संहत्यकारिपक्षे तु दोषो नैकोऽपि युज्यते ।
तेनायमुपगन्तव्यो मार्गो हि हतकण्टकः ।।
अभिधात्री मता शक्तिः पदानां स्वार्थनिष्ठता ।
तेषां तात्पर्यशक्तिस्तु संसर्गावगमावधिः ।।
15 तेनान्विताभिधानं हि नास्माभिरिह मृष्यते ।
अन्वितप्रतिपत्तिस्तु बाढमभ्युपगम्यते ।।

संहत्यकारकत्वाच्च पदानां न स्वार्थाभिधित्सयैव समुच्चारणम्, अपि तु प्रधानं कार्यमेव कर्तुम् । तदुक्तम्,

वाक्यार्थप्रत्यये तेषां प्रवृत्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ।। इति ।

20 सेयं व्युत्पत्तिमूला पदविसरसमुद्भिद्यमानाङ्कुरश्रीः
संस्कारोदारपत्रा कुसुमचयवती प्रोल्लसद्भिः पदार्थैः ।
प्रज्ञावल्ली विशाला फलति फलमिदं स्वादुवाक्यार्थतत्त्वैः
नैराकाङ्क्ष्यं लसद्भिर्हृदयमुपगते यान्ति यस्मिन् पुमांसः ।।

---

**सेयं व्युत्पत्तिमूलेति ।** पदानां या स्वार्थे व्युत्पत्तिः सङ्केतग्रहणं सैव मूलम्, तत
25 उद्भूतेः । पदविसरात् पदसमुदायात् समुद्भिद्यमाना प्रकटीभवन्ती अङ्कुररूपाद्यवस्था यस्याः, पदानां तत्प्रतिपत्तिकारणत्वाव्यभिचारात् । संस्कारश्च पदार्थप्रतिपत्तौ सन्निकृष्टोपायत्वात् पत्रतया रूप्यते । पदार्थैः कुसुमचयवती, पदार्था एव कुसुमचयः पूर्वापेक्षया फलं प्रतिपत्तेः आसन्नत्वात् ।

आह च,

पदात् प्रभृति या चैषा प्रज्ञा ज्ञातुर्विजृम्भते ।
पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यति ॥
तस्मादनया नीत्या सम्प्रत्ययो भवति साधुः ।
संसृष्टाश्च पदार्था वाक्यार्थ इति त्ववेदि प्राक् ॥　5

**वेदार्थोऽप्यनयैव रीत्या करणीय इति मतप्रदर्शनम्**

यश्चैष लोकव्यवहारसिद्धिः प्रादर्शि वाक्यार्थमितावुपायः ।
स एव वेदेऽप्यवधारणीयस्तत्रापि तान्येव पदानि तेऽर्थाः ॥

आह, लोके प्रमाणान्तरपरिच्छेद्यत्वाद् वाक्यार्थस्य तदवगमोपायत्वं शब्दानां योजयितुं शक्यते । वेदार्थस्तु अतीन्द्रियो न च रागादिदोषकलुषमन-　10
सामस्मदादीनामतीन्द्रियपदार्थदर्शनकौशलमस्ति । तददर्शिनाञ्च तत्र वृद्ध-व्यवहाराद् व्युत्पत्तिरेव न सम्भवति । सोऽहमद्य वेदार्थं बुभुत्समानो वेदविदं कञ्चिदाचार्यमभिगच्छेयं सोऽप्यतीन्द्रियार्थदर्शी न भवतीति तस्यापि तथैव व्युत्पत्त्यभाव इति, तेनाप्यन्यः कश्चिदभिगन्तव्यः । सोऽप्यहमिव व्युत्पत्त्य-भावादन्यमुपासीत, सोऽप्यन्यमित्यन्धपरम्परा प्राप्नोति । न च वेद एव वृद्धि-　15
रादैजिति पाणिनिरिव, मस्त्रिगुरुरिति ब्रुवन् पिङ्गल इव, हस्तः करः पाणि-रिति कथयन्नभिधानमालाकार इव, स्वयमुपदिशत्येषोऽस्य मामकस्य शब्द-स्यार्थ इति । तस्मात् सर्वथा दुरवगमो वेदार्थः । तदाह,

स्वयं रागादिमान्नार्थं वेत्ति चेत् तस्य नान्यतः ।
न वेदयति वेदोऽपि वेदार्थस्य कुतो गतिः ॥ इति ।　20

अथ निगमनिरुक्तव्याकरणवशेन तदर्थकल्पना क्रियते, तर्हि नानामति-त्वादुपदेश्यानामनेकार्थत्वाच्च नाम्नामुपसर्गनिपातानाञ्च न नियतः कश्चि-

---

**वेदस्य नान्यत इति ।** अन्यतोऽपि रागादिमान् न वेत्ति, तस्यापि रागादिमत्त्वेन तत्तुल्यत्वात् ।

दर्थो व्यवस्थापयितुं शक्यते; अन्यथा तत् कल्पनासम्भवात् । आह च,

तेनाग्निहोत्रं जुहुयात् स्वर्गकाम इति श्रुतौ ।
खादेच्छ्वमांसमित्येष नार्थ इत्यत्र का प्रमा ।। इति ।

तदेतद् बधिरस्य रामायणं वर्णितमस्माभिः । य एवमपि श्रुत्वा वेदार्थ-
5 परिगमाभ्युपायं मृगयते । अनेन हि पूर्वोक्तेन वाक्यार्थपरिगमोपायप्रकटनेन
सर्वमपाकृतं भवति । उक्तं हि, नाभिनवाः केचन वैदिकाः शब्दाः, रचना-
मात्रं वेदे भिद्यते, न तु पदानि । सर्गात् प्रभृति च प्रवृत्तोऽयं वेदविदां
व्यवहारः । ततश्च दीर्घप्रबन्धप्रवृत्ताद् अद्यत्वे वयसि व्युत्पद्यामहे । व्युत्पद्य-
मानाश्च तं तमर्थं प्रतिपाद्यमहे ।

10 किञ्च वेदार्थस्य परिज्ञानौपयिकानि व्याकरणमीमांसाशास्त्राणि क्व
गतानि, यदेषु जीवत्सु न वेदार्थोऽवधार्यते ? अपि च रे मूढ ! स्वयं रागा-
दिमतः प्रत्यक्षमतीन्द्रियेऽर्थे मा प्रवर्तिष्ट, न तु रागादिमानग्निहोत्रं जुहुयात्
स्वर्गकाम इति वाक्यादपि अग्निहोत्राख्यं कर्म स्वर्गसाधनमिति नाव-
गच्छेत् । अतीन्द्रियेऽर्थे नियता कुतो व्युत्पत्तिरिति चेत्, उक्तमत्र वेदवत् तद्-
15 व्यवहारस्य तदर्थपरिगमोपायस्य सुचिरप्ररूढत्वात् । वेदश्चार्थश्च तदु-
पायश्च तदनुष्ठानञ्च नाद्यत्वे प्रवृत्तानि । किन्तु केषाञ्चिन्मते अनादीन्येव,
अस्मन्मते तु जगत्सर्गात् प्रभृति प्रवृत्तानि, कस्तेष्वद्य पर्यनुयोगावसरः ? सेय-
मनेन पापकारिणा खादेच्छ्वमांसमित्याद्यपभाषणेन केवलमवीचिकेदार-
कुटुम्बिनमात्मानं कर्तुं वेदनिन्दैव मन्दमतिना कृता, न दूषणमभिनवं
20 किञ्चिदुत्प्रेक्षितमिति ।

अथापर आह । किमेष तपस्वी पराणुद्यते, किमनेनापराद्धम्, किमनेन
विरुद्धमभिहितम् ? न हि लोकतो वेदार्थे व्युत्पत्तिरवकल्पते । कोऽयं लोको
नाम ? किं यः कश्चित् प्राकृतः, उत वैयाकरणः संस्कृतमतिरिति । तत्र शाक-
टिकाः साधुशब्दप्रयोगानभिज्ञमनसो निसर्गत एवाक्षतकण्ठा वराकाः

---

25 **अवीचिकेदारकुटुम्बिनमिति** । अवीच्याख्यनरकक्षेत्रस्वामिनं तत्सम्बद्धमित्यर्थः ।
**निसर्गत एवाक्षतकण्ठाः** । व्याकरणादिपाठेन न क्षतः कण्ठो येषाम् ।

संस्कारबाह्यैर्गाव्यादिभिरेव शब्दैर्व्यवहरन्ति । तैश्च व्यवहरन्तः कथमिव वैदिकेषु शब्देषु व्युत्पत्तिमवाप्नुयुः ?

यद्यपि चास्ति एषि एमि इति कश्मीरेषु, गच्छेति दार्वाभिसारेषु, करोमीति मद्रेषु कतिपये साधुशब्दाः पामरैरपि प्रयुज्यन्ते; तथाप्यतीव प्रविरलसञ्चारोऽसौ व्यवहार इत्यनुपादेय एव वैदिकशब्देषु व्युत्पत्तेः । 5

अथ व्याकरणस्य वेदाङ्गत्वात् ततः साध्वसाधुशब्दप्रविभागमवगच्छन्तः साधुभिर्भाषितव्यमसाधुभिर्नेति विधिनिषेधनियमितमतयः साधुभिरेव शब्दैर्व्यवहरन्तो विद्वांसस्तनीयसैव क्लेशेन वैदिकेष्वपि शब्देषु व्युत्पत्तिमासादयेयुरिति कथ्यते । तदपि न चतुरश्रम्, इतरेतराश्रयप्रसङ्गात् । 10 वेदे हि सिद्धप्रामाण्ये तदङ्गभूतव्याकरणाभ्याससमासादितसाध्वसाधुशब्दप्रविवेकवृद्धव्यवहारपरिचयपुरस्सरा वैदिकशब्देषु व्युत्पत्तिः, तद्व्युत्पत्तौ च सत्यां बोधकत्वात् प्रतिपादकत्वलक्षणमप्रामाण्यमपोज्झतो वेदस्य प्रामाण्यमिति ।

अथ वेदाङ्गमिदमिति श्रद्धामवधूय यदृच्छाधीतेनैव व्याकरणेन पूर्वोक्तकार्यसिद्धेर्नेतरेतराश्रयमिति वर्ण्यते, किमिदानीं नाटकप्रकरणादि- 15 काव्योपयोगिसंस्कृतभाषाविशेषपरिज्ञानायैव प्राकृतलक्षणवद् व्याकरणमध्येतव्यम् ? तथाभ्युपगमे वा अनङ्गत्वाविशेषात् प्राकृतलक्षणप्रसिद्धशब्दव्यवहारानुसारेण वैदिकशब्दव्युत्पत्तिरापाद्यत इति सुतरां दुःस्थत्वम् ।

अपि च सत्यपि व्याकरणाधिगमे श्रुतेऽपि साधुभिर्भाषितव्यमित्युपदेशे, सत्यं वदत, वेदार्थानुष्ठानपरायणोऽपि कृतबुद्धिरपि निषिद्धाचरण- 20 पराङ्मुखोऽपि श्रोत्रियोऽपि श्रद्दधानोऽपि यदि कश्चित् केवलैः साधुभिरेव शब्दैर्व्यवहरन् दृष्टः; एकाकी तैश्च नानार्थक्रियासाधनभूतभूरिव्यवहारं निर्वहन् तदनुचरः परिज्ञातो न भूयः केवलसाधुशब्दप्रयोगकुशलः कल्पनीयः । कुतश्चासौ लभ्यते ? तस्मान्न वृद्धव्यवहाराद् वेदार्थव्युत्पत्तिरुपपद्यते ।

25

तदनुचरोऽपीति । भार्यादासादिर्येन सहासावालपति ।

**व्याकरणस्य न वेदार्थावधारकत्वं सम्भवति**

अथ व्याकरणमेव वेदार्थव्युत्पत्तौ उपायतां प्रतिपत्स्यत इति मन्यसे, तदपि कथमिति चिन्त्यम् । न हि विवरणकार इव पाणिनिर्वेदं व्याचष्टे । व्याचक्षाणेऽपि वा परिमितदर्शिन्यस्मादृशे द्वेषादिदोषकलुषितमनसि तस्मिन्न-
5 स्मदादीनां वेदार्थं बुभुत्समानानां कीदृशो विस्रम्भः ? किं यथैष व्याचष्टे तथैव वेदार्थः, अन्यथा वेति । यदि तु साध्वसाधुशब्दविवेकद्वारेण व्याकरणं कारणं वेदार्थव्युत्पत्तेरित्युच्यते, तत्रापि स्वातन्त्र्येण वेदस्येव व्याकरणस्य शास्त्रत्वा-नुपपत्तेरङ्गसिद्धेश्च वैदिकविध्यपेक्षितार्थसम्पर्कित्वं नूतनमस्येषितव्यम् । साधुभिर्भाषितव्यमसाधुभिर्नेत्यनयोरेव विधिनिषेधयोरिति चेत् । नन्वेतावेव
10 विधिनिषेधौ तावद्विचारयामः, किं प्रकरणे पठितौ किमनारभ्याधीतौ क्लृप्ताधि-कारौ कल्प्याधिकारौ वेति ।

**तत्रैव साध्वसाधुशब्दविभागे शङ्का**

आस्तां चेदम् । वितता खल्वियं चिन्ता । साध्वसाधुशब्दस्याप्रसिद्धत्वात् किंविषयाविमौ विधिनिषेधौ स्यातामितीदमेव चिन्त्यताम् । 'व्रीहिभिर्यजेत'
15 'न कलञ्जं भक्षयेत्' इति व्रीहिकलञ्जयोः स्वरूपस्य लोकतोऽवगतौ तद्विषय-विधिनिषेधबोधो न दुर्घटः । इह तु व्रीहय इव कलञ्जमिव न साध्वसाधु-शब्दः प्रविवेकेन लोकतोऽवगम्यते । कृतश्रमश्रवणयुगलकरणिकासु प्रमितिषु शब्दस्वरूपमेव केवलं विषयतामुपयाति, न जातु तद्गतं साधुत्वमसाधुत्वं वा । न हि शब्दत्वादिजातिवदुदात्तादिधर्मवच्च साध्वसाधुतायां कस्यचिदपि
20 श्रौत्रः प्रत्ययः प्रसरति । प्रत्यक्षप्रतिषेधे च सति तत्पूर्वकसम्बन्धग्रहण-सम्भवादनुमानमपि निरवकाशमेव ।

शब्दस्तु द्विविधः पुरुषप्रणीतो वैदिको वा । तत्र पुरुषप्रणीतः प्रत्यक्षा-नुमानविषयीकृतार्थप्रतिपादनप्रवण एव भवतीति तदपाकरणादेव पराकृतः ।

---

**क्व प्रकरणे पठिताविति ।** प्रयाजादिवत् । अथ न प्रकरणपरिपठितौ तत्किमना-
25 रभ्याधीतौ 'यस्य पर्णमयी जुहूः' इत्यादिवत् । क्लृप्ताधिकारौ 'चित्रया यजेत' इतिवत् । कल्प्याधिकारौ वा विश्वजिद्वत् ।

वैदिकस्तु सम्प्रति चिन्त्यो वर्तते। स हि सिद्धे साधुत्वे तद्विधौ, सिद्धे चासाधुत्वे तन्निषेधे व्याप्रियते, न पुनस्तत एव तत्सिद्धेर्युज्यते। तथाभ्युपगमे वा दुरुत्तरमितरेतराश्रयमवतरति, विधिनिषेधसिद्धौ साध्वसाधुशब्दसिद्धिः, साध्वसाधुशब्दसिद्धौ च विधिनिषेधसिद्धिरिति।

किञ्चेदं साधुत्वं नाम ? यदि वाचकत्वम्, गाव्यादयोऽपि सुतरां वाचका इति तेऽपि कथं न साधवः ? अर्थावगतिसाधनाद्धि साधुत्वम्। तच्च यथा गाव्यादिषु झटित्येव भवति, न तथा गवादिष्विति प्रथमं त एवासाधवः। एवञ्च यदाहुः, 'असाधुरनुमानेन वाचकः कैश्चिदिष्यते' इति। तदत्यन्तमसाम्प्रतम्। सोपानान्तरप्रतीतिप्रसक्तेर्विपर्ययस्य च लोके प्रसिद्धत्वात्। यस्तावदनधिगतव्याकरणसरणिः पामरादिः स गाव्यादिशब्दश्रवणे सति तावत्येव जातसन्तोषस्तत एवार्थमवगच्छन् गवादिशब्दानुमामनधिरुह्यैव व्यवहरति। हेमगिरिमुत्तरेण यादृंशि मादृशैरनुभूतानि तरुकुसुमफलानि तथाविधास्तस्य साधुशब्दा इति, सर्वात्मना अनवधारितसम्बन्धः स कथमनुमातुं प्रभवेत् ?

येऽपि व्याकरणार्णवकर्णधाराश्चिराभ्यस्तसूक्तयः सूरयस्तेऽपि गाव्यादिभिर्व्यवहरन्तोऽनुमानक्रममनुहरन्त एव तेभ्योऽर्थं प्रतिपद्यन्त इति प्रत्यात्मवेदनीयमेतत्। तस्माद् वाचकत्वमेव साधुत्वम्। तच्च गवादिष्विव गाव्यादिषु दृश्यत इति तेऽपि साधवः स्युः। असाधुत्वमप्यवाचकत्वमुच्यते तच्च, वायसवाशितादिषु व्यवस्थितम्, न वर्णात्मकेषु व्यक्तवागुच्चार्यमाणेषु शब्देष्विति न तेऽसाधवः।

अथ ब्रूयान्नार्थप्रतीतिसाधनत्वमात्रं साधुत्वं धूमादिभिरतिव्याप्तेरपि तु विशिष्टक्रियाकारणत्वं वाचकत्वम्, तच्च गवादिष्वेवास्ति, न गाव्यादिष्विति न

---

**असाधुरनुमानेनेत्यस्य** पक्षान्तरप्रतिपादकमुत्तरमर्धम्—"वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः" इति। अनुमानेनासाध्वनुमितात् साधोरर्थप्रत्यय इति।

**विशिष्टक्रियाकरणत्वमिति।** अभिधानलक्षणां विशिष्टां क्रियां जनयन् शब्दो वाचकः, न प्रतीतिमात्रजनकत्वेन। तां च तादृशीं क्रियां साधुरेव जनयति, नासाधुरिति।

ते साधव इति । एतदप्यसमीक्षिताभिधानम् । अभिधानक्रियाकारणत्वं हि वाचकत्वमिति पूर्वमेव सुनिपुणमुपपादितम् । एतच्च गवादिषु गाव्यादिषु समानमिति सर्व एव साधवः ।

अथ लक्षणानुगतत्वं तद्बाह्यत्वञ्च साधुत्वमसाधुत्वञ्च वर्ण्यते । 5 तदयुक्तम्, पारिभाषिकत्वप्रसङ्गात् । न चान्यत् किमपि साध्वसाधुलक्षण-मतिसूक्ष्मयापि दृष्टया शक्यमुत्प्रेक्षितुम्, अतो वाचकावाचकावेव साध्वसाधू इति स्थितम् । तेन तयोः प्रवर्तमानौ विधिनिषेधाविमौ व्यर्थौ भवेताम् । कथम् ?

साधुभिर्भाषणं तावत् प्राप्तत्वान्न विधीयते ।
10 अवाचकनिषेधश्चाप्राप्तेरेव न कल्पते ॥

न हि सलिलं पिबेदनलं न पिबेदिति विधिनिषेधौ सम्भवतः, सलिल-पानस्य स्वतः प्राप्तत्वात्, अप्राप्ते च शास्त्रस्यार्थवत्त्वात् । ज्वलनपानस्य च कस्याञ्चिदवस्थायामप्राप्तेः प्रतिषेधानर्थक्यात् । प्राप्तिपूर्विका हि प्रतिषेधा भवन्ति । न हि ग्रीष्मे ज्वालायोगोपनीततृड्विकारः करभोऽपि यतेत इति । तत्रैतत् स्यात्, 15 गवादेर्गाव्यादेश्च वाचकत्वाविशेषे साध्वसाधुशब्दोच्चारणकरणकपुण्यपातक-प्राप्तिपरिहारप्रयोजननियमविधानाय शास्त्रसाफल्यं भविष्यति । तदुक्तम्, 'वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः' इति ।

एतदपि दुर्घटम् । प्रविधेयांश्च निषेध्यांश्च शब्दानुपदर्श्य नियमो विधातव्यः, एभिर्भाषितव्यमेभिर्नेति । तत्र यद्युभये, ते शब्दाः प्रतिव्यक्ति 20 नामग्रहणपरिगणनपुरःसरमुपदर्श्येरंस्तदयमर्थः कल्पशतजीविनो भगवतः परमेष्ठिनोऽपि न विषयः । प्रविततवदनसहस्रसङ्कुलमूर्तेरनन्तस्यापि न गोचरः । वाचस्पतेर्न भूमिः । सरस्वत्या अतिभारः, तेषामानन्त्येन दर्शयितुमशक्यत्वात् ।

अथ किञ्चिदुपलक्षणमवलम्ब्य तेषां वर्गीकरणमुपेयते, हन्त तर्हि दृश्यतां न च तत् सम्भवति ।

---

25 पारिभाषिकत्वप्रसङ्गादिति । एवंविधस्य साधुशब्दार्थस्य लोकेऽप्रसिद्धेः ।

लवणोपयोगापनीततृड्विकारोऽपीत्यनेनास्मद्विलक्षणस्वभावत्वं तस्य आह; अस्माकं हि लवणोपयोगात् तृड् वर्धत इति ।

अविभक्ता हि शब्दत्वजातिः शब्दापशब्दयोः ।
न चावान्तरसामान्ये केचिद् वर्गद्वये स्थिते ।।
न हि साधुत्वसामान्यमेकेष्वेव व्यवस्थितम् ।
इतरेषु त्वसाधुत्वसामान्यमुपलभ्यते ।।

तदनुपलम्भाद् असम्भवति वर्गीकरणकारणे कथमेष नियमो विधीयेतेति 5
नावधारयामः । किञ्च नियमार्थेऽपि शास्त्रे वक्तव्यं कीदृशः किंनियमार्थः, साधुभिरेव भाषितव्यमुत भाषितव्यमेव साधुभिरित्युभयथा च प्रमादः । आह हि,

यदि साधुभिरेवेति नासाधोरप्रसङ्गतः ।
नियतं भाषितव्यं चेन्मौने दोषः प्रसज्यते ।। इति । 10

न वाचकत्वादन्यत् साधुत्वमित्युक्तम्, अवाचकस्य प्रयोगप्रसङ्ग एव नास्तीति । अथ प्रमादाशक्तिकृतशब्दप्रयोगप्रतिषेधाय नियम आश्रीयते, तत्रापि,

प्रमादाशक्तिजाः शब्दा यदि तावदवाचकाः ।
तेषु प्रसङ्गो नास्तीति तन्निवृत्तिश्रमेण किम् ।। 15
अथ वाचकता तेषामप्रमादोत्थशक्तिवत् ।
न तर्हि प्रतिषेधः स्यादप्रमादोत्थशक्तिवत् ।।

नन्वस्ति तावदपशब्दानामशक्यनिह्नवः परिदृश्यमानो लोकप्रयोग इति तन्निवृत्तिफल एष प्रयोगनियमः कथं न भवेत् ? यद्येवम्, अक्षिनिकोच-हस्तसंज्ञादेरपि प्रचुरः प्रयोगो दृश्यत इति तद्व्युदासफलोऽप्येष नियमः 20
स्यात् ।

---

**नासाधोरप्रसङ्ग** इति । अन्यनिवृत्तिफलो हि नियमो भवति । साधुः स्ववाचको भण्यते, असाधुस्त्ववाचकस्ततस्तस्यावाचकत्वादेवासाधोरप्रसङ्गात् किं नियमेन इत्यर्थः । 25

**अथ प्रमादाशक्तिकृतेति** । प्रमादकृतः 'अस्मकेभ्यः आगच्छामि' इति वक्तव्ये 'अस्मकैः आगच्छामि' इत्याह, अशक्तिकृतः 'कुमारी ऋतकः' इति वक्तव्ये 'कुमारी लृतक' इत्याह ।

अपि च विधिफलः सर्वत्र विधिनियमो भवति, ऋतावुपेयादित्यादि। निषेधफला तु परिसङ्ख्या, पञ्च पञ्चनखा भक्ष्या इति। तदयमपशब्दे प्रयोगप्रतिषेधफलश्च नियमश्चेति व्याहतमभिधीयते। परिसङ्ख्या तर्हि भविष्यतीति चेन्न, शब्दापशब्दयोर्युगपत् प्राप्त्यभावात्। "तत्र चान्यत्र च प्राप्तौ परिसङ्ख्याभिधीयते" इति न्यायात्।

यदपि पुण्यपापफलत्वं शब्दापशब्दप्रयोगस्येति गीयते, तदपि न पेशलम्, परिदृश्यमानमविवादसिद्धार्थप्रत्ययजननमपहाय परोक्षस्यादृष्टस्य पुण्यपापात्मनः कल्पनानुपपत्तेः। यश्चायम् 'स्वर्गे लोके कामधुग् भवति' इति साधुशब्दस्तुत्यर्थवादः, यश्च 'स वाग्वज्रो यजमानं हिनस्ति' इत्यपशब्दे निन्दार्थवादः, तत्र परार्थत्वस्य विस्पष्टदृष्टत्वादर्थवादमात्रपर्यवसितौ च। "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्" इति न्यायान्न फलार्थतेति। तदेवं साधुभिर्भाषितव्यमसाधुभिर्नेति विधिनिषेधयोरनारभ्याधीतयोः श्रूयमाणयोरपि दौस्थित्यात् तन्मूलतया लब्धप्रमाणभावा व्याकरणस्मृतिरङ्गतामेष्यति वेदस्येति दुराशैव। प्रकरणविशेषपाठे तु तयोस्तदुपयोगादेव न सार्वत्रिकी नियमार्थतेति सर्वथा न व्याकरणे तन्मूलत्वम्।

---

**ऋतावुपेयादिति।** अस्य हि ऋतावुपगमोऽवश्यकर्तव्य इत्यर्थः, न तु अनृतुगमनप्रतिषेधः, 'पर्ववर्जं व्रजेच्चैनाम्' इत्यादिना विरोधात्।

**तत्र चान्यत्र च प्राप्तेः** इत्यस्य पूर्वमर्धम्—"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति" इति।

**यश्चायं स्वर्गे लोके** इति। "एक शब्दः सम्यक् प्रयुक्तः स्वर्गे लोके कामधुग् भवति"।

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

इति स्तुतिनिन्दावाक्ये।

**परार्थत्वस्य** अर्थप्रत्यायनार्थत्वस्य।

**व्याकरणस्य न वेदाङ्गत्वमितिपक्षप्रदर्शनम्**

आह, तर्हि निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति विधेः शिक्षा-कल्पसूत्रनिरुक्तच्छन्दोज्योतिःशास्त्रवद् व्याकरणमपि वेदाङ्गत्वादध्येतव्य-मित्यवगम्यते। नैतदप्यस्ति। शिक्षादीनामनितरेतरसाध्यासङ्कीर्णविविध-विध्यपेक्षितवेदोपकारनिर्वर्तकत्वेन तदङ्गता सुसङ्गता, व्याकरणस्य तु 5 सुदूरमपि धावनप्लवने विदधतः साधुशब्दप्रयोगनियमद्वारकमेव तदङ्गत्वं सम्भाव्यते न मार्गान्तरेण, स च नियमो दुरुपपाद इति दर्शितम्। अतो नाङ्गान्तराणि स्पर्धितुमर्हति व्याकरणम्। निष्कारणषडङ्गवेदाध्ययनविधौ च निष्कारणग्रहणं यथा प्रयोजनशैथिल्यं सूचयति न तथा प्रयोजनवत्ताम्। श्रुतिलिङ्गाद्यङ्गत्वप्रमाणापेक्षया षडङ्गता वर्णयिष्यते। एतेन "तस्माद् 10

---

**निष्कारणः षडङ्गो वेदः** इति। निष्कारणो दृष्टपशुपुत्रादिकारणमनपेक्ष्यावश्यन्तया इत्यर्थः। **अनितरेतरेति** अनितरेतरसाध्योपकारनिर्वर्तकत्वं शिक्षादीनां प्रथमत एव दर्शितम्। सर्वथा नास्ति व्याकरणप्रयोजनम्, तथा च निष्कारणशब्देन तदेव प्रयोजन-रहितत्वमुक्तमिति। पूर्वपक्षवादी कुशकाशावलम्बनेनापि स्वार्थसिद्धिमाह; तदेव **निष्कारणषडङ्गवेदाध्ययनविधौ च**इत्यादिना प्रदर्शितम्। **श्रुतिलिङ्गादी........स बभूवेति**। 15 यो जनः कां दिशं प्रपद्ये इति बुद्धिं संश्रितः कान्दिशीक उच्यते, न चास्य शब्दस्य व्युत्पादकं किञ्चिल्लक्षणमस्ति। भ्राजेश्च तच्छीलादिषु 'इष्णु' प्रत्ययो मुनित्रयेणापि न दृष्ट इति तदपेक्षया भ्राजिष्णुरित्यसाधुः। गणनीयो गण्य इति च गणयतेः "अचो यत्" इति यति, "णेरनिटि" इति णिलोपे सति भवति, तत्र प्राप्तस्य णिलोपस्याकरणाद् गणेय इत्यसाधुः। वरेण्यशब्दश्च स वरणीयो वरेण्य इति कृत्यप्रत्ययसमानार्थतया 20 'पुण्यो महाब्रह्मसमूहजुष्टसन्तर्पणो नाकसदां वरेण्यः' इत्यादौ यौगिकत्वेन प्रयुज्यते, न च तथा व्युत्पादकमस्य समस्ति। एतच्च उणादिप्रत्याख्यानपक्षाश्रयेणोक्तम्। अप्रत्याख्या-नेऽपि वा "अवद्यपण्यवर्या" इति सूत्रस्यानर्थता दृष्टा। अथ चौणादिकानां रूढिशब्दत्वाद् व्युत्पत्तिनिमित्ततयैव तत्र क्रियाकारकसम्बन्ध आश्रीयते, न प्रवृत्तिनिमित्ततया अपि, मा भूद् गमनक्रियायोगात् पुरुषादावपि गोशब्दप्रवृत्तिप्रसङ्ग इति, तदयं यद्यपि 25 वरेण्यशब्द उणादौ सिद्ध्यति तथापि यस्तत्र सिद्ध्यति स क्वचिदेव य........ कृतिर्न शब्दस्य।

ब्राह्मणेन न म्लेच्छितवै । म्लेच्छो ह वा एष यदपशब्दः'' इति, ''एकः शब्दः सम्यक् प्रयुक्तः स्वर्गे लोके कामधुग् भवति'' इति, ''आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्'' इति, ''तस्मादशेषा व्याकृता वागुच्यते'' इत्यादिवचनान्तरमूलतापि व्याकरणस्मृतेः प्रत्युक्ता ।
5 शिष्टप्रयोगमूला तर्हि व्याकरणस्मृतिरस्तु वैद्यकस्मृतिरिवान्वयव्यतिरेकमूलेति चेत्, के शिष्टा इति पृष्टो वक्तुमर्हसि ? किमभिमतगवादिसाधुशब्दव्यवहारिणो गाव्याद्यपशब्दवादिनो द्वयं वा ? आद्ये पक्षे दुरुत्तरमितरेतराश्रयत्वम्, शिष्टप्रयोगमूलं व्याकरणं व्याकरणविदश्च शिष्टा इति । न ह्यशिक्षितव्याकरणास्तत्संस्कृतगवादिशब्दप्रयोगकुशला भवन्ति । मध्यमपक्षे
10 गाव्यादिव्यवहारिणः शकाटिकाः शिष्टाः, तत्प्रयोगमूलं गवादिशब्दसंस्कारकारि व्याकरणमिति व्याहतमिव लक्ष्यते । तृतीये तु पक्षे गोगाव्यादिशब्दप्रयोगसाङ्कर्यात् किंफलं व्याकरणं भवेत् ? वैद्यकस्मृतेस्तु युक्तमन्वयव्यतिरेकमूलत्वं तथा दर्शनादिति । तदनयापि दिशा न प्रयोजनवत्तामुपयाति व्याकरणम् । अतश्च निष्प्रयोजनं व्याकरणम्, तत्सूत्रकृता स्वयं प्रयोजन-
15 स्यानुक्तत्वात् । न ह्यथातो धर्मजिज्ञासा, प्रमाणादिज्ञानात् साधर्म्यादिज्ञानाद् वा निःश्रेयसाधिगम इतिवत् तत्र सूत्रकारः प्रयोजनं प्रत्यपीपदत् । सुज्ञानत्वान्न प्रत्यपादयदिति चेत्, किमुच्यते सुज्ञानत्वम् यदद्यापि निपुणमन्वेषमाणा अपि न विद्मः, यत्र चाद्यापि सर्वे विवदन्ते ।

किञ्च धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थास्तेषामन्यतमः किल
20 व्याकरणस्य प्रयोजनमाशङ्क्येत । तत्र न तावद्धर्मस्तस्य प्रयोजनम् । स हि यागदानहोमादिस्वभावस्तज्जनितसंस्कारापूर्वरूपो वा वेदादेवावगम्यते । चोदनैव धर्मे प्रमाणमिति तद्विदः। चोदनामूलमन्वादिस्मृतिसदाचरणेतिहासगम्यो वा कामं भवतु, व्याकरणस्य तु स्वतस्तदुपदेशसामर्थ्यासम्भवादङ्गस्वभावाख्यातत्वाच्च न तत्प्रयोजनता युक्ता । प्रयोगनियमद्वारकस्तु धर्मस्तस्य
25 प्रयोजनतया निरस्त एव । अर्थप्रयोजनता वार्तादण्डनीत्योः प्रसिद्धा, न व्याकरणस्य । अधीतव्याकरणा अपि दरिद्राः प्रायशो दृश्यन्ते । न तस्यार्थः प्रयोजनम् । कामस्तु वात्स्यायनप्रणीतकामशास्त्रप्रयोजनतामुपगतो न

व्याकरणसाध्यतां स्पृशति । मोक्षे तु द्वारमात्मादिपरिज्ञानमाचक्षते क्लेशप्रहाणञ्च अध्यात्मविदः, षत्वणत्वपरिज्ञानं पुनरपवर्गसाधनमिति न साधीयान् वादः । तदेवं धर्मादिचतुर्वर्गादेकोऽपि न व्याकरणसाध्य इति स्थितम् ।

अथोच्यते, सकलपुरुषार्थसार्थसाधनोपदेशविधेर्वेदस्य व्याकरणमवलग्नकमङ्गम्, अतस्तत्प्रयोजनेनैव प्रयोजनवदिति न पृथक् प्रयोजनान्तरमाकाङ्क्षतीति, तदपि परिहृतम् । या हि साधुशब्दोपदेशदिशा तस्य तदङ्गता, सा व्युदस्तैव । न चाङ्गस्यापि सतस्तत्तत्सेवाद्वारमपरमस्तीति निष्प्रयोजनमेव चेदृशम् । न चानुपकारकमङ्गमपि भवितुमर्हति, न हि तत् प्रधानेनाङ्गीक्रियते । नियोगगर्भो हि विनियोग इति न्यायविदः ।

यान्यपि रक्षादीनि प्रयोजनानि व्याकरणस्य व्याख्यातृभिरभिहितानि तेषामन्यतोऽपि सिद्धेर्न व्याकरणशरणता युक्ता । रक्षा तावदध्येतृपरम्परात एव सिद्धा । मनागपि स्वरतो वर्णतो वा प्रमाद्यन्तं किञ्चिदधीयानमन्ये अध्येतारो मा विनीनशन् । श्रुतिमित्थमुच्चारयेदित्याचक्षाणाः शिक्षयन्तीति रक्षितो भवति वेदः । ऊहस्तु त्रिविधो मन्त्रसामसंस्कारविषयस्तत्र सामविषयो यौक्तिकशास्त्रादवगम्यते याज्ञिकप्रयोगवादाद् वा । मन्त्रविषयोऽप्येवम् । प्रोक्षणादिसंस्कारविषये तु तस्मिन् व्याकरणमपि किं कुर्यात् ? आगमस्त्वनन्तरमेव परीक्षितः । आगमगम्यञ्च प्रयोजनं भवति, न चागमः प्रयोजनम् । लाघवन्तु किमुच्यते ? बाल्यात् प्रभृति बहुषु वहत्स्वपि वत्सरेषु यन्नाधिगन्तुं शक्यते व्याकरणं स चेत् लघुरुपायः, कोऽन्यस्ततो गुरुर्भविष्यति ? सन्देहोऽपि न कश्चिद् वेदार्थे व्याकरणेन पराणुद्यते । प्रतिवाक्यमुपप्लवमाननानाविधसन्देहसहस्रविस्रंसनफला मीमांसा दृश्यते, न व्याकरणम् । तेन रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति यदुच्यते, तन्न सुव्याहृतम् ।

यान्यपि प्रयोजनान्तराणि भूयांसि 'तेऽसुरा हेलयो हेलयः' इत्युदाहरणदिशा दर्शितानि तान्यपि तुच्छत्वादानुषङ्गिकत्वाच्चोपेक्षणीयानि । तदुक्तम्,

अर्थवत्त्वं न चेज्जातं मुख्यैरपि प्रयोजनैः ।
तस्यानुषङ्गिकेष्वाशा कुशकाशावलम्बिनी ॥ इति ।

**न वा व्याकरणस्य शब्दादिसंस्कारकत्वम्**

अथ कथ्यते, किं प्रयोजनान्तरपर्येषणया, शब्दसंस्कार एव व्याकरणस्य प्रयोजनमिति; तदपि व्याख्येयम् । कः शब्दस्य संस्कारः ? तेन वा कोऽर्थ इति । न हि व्रीहीणामिव प्रोक्षणम्, आज्यस्येवावेक्षणम्, अग्नीनामिवाधानं शब्दस्य 5 कश्चन व्याकरणकारितः संस्कारः सम्भवति । नैयायिकादिपक्षे च क्षणिका वर्णास्तेषामुच्चारितनष्टानां कः संस्कारः ? शरादेरिव न वेगः, नात्मन इव भावना, न शाखादेरिव स्थितिस्थापक इति । वर्णानां नित्यत्वपक्षेऽपि क्षणिकाभिव्यक्तित्वमपरिहार्यम् । अतस्तेष्वपि कः संस्कारः ? संस्कारश्च वर्णस्य वा पदस्य वाक्यस्य वेति विकल्प्यमानो न कस्यचिद् व्यवस्थापयितुं 10 शक्यः । वैयाकरणानान्तु निरवयववाक्यविदां पदवर्णयोः संस्कारः सुतरामनालम्बनः । 'अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत्' । अन्यान्येव पदानि संस्करिष्यन्त इति चेत्, न, असतां संस्कारस्यानुपपत्तेः । आह च,

वाक्येभ्य एव परिकल्पनया विभज्य
संस्कर्तुमिच्छति पदानि महामतिर्यः ।
15 उच्चित्य सौरभविभूषितदिक्षु कस्मा-
दाकाशरूढकुसुमानि न संस्करोति ।। इति ।

न च शब्दसंस्कारकर्तव्यतोपदेशे कश्चिदनारभ्याधीतो वा प्रकरणपठितो वा विधिरुपलभ्यते, यमनुरुध्यमानाः शब्दस्योपयुक्तस्य 'चात्वाले कृष्णविषाणां प्रास्यति' इतिवदुपयोक्ष्यमाणस्य वा 'व्रीहीन् प्रोक्षति' इतिवत् कञ्चन 20 संस्कारमनुतिष्ठेम । 'स्वाध्यायोऽध्येतव्यः' इति विधिरामुखीकरणेन माणवकस्य वा ग्रन्थस्य वा विधिः संस्कारमुपदिशतीति महती चर्चैषा तिष्ठतु । सर्वथा नायं व्याकरणनिर्वर्त्यः । प्रत्ययागमवर्णलोपादेशादिद्वारकशब्दसंस्कारोपदेश-शङ्कामपि च नयतीत्यास्तामेतत् । न च शब्दप्रयोगोपायस्थानकरणादेः कोष्ठचस्य मातरिश्वनो वा श्रोत्रेन्द्रियस्य वा तदुपलब्धिकरणस्य प्रयोक्तु-25 रात्मनो वा मनसो वा बुद्धेर्वा कश्चिद् व्याकरणेन संस्कारक्लेशः शक्यक्रिय इति तत्कारकेऽपि संस्कारेऽनुपाय एव व्याकरणम् । न च स्थूलपृषतीत्यादि-कतिपयशब्दव्युत्पादनमेव व्याकरणप्रयोजनतया वक्तव्यम्, तस्यापि कल्पसूत्राद्यु-पायान्तरलभ्यत्वात् ।

यश्चाह "तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते", तस्य सोपहास-मुत्तरं वार्त्तिककार एव दर्शितवान् "तत्त्वावबोधः शब्दानां नास्ति श्रोत्रेन्द्रि-यादृते" इति ।

अपि च व्याकरणेन कृतेऽपि शब्दसंस्कारे तदुपदिष्टसंस्कारबहिष्कृतशब्द-प्रयोगान् विदधतस्तत्र तत्र शिष्टाः पूर्वेऽपि दृश्यन्ते । सूत्रकारस्तावत् 'जनिकर्तुः प्रकृतिः, तत्प्रयोजको हेतुश्च, तृजकाभ्यां कर्तरि' इति प्रतिषिद्धं षष्ठीसमासं जनिकर्तुरिति धातुनिर्देशैकविषयं जनिशब्दमर्थनिर्देशेऽपि प्रयुक्तवान् । वार्त्तिक-कारोऽपि 'दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्' इति तथैव प्रयुक्तवान्, आन्यभाव्यन्तु कालशब्दव्यवायादिति, क्लेशेन समासे च, तेन समाससंज्ञया

---

**दम्भेर्हल्ग्रहणस्येति ।** "हलन्ताच्च" इत्यत्र सूत्रे हलन्तो हलवयवो य इक्, ततः परस्य सनः कित्त्वं भवतीत्यमुं पक्षं "कथं हि इको नाम हलन्तः स्यादन्यस्यान्यः" इति निराकृत्य समीपवचनमन्तशब्दमाश्रित्य इको यो हल् अन्तः समीपस्ततः परस्य सनः कित्त्वमिति सूत्रार्थो व्याख्यातः । एवमेव पुनर्वीप्सतीत्येतदुदाहरणाभिप्रायेण चोदितम् । "एवमपि दम्भेर्न सिद्ध्यति । यो ह्यत्र इक्समीपो हल् न तस्मादुत्तरः सन्, नासौ इक्समीपे" इति । तत एतच्चोद्यपरिहाराय वार्त्तिकं पठितम् "एवं तर्हि दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम् हल् इति हल्जातिर्निर्दिश्यते इक उत्तरा या हल्जातिरिति" । **आन्यभाव्यन्तु कालशब्दव्यवायादिति ।** तत्रानुवृत्तिनिर्देशे "अस्य च्वौ" इत्यादौ आक्षरसमाम्नायिकस्याकारस्याभावात् सवर्णग्रहणमाप्नोति अण्त्वात् तस्याकारस्य ततश्च मालीभवति इत्यादौ ईत्त्वं न प्राप्नोति अणि सवर्णान् गृह्णाति । आकारसमाम्नायिकश्च अण् इतरस्तदुक्तम् "अनुवृत्तिनिर्देशे सवर्णाग्रहणम् अनण्त्वात्" इति । एवं चोदयित्वा "एकत्वादकारस्य सिद्धम्" इत्यादिना सर्वाकाराणामेकतां प्रतिपाद्य पुनरभिहितम् "आन्यभाव्यं तु" इति । सर्वाकाराणा-मान्यभाव्यं भिन्नत्वम् । कुतः ? कालव्यवायाच्छब्दव्यवायाच्च । दण्ड अग्रम् इत्यत्र एकमकारमुच्चार्य कालव्यवायेन द्वितीयोऽकारः । तथा दण्ड इत्यत्र णकारडकारव्यवधाने-नोच्चारणमकारस्य दकारपरोच्चारितस्य । भिन्नानाञ्च कालशब्दव्यवधानं दृष्टं नाभिन्नानामिति । यथा असंहितायाम् 'अ-इ-उ' इत्यादीनां भिन्नानां कालव्यवायः । दृतिरित्यत्र च भिन्नयोः ऋकारेकारयोस्तकारेण शब्देन व्यवायो दृष्ट इति । **क्लेशेन समास इति ।** दुरुपपादः समास एव तावदत्र क्लेशेन कल्प्यः, तस्मिंश्च कल्पिते समास-

गुणवचनसंज्ञाबाधितत्वादगुणवचनत्वाद् ब्राह्मणादिगणापठितत्वात् 'गुणवचन-ब्राह्मणादिभ्यः' इत्यप्राप्तमेव ष्यञं कृतवान् । भाष्यकारोऽपि न 'अविरविकन्या-येन' इति द्वन्द्वगर्भे तत्पुरुषे प्रयुयुक्षिते 'सुपो धातुप्रातिपदिकयोः' इति प्राप्तमपि लोपं न कृतवान्, अन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहार इति । अत्र
5 च "अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्" इति प्राप्तमपि णमुलमुपेक्ष्य क्तप्रत्ययं प्रायुङ्क्त । तदिदं त्रिमुनिव्याकरणस्य त्रयोऽपि च मुनयः स्खलन्तीति कमुपालभेमहि । मन्वादिग्रन्थेष्वपि कियन्तोऽपशब्दाः गण्यन्ते, ज्ञातारः सन्ति मे इत्युक्त्वा इति मनुना, अक्षिणी अज्येत्याश्वलायनेन, मूर्धन्याभिजिघ्राण-मिति गृह्यकारेण । तदनन्तरं 'तुभ्यञ्च राघवस्य' इति वाल्मीकिना, जन्मे
10 जन्मे यदभ्यस्तमिति द्वैपायनेन प्रयुक्तम् । आह च "अन्तो नास्त्यपशब्दाना-मितिहासपुराणयोः" इति ।

## व्याकरणशास्त्रेण शब्दव्याकृतौ दोषप्रदर्शनम्

अथवा किमनेन पुराणपुरुषपरिवादेन ? सर्वथायं वस्तुसंक्षेपः । क्षामोऽपि

---

संज्ञया गुणवचनसंज्ञाबाधो बलादायातीति । तथाहि यद्यन्यभावो भवतीति । भावश्च
15 अन्यभाव इति । एवं समासः क्रियते तद्वास्तवगुणवचनत्वाभावाद् ब्राह्मणादिगणापाठाच्चास्य ष्यञोऽनुत्पत्तिः, भवनं भावेनेत्युक्तम्, अविश्च अविकश्चेति द्वन्द्वे समासे सुपो लुक् प्राप्तः । **अन्यथा कृत्वा चोदितमिति** । तत्र तत्र प्रदेशे चोद्यानुगुणं परिहारमपश्यन् भाष्यकारो अन्यथाकारं चोदितमन्यथाकारं परिहारः' इति वक्तव्ये "अन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहारः" इति ब्रवीति । "अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्" इत्यनेन हि
20 सूत्रेणात्र णमुल् प्राप्नोति । गतार्थत्वात् प्रयोगानर्होऽपि यः प्रयुज्यते स सिद्धाप्रयोग-स्तादृशश्चात्र करोतिर्यावदेवोक्तं भवति, अन्यथा चोद्यमन्यथा परिहार इति । तावदेवोक्तं भवति, अन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहार इति । **ज्ञातारः** इति 'ज्ञातारः सन्ति मम' इति वाच्ये **'ज्ञातारः सन्ति मे'** इत्युक्तम् । 'अक्षिणी अक्त्वा' इति च वाच्ये **'अज्य'** इत्युक्तम् । 'अभिघ्राणम्' इति वक्तव्ये **'अभिजिघ्राणम्'** इत्याह ।
25 'यदन्तरं सिंहशृगालयोर्वने तदन्तरं तव च राघवस्य च' इति वाच्ये छन्दोवशात् **'तुभ्यञ्राघवस्य च'** इत्यभ्यधात् । 'जन्मनि' इति प्रयोक्तव्ये **'जन्मे'** इत्युक्तम् । **"अन्तो नास्त्यपशब्दानाम्"** इत्यस्योत्तरमर्धम्—"तथोभाभ्यादिरूपाणां हस्तिशिक्षादि-

कश्चिदुपयोगो न लोके वेदे वा व्याकरणस्य विद्यत इति। किञ्चान्यद् 'अथ शब्दानुशासनम्' इत्युपक्रम्य केषां शब्दानामिति पृष्ट्वा लौकिकानां वैदिकाना-ञ्चेति प्रतिज्ञाय न लौकिकाः सर्वे व्याकर्तुं पारिताः शब्दाः, नापि वैदिकाः। तथा हि तेषां व्याक्रिया प्रतिपदं वा विधीयते लक्षणतो वा। प्रतिपदं तावदनु-शासनमघटमानं स्याच्छब्दानाम्। तथा चाहुः 'बृहस्पतिरिन्द्राय दिव्यवर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच न चान्तं जगाम' इति। नापि लक्षणतस्तत्सम्भवः, न हि सकलसाधुशब्दवर्गानुगतमपशब्देभ्यश्च व्यावृत्तं गोत्वादिवदिह किञ्चिल्लक्षणमस्तीत्युक्तम्, तत्रैतत् स्यात्। जातिरूपमिह लक्षणमभिधित्सितमपि तु कथमनुशासनमिति प्रश्नपूर्वकमुक्तं प्रकृत्यादि-विभागकल्पनया सामान्यविशेषवता लक्षणेनेति च। तथा हि "कर्मण्यण्" इति सामान्यलक्षणम्, कर्मण्युपपदे धातुमात्रादण्प्रत्ययो भवतीति। तेनानेन सामान्य-विशेषवता लक्षणेन कुम्भकारो नगरकार इत्यादयो गोदः कम्बलद इत्यादयश्च भूयांसः शब्दा अक्लेशेनैव व्याकरिष्यन्त इत्युच्यते। प्रकृत्यादि-विभागकल्पनयेत्यत्र यद् वक्तव्यं तत् प्रागेव सविस्तरमभिहितम्। सामान्य-विशेषवता लक्षणेनेति तु सम्प्रति निरूप्यते, तदपि व्यवस्थितं लक्षणं न दृश्यते।

तथा हि धातोः पुरः प्रत्यया भवन्तीति लक्षणं कुर्वता वक्तव्यं कः पुनरयं धातुर्नामेति। ननु भूवादयो धातव इत्युक्तमेव तत्स्वरूपम्। केचन शब्दाः कयाचित् परिपाट्या पठितास्ते धातुसंज्ञया लक्ष्यन्ते, तेभ्यः परे तिङः कृतश्च प्रत्यया भवन्तीति। सत्यमुक्तमेतत्, किन्त्वेवं पाठे कृतेऽपि न धातुस्वरूपनिर्णय

---

कारिणाम्" इति। हस्तिशिक्षाकारिणो हि पालकाप्यादय उभाभ्यां दन्ताभ्यां यः प्रहारस्तमुभाभ्यशब्देन व्यवहरन्ति, न च तस्य लक्षणेन सिद्धिरस्ति। **सामान्यविशेषवता लक्षणेन** उत्सर्गापवादरूपेण लक्षणेन शास्त्रेण। कथम्? **प्रकृत्यादिविभागकल्पनयेति**। असतामपि प्रकृतिप्रत्ययादीनां या विभागकल्पना 'अयं प्रकृतिविभागः अयं प्रत्ययः' इति बुद्ध्या समुल्लेखनतया। **प्रकृत्यादिविभागकल्पनया' इत्यत्र यद् वक्तव्यमिति**। प्रकृत्यादीनां पारमार्थिकत्वात् काल्पनिकत्वाभावात्।

उपवर्णितो भवति । तथा च गण्डतीत्यपि प्राप्नोति धातोस्तिङ्प्रत्ययविधानात् । घट चेष्टायामिति धातुः, अस्ति च घट इति प्रातिपदिकम् । अम रोग इति धातुरनुबन्धत्यागादमिति भवति, अस्ति च द्वितीयाया विभक्तेरेकवचनमिति । भूशब्दो धातुः, अस्ति भू प्रातिपदिकम् । यती प्रयत्न इति लुप्तानुबन्धो यदिति 5 धातुः, अस्ति च यदिति सर्वनामपाठप्रसिद्धरूपम् । अत्राविशेषादधातोरपि घट-भू-यच्छब्दरूपात् परे तिङ्प्रत्यया भवेयुः । क्रियावचनो धातुरिति चेत्, भवति-तिष्ठतीत्यादीनामसाधुत्वं प्राप्नोति, गमेश्चानर्थकः पाठः । उभयं तर्हि धातुलक्षणं पाठः क्रियावचनता चेति भवितुमर्हति, तदपि हि व्यस्तं वा लक्षणं समस्तं वा ? व्यस्तपक्षे भवत्यादौ क्रियावचनत्वस्य द्वितीयस्य लक्षणस्य चाभावादधातुत्वमेव 10 स्यादिति । एवं धातोः प्रकृतेरनिर्णीतत्वात् कुतः परे तिङश्च कृतश्च प्रत्यया उत्पद्येरन् ? समस्तपक्षे[1] । किञ्च केचन तिङ्प्रत्ययाः कालाद्युपाधयो न तद्वचनाः । अनुक्तेषु च कालादिषु तत्पूर्वकं वर्तमाने लड् भविष्यति लिङ्भूते लङ्ङिति नियमरूपमशक्यम् । उच्यतां तर्हि तिङ्भिः कालादय इति चेत्, न, भाष्यविरोधात् । उक्तं हि भगवता भाष्यकारेण भूते धात्वर्थं इति ।

15 **तथा च गण्डतीत्यपि प्राप्नोति** । गण्डशब्दसिद्ध्यर्थं तस्य प्राङ्नीत्या 'गण्डति' इति स्वमतिकल्पितं रूपं साधु प्रसज्येतेति गण्डतीत्येवमादीनामपि साधुत्वं प्राप्नोति । 'घटं भूयत इति च' इति प्राभाकरी टीका साधुशब्दाधिकरणे तत्र घटंभूयत् इति फक्किकां व्याख्यातुमाह **"घट चेष्टायाम्"** इत्यादिना । घटश्च अम् च भूश्च यश्च तश्च घटंभूयत् । तस्माद् घटंभूयतोऽपि प्राप्नोति प्रातिपदिकेभ्योऽपि घटादिभ्यः 20 प्रत्ययास्तिङादयः प्राप्नुवन्तीत्यर्थः । अत्र च 'घटम्' इति 'अमः' द्वितीयैकवचनानुकरणत्वात् प्रकृतिप्रत्ययाः । **कालाद्युपाधयः** इति । लिङ्लोड्वर्जिताः कालोपाधयः । यदा धात्वर्थः कालविशिष्टो भवति, तदा तथाविधे धात्वर्थे वर्तमानाद् धातोस्ते विधीयन्ते, न पुनस्तैरसौ कालः प्रतिपाद्यत इत्यर्थः । **अनुक्तेषु कालादिष्विति** । अयमर्थः, प्रत्ययस्तावत् कालवचनो नाङ्गीकृतः, धातोश्च क्रियामात्रावगतिः, तद्भूतादेः 25 कालस्यानवगमादयं नियमः "वर्तमान एव लट्" इत्यादिको निरूपयितुं व्यवस्थापयितुं न शक्यते । तदर्थावगतिपूर्वकत्वादस्येत्यर्थः । **उच्यतां तर्हि कालादय इति** । वृत्तिकृन्मतमाशङ्क्याह, **न भाष्यविरोधादिति** । अथास्तु क्रियावद् धातुवाच्यत्वमेव

१. अत्र ग्रन्थस्त्रुटित इति ज्ञेयम् ।

न च धात्वर्थेनैव धात्वर्थो व्यवस्थापयितुं शक्यते । लिङादयश्च सुतरामनधि-
गम्यमानविषयाः । ते हि विध्यादावर्थे विधीयन्ते । स च विधिरूपोऽर्थः स्वरूपत-
श्चोपाधितश्च न शक्यो निर्णेतुमिति ।

तथा कारकानुशासनमपि दुःस्थम् । "ध्रुवमपायेऽपादानम्" इत्युच्यते ।
तत्र ध्रुवस्य वृक्षादेर्वृक्षात् पतितो देवदत्त इति पतनक्रियायामवलग्नं कृशमपि न　　5
कारकत्वमुत्पश्यामः । क्रियायोगो हि कारकम् । स च वृक्षे नोपलभ्यत इति ।
सार्थाद्धीनो रथात् पतित इति सार्थरथयोः क्रियोपलभ्यते । न वृक्षवन्निश्चल-
त्वमिति चेत्, सत्यम् । स्वरसप्रवृत्ता तयोरस्ति क्रिया हाने याने च । पादप-
निर्विशेषावेव सार्थरथौ । न च यदेकस्यां कारकं तत् सर्वासु कारकं भवत्यति-
प्रसङ्गात् ।　　10

---

भाष्यविरोधाद् भूतादीनाम् । तदपि च कुतः? भाष्यविरोधादेव । तदा ह्युभयो-
र्धात्वर्थत्वम्, न चैकस्यैव विशेषणविशेष्यभाव उपपद्यते । तदाह **न च धात्वर्थेनैव धात्वर्थ** इति । यदि हि प्रत्ययेन भूतादिर्न प्रतिपाद्यते, अपि तु धातुनैवेति मतं तदानीं
क्रियावत् कालोऽपि धात्वर्थः प्राप्नोति । न च स एव धातुवाच्यः कश्चित् क्रियारूपो
व्यवस्थाप्यो विशेष्यः कश्चिच्च व्यवस्थापको विशेषणकालः; एकशब्दवाच्यस्य　　15
द्वैरूप्यादर्शनात् । दण्डयादौ हि दण्डशब्देन विशेषणं दण्डः प्रतिपादितः, इना तु विशेष्यः
पुरुषो न तूभौ दण्डशब्देनैवेति । **स च विधिरूपोऽर्थः स्वरूपत** इति । विधिशब्देन तैः
प्रैषः प्रतिपादितः, तत्र विधिनिमन्त्रणामन्त्रणाधीष्टेष्वपि चतुर्ष्वपि प्रेरणारूपस्यानुगमात्
कथं निश्चीयेत अयं प्रैषः, इदं निमन्त्रणम् इत्यादि । अथोपाधिभेदात् तेषां भेदो
व्यवस्थाप्यते । ते च समहीनज्यायोमनुष्यप्रतिपादकपदविशेषा उपाधयः, तद्वशादयं　　20
प्रैषे लिङादिर्व्यवस्थाप्यत इति । यदि चैवं तेषामर्थो व्यवस्थाप्यते तर्ह्येवं व्यवस्थाप्य-
मानो योऽर्थः पदान्तरसन्निधानवशात् स तेषामर्थो न भवति । यथा 'अश्वमानय
गमिष्यामस्तेन' इति पदान्तरयोगाद् योऽश्वार्थो लब्धः, स यथा अश्वशब्दार्थो न भवति
तद्वदिति ।

**यदेकस्यां क्रियायां कारकमिति** । न हि गमेः कर्ता पचतीत्यत्र　　25
प्रतीयते ।

"कर्मणा यमभिप्रैति तत् सम्प्रदानम्" इत्यत्र कर्मशब्दः क्रियावचनो वा स्यादीप्सिततमकारकवाची वा ? आद्ये पक्षे क्रियया सर्वकारकाण्यभिप्रेयन्त इति सम्प्रदानतां प्रतिपद्येरन् । न चोपाध्यायस्य कञ्चिदभिप्रेयमाणस्य व्यापारमुत्पश्याम इत्यसावकारकमेव तत्र स्यात् । प्रतिग्रहस्तु क्रियान्तरमेव ।
5 तत्र चोक्तम्, क्रियया चाभिप्रेयमाणं फलं भवति । न द्वितीयः, कारकसम्बन्धित्वेन कारकस्य कारकत्वानुपपत्तेः । क्रियासम्बन्धितया हि कारकं कारकं भवति, न कारकसम्बन्धितया, करोतीति कारकमिति व्युत्पत्तेः ।

"साधकतमं करणम्" इति तमबर्थानवधारणादनुपपन्नम् । अनेककारकसन्दर्भसन्निधाने कार्यमात्मानं लभते, तेषामन्यतमव्यपगमेऽपि न लभत इति ।
10 ततः किमिव कारकमतिशयशबलितवपुरिति कं तमबर्थं मङ्गलकलशेनाभिषिञ्चामः । प्राचुर्येण प्रधानं कार्यं प्रति व्यापारयोगित्वमित्यादि सर्वसाधारणम् । न काष्ठैकनिष्ठमिति काष्ठैः पचतीति कथं तेषामेव करणत्वम् ।

"आधारोऽधिकरणम्" इति यदुच्यते तत्र वक्तव्यं कस्याधार इति, क्रियायाः कारकस्य वा ? यदि क्रियाधारत्वमधिकरणलक्षणम्, अशेषकारकाणामधिकरण-
15 संज्ञा प्रसज्येत क्रियायोगाविशेषात् । अथ यत्र स्थाल्यादौ श्रितं तण्डुलादि कर्म तदधिकरणम् ? समे देशे पचतीति न स्यात्, अप्सु पचतीति स्यात्, कटे स्थितो भुङ्क्त इति चापभ्रंशो भवेत् । कर्तुर्हि तदधिकरणं न कर्मणः । कर्तृकर्मणोः क्रियाश्रययोर्धारणाधिकरणत्वे अधिकरणमिति चेत्, उभयाधारत्वं न कटस्य न स्थाल्या इति द्वयोरप्यधिकरणता हीयते । एकैककारकाधारत्वे तु तल्लक्षणे
20 परस्परापेक्षया पुनस्तत्स्वरूपसाङ्कर्यं भवेत् । यदि तु सकलकारकाधारत्व-

---

**क्रियया सर्वकारकाण्यभिप्रेयन्ते** सम्बध्यन्ते । **न चोपाध्यायेति** । क्रियया यदभिप्रायेण सम्बन्ध उपाध्यायस्य तत्रासौ न व्याप्रियते । अथासौ प्रतिगृह्णात्येतदेवास्य व्यापृतत्वम्, नेत्याह **प्रतिग्रहस्त्विति** । **तत्र चोक्तम्** । नान्यत्र क्रियायां कारकमन्यत्र भवति, अतिप्रसङ्गादिति । **क्रियया चाभिप्रेयमाणमिति** । सूत्रे हि कर्मणा ददाति-
25 कर्मणः क्रियायाः करणत्वेन निर्देशाद् 'यम्' इति च द्वितीयया ईप्सिततमस्य कर्मणो निर्देशात् फलं कर्म भवति कारकं यजेरिव स्वर्ग इत्यर्थः ।

**परस्परापेक्षया पुनः स्वरूपसाङ्कर्यमिति** । स्थाल्यां पचतीति । अत्रासत्यपि

मधिकरणलक्षणम्, स्थाल्यामोदनं पचतीति न स्यात्, सकलकारकानधिकरणत्वात् स्थाल्याः । अधिकरणस्य चाकारकत्वप्रसक्तिः, न ह्यधिकरणमधिकरणाश्रितं भवति । मध्याह्ने स्नाति रात्रावश्नाति पूर्वस्यां दिशि विहरतीति कालादीनाम-व्यापारत्वादकारकत्वमेव भवेत् । तथा च सत्येते प्रयोगा असाधवः स्युः ।

"कर्तुरीप्सिततमं कर्म" इति साधकतमवदिहापि न वाचकोऽयमतिशयानः, सर्वकारकाणां क्रियार्थितया कर्तुरीप्सिततमत्वादर्थं यदर्थं क्रिया तदर्थं कर्तुरीप्सितं तदर्थं त्वन्यदिति तत्र सम्प्रत्यय इत्युच्यते, तर्हि तस्य कारकत्वमेव न युक्तम् । क्रियासम्पादकं हि कारकमुच्यते, क्रिया-सम्पाद्यन्तु फलं भवति, न कारकम् । कारकञ्च क्रियया चाप्तुमिष्टतममिति च विप्रतिषिद्धम् ।

अथाभिधीयते । क्रियोपयोगयोग्यतानिबन्धनोऽयं कारकव्यपदेशः, स च विचित्रक्रियोपयोगः, अन्यथा करणस्यान्यथाधिकरणस्यान्यथा सम्प्रदानादेः । इह च क्रियासाध्यत्वेऽप्योदनस्य तत्क्रिययोपयोगित्वमनिवार्यम्, तमनुद्दिश्य क्रियायाः प्रवृत्त्यभावादिति । इत्थमनेन रूपेण तस्य क्रियासाधनत्वात् कारकत्व-मिति । नैतदेवम् । साध्यैकस्वभावस्य सुखादेरपि कारकत्वप्रसङ्गात् । कारकत्व-व्यपदेशो हि न पारिभाषिकः, किन्तु क्रियासम्बन्धनिबन्धनः, क्रियासम्बन्धश्चेदृशो यदुपेयक्रियाया उपायाः कारकमिति, विपर्यये तु कीदृशः कारकभावः । अस्तु तर्हि तण्डुलान् पचतीति मा च भूदोदनं पचतीति, ओदनस्य फलदशानुप्रवेशादिति । उक्तमत्र तण्डुलेष्वपि तमबर्थो न वाचकस्तेषामपि

---

कर्त्राधारत्वेऽधिकरणत्वम्, कटे आस्त इत्यत्र चासति कर्माधारत्व इति । यदि कर्त्रधि-करणत्वं लक्षणमाश्रीयते, तदा स्थाल्यां पचतीत्यत्रासत्यपि प्राप्तं कर्माधिकरणत्वमप्या-श्रयणीयम्, कर्माधिकरणत्वे लक्षणे कट आस्त इत्यत्रासङ्ग्रहात् कर्त्रधिकरणत्वमप्य-पेक्षणोयमिति सङ्करः ।

**कारकञ्च क्रिययाप्तुमिष्टतममिति ।** तथाभूतस्य सम्प्रदानावसरे फलत्वेन प्रतिपादनात् ।

ननु निमित्तपर्यायः कारकशब्दः कारकसूत्रे व्याख्यातः, निमित्तत्वञ्च साध्यत्व-स्यापि कथञ्चित् सम्भवत्येवेति, न, इत्याह **कारकव्यपदेशो हीति ।**

फलसाधनोपयोगाविशेषादिति । ''स्वतन्त्रः कर्ता'' इति किमिदं स्वातन्त्र्यम् ? यदिच्छातः प्रवर्तनमिति चेत्, कुलं पचतीति चैतन्यशून्यतया कुलस्येच्छानुपलम्भादकर्तृत्वं भवेत् ।

अथ यद्व्यापाराधीनः कारकान्तरव्यापारः, स कर्तेत्युच्यते ? सर्वकारकनिर्वर्त्यत्वात् क्रियाया न विद्मः किंव्यापाराधीनः कस्य व्यापार इति, समग्रकारकग्रामस्य परस्परापेक्षत्वात् ।

अथ यः कारकान्तराणि प्रयुङ्क्ते तैश्च न प्रयुज्यते स कर्तेति । तर्हि पुनरचेतनानामकर्तृत्वप्रसङ्गदोषस्तदवस्थ एव । अथ धातुनाभिधीयमानव्यापारः कर्तेति ? तत्रापि न विद्मः कस्य धातुनाभिहितो व्यापारः, सकलकारकवाचित्वात् पचेः । अन्यथा हि सकलव्यापारानभिधायिनि धातौ तदर्थसाधने सर्वेषां सङ्गतिरेव न स्यात् । तथा च सति सर्वकारकाणि कर्तृत्वमेव स्पृशेयुः ।

अथ मतम्, अगुणो धातुनाभिधीयमानव्यापारः कर्तेति ? तदप्यसत् । सकृदुच्चरितो धातुरनेकस्मिन् कारकचक्रे कस्यचिद् गुणत्वेन कस्यचित् प्राधान्येन व्यापारः कथमिव कथयितुं शक्यत इति । ''तत्प्रयोजको हेतुश्च''इति प्रयोज्येनैव व्याख्यातम् । एवं कारके शासनस्याव्यवस्थानात् तदधीनप्रसक्तविभक्ति-

---

**कारकग्रामस्य परस्परापेक्षत्वादिति**। यस्य हि येन विनापि व्यापारनिर्वृत्तिर्न तेन तदपेक्ष्यते ।

**तदर्थसाधने सर्वेषां सङ्गतिरेव न स्यादिति**। यस्मिन् यस्मिन् व्यापारे निर्वृत्ते ओदनलक्षणफलसिद्धिः स सर्वः पचतिशब्दवाच्यः, काष्ठज्वलनेऽपि च निर्वृत्ते तत्फलं सिद्ध्यतीति तस्यापि पचिवाच्यत्वमेव। **तदर्थसाधने** पचत्यर्थसाधने । काष्ठानामपि यदा पचिना व्यापार उपात्तस्तदा पच्यर्थसाधने तानि प्रवर्तन्ते; एवं स्थाल्यादयोऽपि । यदि हि नोपात्तस्तद्व्यापारः पचिना स्यात् तदा 'स्थाली पचति' 'काष्ठानि पचन्ति' इति पचिना तेषां सङ्गतिर्न भवेदिति । एवञ्च देवदत्तव्यापारस्य तेनोपादानाद् यथा देवदत्तस्य कर्तृत्वमेवं सर्वेषां काष्ठादीनामपि स्यात् ।

**प्रयोज्येनैव व्याख्यातम्**। प्रयोज्यस्य स्वतन्त्रस्य कर्तुरनवस्थितत्वात् तस्याप्यनवस्थितत्वमित्यर्थः ।

विधानमपि प्रत्युक्तम् । अपादाने पञ्चमी, सप्तम्यधिकरणे इत्यादिविषय-निरूपणपूर्वकत्वात् तद्विधानस्येति ।

किञ्च, यद्यपि तद्धितसमासानुशासनं तत्सामर्थ्यनियमपूर्वकं समर्थानां प्रथमाद् वा "समर्थः पदविधि" इति परिभाषणात्, तदत्रापि वक्तव्यम् । सामर्थ्यं नाम किमुच्यत इति । एकार्थान्वयित्वमिति चेत्, कुतोऽवगम्यते ? तद्धित-समासप्रयोगप्रतिपत्तिभ्यामेवेति चेत् तर्हि तद्धितसमासप्रयोगप्रतिपत्त्योः सामर्थ्यावगमः, सामर्थ्ये सति तयोः प्रवृत्तिरितीतरेतराश्रयत्वम् । 5

अपि च सामर्थ्यमन्तरेणापि क्वचित् प्रयुञ्जते समासम्, अश्राद्धभोजी दधिघटो गोरथ इति । तथासत्यपि सामर्थ्ये तद्धितप्रयोगाः परिदृश्यन्ते, अङ्गुल्या खनति आङ्गुलिको वृक्षमूलादागतो वार्क्षमूलिक इति न वक्तारो भवन्तीति । एतदप्यसमञ्जसमनुशासनम् । 10

तथा "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इति संज्ञालक्षणमतिव्यापकम्, वाक्यस्यापि प्रातिपदिकसंज्ञाप्रसङ्गात् ।

अथ "कृत्तद्धितसमासाश्च" इति सूत्रान्तरे समासग्रहणं विशेषविधित्वेन वर्ण्यमानं तदितरवाक्यप्रतिषेधाय भवतीति ततो वाक्यनिवृत्तिः सेत्स्यति । यद्येवम्, अधातुरप्रत्यय इति न वक्तव्यं धातुप्रत्यययोरपि तत एव प्रतिषेधसिद्धेः । 15

---

**एकार्थान्वयित्वमिति ।** एकार्थावस्थायित्वमेकार्थीभावः, यत्र पदान्युपसर्जनीभूत-स्वार्थानि निवृत्तस्वार्थानि वा प्रधानार्थोपादानाद् द्व्यर्थानि भवन्ति, अर्थान्तराभिधायीनि वा स एकार्थीभावः । **प्रयोगप्रतिपत्तिभ्यामिति ।** तादृशेऽर्थे प्रयोगात् तादृशस्य चार्थस्य ततः प्रतीतेरिति । 20

**अश्राद्धभोजीति ।** अत्र नञो भुजिना सम्बन्धो न श्राद्धशब्देन इत्यसामर्थ्यम् ; **'दधिघटः'** इत्यत्र च पूर्णशब्दप्रयोगं विना सामर्थ्याभावः । **'गोरथः'** इति । अत्र च युक्त-शब्दं विना ।

**तयोरपि तत एव प्रतिषेधसिद्धेरिति ।** यथा अर्थप्रतिपादने परस्परापेक्षस्य पदसमुदायात्मनो वाक्यस्य समासपदान्निवृत्तिः, एवं धातोरर्थप्रतिपादने प्रत्ययापेक्षस्य, प्रत्ययस्य चार्थप्रतिपादने प्रकृत्यपेक्षस्य तत एव निवृत्तिः सेत्स्यतीति । 25

अथैकार्थतया समानशीलस्य वाक्यस्यैव प्रतिषेधे प्रभवति समासग्रहणं न धातुप्रत्यययोरपि, तदपि दुराशामात्रम्। वाक्यसमासयोरपि 'वा' वचनानर्थक्यकथनेन सार्थशक्त्यव्यवस्थापनादिति।

तदेवं प्रातिपदिकसंज्ञाविषयस्य निश्चयात् तत्प्रकृतिकानां ङ्याप्प्रातिपदिकादित्यधिकृत्य स्वादिप्रत्ययानां विधानमनुपपन्नमित्यलं प्रसङ्गेन। सर्वथा दुर्व्यवस्थितं शब्दानुशासनम्।

यश्च व्याख्यातॄणामुक्तानुक्तदुरुक्तनिरीक्षणप्रयत्नः, यश्च वा-च-क-मात्रावर्णाधिक्यमिषपुरःसरलक्षणपरिचोदनप्रकारः, यच्चेदं व्याख्यातृवचनमिह न भवत्यनभिधानादिति, यच्च व्याप्तिसिद्धौ सरलमुपायमपश्यतामाकृतिगुणवर्णनम्, यच्च पदे बहुलवचनं तत् सुतरामपरिशुद्धिमनुशासनस्य दर्शयतीति।

अन्ये तु शोभेति चीर्णमिति न याति वाक्यं प्रतिभेत्तुमिति

---

**अथैकार्थतया समानशीलस्येति**। य एव राज्ञः पुरुष इत्यस्य वाक्यस्यार्थः स एव राजपुरुष इति समासस्येति। **'वा' वचनानर्थक्यमिति**। विभाषेति समासविधौ यो महाविभाषाधिकारः, स वार्त्तिककृता प्रत्याख्यातः "वा'वचनानर्थक्यं स्वभावसिद्धत्वात्" इत्यनेन। किल तदेतदर्थं क्रियते पक्षे वाक्यमपि यथा स्यादिति। तच्च न वक्तव्यम्। यदि हि वाक्यस्य समासस्य चैकार्थ्यं स्यात् तदानीं साधुत्वेनान्वाख्यातुः समासो वाक्यं निवर्तयेद् गोशब्द इव साधुत्वेनान्वाख्यातो गावीशब्दम्, तेन पक्षे प्रयोगार्थं तत्करणं शोभते। यदा तु वाक्यस्य व्यपेक्षार्थः 'राज्ञः कः पुरुषः, कस्य पुरुषो राज्ञः' इत्येवंरूपो राजपुरुषशब्दस्य चैक एव लोलीभूतोऽर्थस्तदा भिन्नार्थेन राजपुरुषशब्देनाश्वशब्देनेव गावीशब्दवत् कथं निवर्तयितुं शक्येत, येन पक्षे श्रवणाय विभाषारम्भः सफलः स्यादत उक्तम्, स्वभावसिद्धत्वादिति। तदिदमत्र तात्पर्यम्। व्यपेक्षायां समासो न भवत्येकार्थीभावे च वाक्यम्। तेन विभक्तविषयादनयोर्बाध्यबाधकभावो न भविष्यति। अतो नार्थो विकल्पप्रतिपादनेन। एकार्थानां हि विकल्पो भवति, एकार्थता चेह नास्तीति।

**अन्ये तु शोभा चीर्णमिति**। तत्र शोभेत्यत्र स्त्रियामाकारप्रत्ययस्याभिधानाभावादसाधुता अङि तु शुभेति स्यात्। **चीर्णमित्यत्र** प्राप्तस्य इटः अकरणमप्राप्तस्य च ईत्वस्य करणम्। **न याति वाक्यं प्रतिभेत्तुम्** इत्यत्र च यातिशब्दे उपपदे तुमुन्-प्रत्ययः, न

मातुरनुहरतीति फलिनर्बर्हिणौ ह्यद्यासेति कांदिशीक इति भ्राजिष्णुरिति गणेय इति वरेण्य इति लक्ष्यसङ्ग्रहबहिष्कृतस्मृतिसन्देहविपर्ययप्रतिपादकत्वलक्षण-स्खलितं विप्लुतं पाणिनितन्त्रं मन्यमानास्तत्र महान्तमाक्षेपमतानिषुः, स तु स्थूलोदरप्राय इतीह ग्रन्थगौरवभयान्न लिख्यते ।

ननु यदि लक्षणस्य प्रणेता पाणिनिर्न सम्यग् दर्शयत्यत्र विवरणकाराश्च नातिनिपुणदृशः काममन्यः सूचीकृतबुद्धिर्भविष्यति । वृत्तिकाराश्च प्रौढतरदृष्टयो 5

---

च तत्र प्राप्तिरस्ति । यानक्रियायाः प्रतिभेदेन क्रियार्थत्वाभावात् । "शकधृष" इत्यादौ च यातेरपाठात् । **मातुरनुहरतीति** । अत्र च कर्मणि द्वितोयायाः प्राप्ताया अप्रयोगः । **फलिनर्बर्हिणौ ह्यद्यासेत्यत्र** अस्तेरसार्वधातुकेऽपि भूरादेशो न कृतः । बलवान् आयुष्कामं रोहन् वृद्धं........कर्तव्यमिति वार्त्तिकं भाष्यकृता प्रत्याख्यातं तेनैवाभि- 10 प्रायेण "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" इत्यपि सर्वं प्रत्याख्यातं प्रत्युक्तम् "किमर्थं पुनरिदमुच्यते चतुर्थी यथा स्यात् । अथ द्वितीया सिद्धा । सिद्धा कर्मणीत्येव । चतुर्थ्यपि सिद्धा । कथम् , सम्प्रदत्तादाने" इत्येवमादि सर्वं यदावान्तर-क्रियाणां समर्थपदानां विवक्षा तदा क्रियाभिराप्यमानत्वेन गमनक्रियायाः कर्मत्वात् "कर्मणा यमभिप्रैति" इति सम्प्रदानत्वे ग्रामाय गच्छतीति सिद्ध्यति, यदा तु करण- 15 विवक्षा तदा गमनस्य तदपेक्षकर्मत्वाभावाद् ग्रामेणैव, कर्मत्वे ग्रामं गच्छतीति सिद्धेस्तत्र न ज्ञायते शिष्टप्रवाहपतितो विवक्षानियमः क्वास्ति क्वणति........कर्मविवक्षैव ग्रामं गच्छति, ग्रामाय गच्छतीत्यादौ न विवक्षाविवक्षे अवान्तरकर्मणाम्, कटं करोतीत्यादौ त्वविवक्षैवेति । अयं विवक्षाविव....ज्ञापितः स्यात् । तस्माद् भाष्यकाराभिमतप्रत्याख्यानपक्षे नास्याप्रतिपादकत्वलक्षणस्य दोषस्य निवृत्तिः । **स्मृतिसन्देहेति** स्मृतिसन्देहलक्षणं विपर्यय- 20 लक्षणमप्रतिपादकत्वलक्षणञ्च स्खलितं दोषो यस्य तदेवैतत् । विप्लुतञ्चेति विप्लुतत्वं तत्त्वञ्च मूले लक्ष्येण विरोधात् ।........नियमपक्षयोः प्रातिपदिकार्थसङ्ख्याकारकविशेषेषु प्रतिपादनशक्तिरवरोधिता लक्ष्येत क्वचिच्च प्रातिपदिकार्थमात्रमविवक्षि........अतोऽभि-लषेदित्यादौ फलमात्रस्याप्याङ्गस्याधिकारात् । क्वचित् सङ्ख्यामात्रमधि........दिकार्थ- कर्मादि विवक्षितमेव क्वचित् कारकमात्रे च विवक्षा यथा ह्यवदद् ब्राह्मणमुपनयेत 25 इति ।........दिकात् सम्प्रतीयते तस्य चाचार्यकमोप्सितम्, साध्यत्वन्न माणवक इति तस्येप्सितत्वाविवक्षा । **महान्तमाक्षेपमतानिषुरित्यौ**........ ।

भविष्यन्ति, तेभ्यः शब्दलक्षणमविप्लुतमवभोत्स्यामह इति ।

नैतदस्ति । तेषामप्यभियुक्ततराः केचिदुत्प्रेक्षन्त एव दोषम्, तेषामपरे, तेषामप्यपरे । तदेवमनवस्थाप्रसङ्गान्नास्ति निर्मलमनुशासनमिति क्लेशायैव व्याकरणाध्ययनमहाव्रतग्रहणम् । तथा च बृहस्पतिः, प्रतिपदमशक्यत्वात्, 5 लक्षणस्यापि अव्यवस्थानात्, तत्रापि स्खलितदर्शनात्, अनवस्थाप्रसङ्गाच्च मरणान्तो व्याधिर्व्याकरणमित्यौशनसा इति । इहाप्युक्तम्,

दुष्टग्रहगृहीतो वा भीतो वा राजदण्डतः ।
पितृभ्यामभिशप्तो वा कुर्याद् व्याकरणे श्रमम् ॥

अन्यैरप्युक्तम्,

10 वृत्तिः सूत्रं तिला माषाः कटन्दी कोद्रवौदनः ।
अजडाय प्रदातव्यं जडीकरणमुत्तमम् ॥ इति ।

एवं व्याकरणावगाहनकृतोद्योगोऽपि विद्वज्जनो
व्युत्पत्तिं लभते न वैदिकपदग्रामे मनुष्योक्तिवत् ।
अन्यत् किञ्चन तत्प्रतीतिशरणं नास्तीति च व्याकृतं
15 तस्मादप्रतिपत्तिमन्थरमुखो वेदः प्रमाणं कथम् ॥

---

**प्रतिपदमशक्यत्वादिति** । यथा तैरेवोक्तम् 'बृहस्पतिरध्यापयिता शक्रोऽध्येता दिव्यं वर्षसहस्रमायुस्तथापि नान्तं जगाम' इति । तथा **लक्षणस्य** । सामान्यविशेषवतः । **अव्यवस्थानात्** । न्यूनत्वात् । सूत्रकृता न्यूनानि सूत्राणि कृतानि, वार्त्तिककृता 'अन्ताच्च इति वक्तव्यम्' इत्यादीन्युपसङ्ख्यानानि कृतानि, पुनर्भाष्यकारेण ''मृजेरजादौ सङ्क्रमे 20 विभाषा वृद्धिरिष्यते'' इत्याद्या इष्टयः कृताः । एवञ्च महापुरुषत्रयपरिग्रहेऽपि शोभा चीर्णमित्याद्यसिद्धिः । **तत्रापि च स्खलितदर्शनात्** । स्खलितानां सन्देहविपर्ययाप्रतिपादकत्वादीनां दर्शनात् । **अनवस्थाप्रसङ्गाच्च** इति सूत्रावयवः स्वयमवतारणिकासमय एव व्याख्यातः ।

**कटन्दी कोद्रवौदन** इति । कटन्दी वैशेषिकभाष्यविशेषः । **मनुष्योक्तिवदिति** । 25 यथा प्रागुक्तनीत्या सर्वासङ्ग्रहादिना लौकिकेषु वचनेषु वैयाकरणो न व्युत्पत्तिं लभते तथा वैदिकेष्वपीत्यर्थः । **अप्रतिपत्तिमन्थरमुख** इति । प्रतिपत्तेरभावेनाप्रतिपादकत्वेन मन्थरमुखो निष्क्रियवदनो मूक इव।

**स्वमते साधुशब्दानामेव वाचकत्वसाधनम्**

अत्राभिधीयते। यत्तावदिदमवादि गवादिशब्दवदनादिप्रबन्धसिद्धमेव गाव्यादेरपि वाचकत्वमिति, तत्रामुं पक्षं संशयदशामेव तावदारोपयामः। पूर्वपक्षिकोक्तयुक्तिसमुत्थापितस्थिरतरविपर्ययज्ञानसमनन्तरं सहसैव सम्यग्ज्ञानोत्पादनातिभराद् भारैकदेशावतरणन्यायेन संशयस्तावदुपपद्यते। ततस्तर्कात् परिशोधितेऽध्वनि सुगमे सुखं विहरिष्यति सम्यङ्निर्णयोपायो न्याय इति। तदुच्यते। यदि गाव्यादीनां गवादीनामिव शब्दानां प्रयोगे गतिरन्या न काचित् सम्भावनाभूमिमुपैति, तत्सत्यम्, आदिसत्तायाः कल्पने कोऽवसरः? यथा हि स्वाध्यायाध्ययनसमये यादृशमेव शब्दं यथोचितमात्रानुस्वारस्वरादिरूपसमुत्थितमुच्चारयत्याचार्यस्तादृशमेव शिष्यः प्रत्युच्चारयति, प्रमाद्यन्तं वा गुरुरेवैनमनुशास्ति, आतदुच्चारणसामर्थ्योपजननं तावन्न मुञ्चति शिक्षयति। सोऽपि शिष्यो यदा गुरुर्भविष्यति तदा स्वशिष्यं तथैव शिक्षयिष्यति। आचार्यो यदा शैशवे शिष्य आसीत् तदान्येन गुरुणा शिक्षितोऽभूत्, सोऽपि तदन्येन सोऽपि तदन्येनेत्येवमनादित्वं जैमिनीयपक्षे, आदिसर्गात् प्रभृति प्रवृत्तत्वं नैयायिकपक्षे वेदाध्ययनस्य व्यवस्थितम्।

इत्थमेव यदि गाव्यादीनां गवादिवत् प्रमादतः सुपरिरक्षितः प्रयोगस्तथैव तेभ्योऽर्थप्रतिपत्तिपूर्वको व्यवहारस्तदानादिगवादिशब्दसमानविषया एव गाव्यादय इति, तदा कस्य किं ब्रूमः? अस्ति त्वत्रान्यः प्रकारः। न ह्येकान्तेन यादृगेव वक्त्रा शब्दः प्रयुज्यते तादृगेव श्रोत्रा प्रत्युच्चार्यते; किन्तु प्रमादालस्यादिविविधापराधविगुणकरणोच्चार्यमाणोऽपभ्रंशतां स्पृशन् दृश्यत इत्यस्ति संशयावसरः। अपभ्रंशतयापि ये स्थिताः स्थास्यन्त्यपि वा शाकटिकभाषाशब्दास्तानपि गोपालबालाबलासु प्रयुञ्जाना जरत्पामराः प्रयत्नेनापि न यथोच्चारितानेव तान् पठितुं शक्नुवन्तीति अशक्तिजशब्दबाहुल्यदर्शनात् संशयाना कुशाग्रेयबुद्धेरपि बुद्धिर्भवितुमर्हति, किमेते गवादिशब्दा एवानादिसिद्धवाचकाः शक्तिभाजः, तेभ्योऽन्ये विगुणकरणप्रयोज्याः प्रमादप्रभवा अपभ्रंशाः? किं वा सर्व एव तुल्यकक्षा इति। सर्वेषां तुल्यकक्षत्वे य एते अद्यत्वेऽपि प्रमादजाः प्रमदादारकादिवचनेष्वपभ्रष्टा अभ्यधिकतरामपभ्रंश-

दशां स्पृशन्तस्तेऽपि तामेव गवादिशब्दमधुरमधिरोहेयु:, न चैवमस्त्विति शक्यमभ्यनुज्ञातुमिदानीमेव भ्रश्यतां तेषां प्रत्यक्षत उपलब्धेरिति। तस्मादवश्यं तावदद्यत्वे परिदृश्यमानापभ्रंशदशा दुर्बलबालाबलादिशब्दानां न गवादिशब्दान् स्पर्धितुमर्हति। ते चेन्न स्पर्धन्ते तदधुना गाव्यादयोऽपि
5 प्रकारान्तरोपपत्तिसम्भावनाङ्कुरप्रभवा: सन्तो न गवादिशब्दसमानविधित्वमध्यवसातुं शक्नुयुरिति तर्कयाम:। तदुक्तं भगवता जैमिनिना, "शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्" इति। भाष्यकारेणापि व्याख्यातम् "महता प्रयत्नेन शब्दमुच्चरन्ति। वायुर्नाभेरुत्थित:, उरसि विस्तीर्ण:, कण्ठे विवर्तितो मूर्धानमाहत्य परावृत्तो वक्त्रे चरन् विविधान् शब्दानभिव्यनक्ति तत्रापराध्ये-
10 ताप्युच्चारयिता। यथा शुष्के पतिष्यामीति कर्दमे पतति सकृदुपस्प्रक्ष्यामीति द्विरुपस्पृशति" इत्यादिना।

**असाधुशब्दा नैव साधुशब्दतुल्ययोगक्षेमा:**

आह। तर्हि विशेषे प्रमाणं वक्तव्यं यदेते गाव्यादय: प्रमादाद्यपराधनिबन्धना एव न गवादिशब्दसमानविधय इत्युच्यते। भवतु न: समीहितम्।
15 संशयदशां तावदानीतोऽयमनादिगाव्यादिशब्दवाची महापुरुष: सम्बोध्यते, भो महात्मन्! इत्थं पूर्वोक्तनीत्या संशये सति चिन्त्यतां किमेते गाव्यादयो गवादिसमानयोगक्षेमा एव हस्त: कर: पाणिरितिवद्भवन्तु किं वापराधसम्भावनया मार्गान्तरमालम्बन्तामिति। तत्रैकस्मिन् वाच्ये बहवस्तुल्यकक्ष्या वाचका इति। नैष न्याय:। कथं प्रत्यर्थं शब्दनिवेशात्तेनैव सम्बन्धकरणसौकर्यादन्यसम्बन्धे
20 यत्नगौरवप्रसङ्गात् प्रत्यर्थं शब्दनिवेशे हि सति परस्परमव्यभिचारिणौ शब्दार्थौ भवत:। स शब्दस्तस्य वाचक: सोऽर्थस्तस्य वाच्य इति, अनेकशब्दवाच्यस्त्वेकोऽर्थस्तं वाचकं शब्दं न जह्यादपि तमन्तरेण शब्दाभिधेय-

---

**समानविधित्वं** तुल्यत्वम्। **शब्दे प्रयत्ननिष्पत्तेरिति**। न हि यादृगेव परेण शब्द उच्चार्यते तादृगेव प्रत्युच्चारयितुं शक्यते; यस्मात् प्रयत्नान्निष्पाद्यते अभिव्यक्तिं
25 याति शब्द:, अत: शब्देऽपि अपराधस्य भागित्वम्। पुरुषापराधस्य भाजनं शब्द: सम्भाव्यते, अत: पुरुषापराधवशादन्यथाप्युच्चार्यते।

तामपि यतः प्रतिपद्यत इति व्यभिचारः। अनेकार्थवाचिनि चैकस्मिन् वाचके इष्यमाणे शब्दोऽर्थं व्यभिचरेत्तस्यैवार्थान्तरस्यापि ततः प्रतिपत्तेरितीत्थम् अनियमोऽयमुपप्लवेत हस्तः करः पाणिरित्यादौ। अक्षाः पादा माषा इत्यादौ तु गतिरन्या नोपलभ्यते। तेनानेकशब्दत्वमनेकार्थत्वञ्च दैवबलवत्तयाङ्गीकृतम्। प्रथमः पुनरेष ऋजुः पन्था यदेकस्य वाचकस्यैको वाच्योऽर्थ 5 इति च। इह गत्यन्तरमतिस्पष्टमस्ति। प्रमादप्रभवत्वं नाम तस्मिन् सति किमिति प्रथमप्राप्तोऽयं प्रतिवाच्यं वाचकनियमक्रमो लङ्घ्यते, तेन प्रमादापराधनिबन्धना गाव्यादयो न गवादिसमानमहिमान इत्युक्तम्।

किञ्च, वाचकशक्तिर्नाम सूक्ष्मा परमर्थापत्तिमात्रशरणावगमा, न तन्मन्दतायामन्यतः कुतश्चिदवगन्तुं पार्यते। सा चेयमन्यथाऽप्युपपद्यमाना 10 गवादिभ्योऽर्थप्रत्ययादिव्यवहारे मन्दीभवति। तेषु शक्तिकल्पनायामर्थापत्तिः। एवञ्च गवादय एवं वाचकशक्तेराश्रयो न गाव्यादयः। कथं तर्हि बहूनामधिगतव्याकरणतन्त्राणामेभिरविच्छिन्नो व्यवहारः? यथैव म्लेच्छानां म्लेच्छभाषाभिरक्षिनिकोचहस्तसंज्ञादिव्यवहारिणां वा स्वैरुपायैः। किमक्षिनिकोचादीनामन्त्यजनपदवाचां नास्ति शक्तिः? ओमित्युच्यते। कथं तर्हि तेभ्योऽर्थ- 15 प्रतिपत्तिः? नैसर्गिकी तेषां शक्तिर्नास्तीति ब्रूमः, तत्स्वरूपस्याव्यवस्थितत्वेन निसर्गसिद्धिकशक्तिपात्रतानुपपत्तेः; प्रतिपत्तिस्तु स्वकृतसमयमात्रनिबन्धना तेभ्यः। नैयायिकानां क्व वा न समयः प्रतिपत्त्युपायः? सत्यम्। स त्वीश्वरप्रणीतः प्रथमसर्गात्प्रभृति प्रवृत्तो मीमांसकाभ्युपगतनैसर्गिकशक्तिसोदर्य एव न मादृशरचितपरिमितविषयसमयसमानः। स च गवादिशब्देष्वेव प्राप्तप्रतिष्ठो 20 न गाव्यादिषु, ते तु वर्णसारूप्यच्छायया गवादिशब्दस्मृतिमादधानास्तदर्थप्रतिपत्तिहेतुतामुपगच्छन्तीति।

नन्वनवधृतस्वरूपाणां कथं गवादिशब्दानां स्मरणं तदवधारणे वा? कोऽभ्युपायः? अभियोगविशेष इति ब्रूमः। कः पुनरभियोगः, को वा तस्य

---

**न तन्मन्दतायामर्थापत्तिमन्दतायाम्। क्व वा न समयः प्रतिपत्त्युपायः, साधुशब्दा- 25 नामपि सामयिकत्वाभ्युपगमात्।**

विशेषः ? व्याकरणाध्ययनमभियोगः, तदभ्यासानुसारेण लक्ष्यनिरीक्षणं तस्य विशेषः। व्याकरणेन च प्रतिपदमपर्यवसितार्थंजनप्रयोज्यसाधुशब्दसार्थ-संग्रहतस्तद्विसदृशबर्बरपुरन्ध्रिप्रायप्राकृतगोचरापशब्दपरिहारप्रकारव्युत्पादन-मुपगम्यते। यदानन्त्यात् किल कल्पशतैरपि नावकल्पते, किन्तु व्यपनीताति-व्याप्त्यादिदोषोपनिपातस्त्रिमुनिपरीक्षितलक्षणद्वारकस्तदुपदेशः श्रूयते, तेन च वेदेनेव धर्माधर्मयोर्ब्रह्मावतारेणेव सत्यानृतयोः नीतिशास्त्रेणेव हिता-हितयोर्मन्वादिवचनेनेव भक्ष्याभक्ष्ययोर्दिव्येनेव शुद्धयशुद्धयोः सिध्यत्येव साध्वसाधुशब्दयोरधिगम इति सर्वलोकसाक्षिकमेतत् कथमपनीयते। दृश्यते ह्यद्यत्वेऽपि व्याकरणकोविदानामितरेषाञ्च कृषीबलादीनामतिमहान् वचसि विशेष इत्येवं प्रमादादिमूलगाव्याद्यपशब्दप्रयोगसम्भवादनेकशब्दगतवाचक-शक्तिकल्पनागौरवप्रसङ्गादभियोगविशेषसाध्यमानसाध्वसाधुशब्दाधिगमसौक-र्याच्च गवादीनामेव वाचकत्वं न गाव्यादीनामिति स्थिते पूर्वपक्षोपन्यस्तः समस्त एव परीवादः परिहृतो वेदितव्यः। तथा हि यत्तावदभ्यधायि साधुत्वनिश्चये प्रमाणं नास्तीति,

> साधुत्वं नेन्द्रियग्राह्यं लिङ्गमस्य न विद्यते।
> शास्त्रस्य विषयो नैष प्रयोगो नास्त्यसङ्करः॥ इति।

**शब्दसाधुत्वं शास्त्रसहकृतप्रत्यक्षगम्यमेव**

तत्रायं प्रतिश्लोकः,

> साधुत्वमिन्द्रियग्राह्यं लिङ्गमप्यस्य विद्यते।
> शास्त्रस्य विषयोऽप्येवं प्रयोगोऽप्यस्त्यसङ्करः॥ इति।

---

**किं त्वपनीतातिव्याप्तीति।** तत्र "क्ङिति च" इति गुणवृद्धिप्रतिषेधे 'मार्जन्ति' इत्याद्यभिप्रेतविषयव्याप्तेरतिव्यापकमाशङ्क्य भाष्यकृतम् "मृजेरजादौ सङ्क्रमे विभाषावृद्धिरिष्यते" इत्यादि।

**प्रयोगो नास्त्यसङ्कर इति।** प्रयोगादपि साधुत्वनिश्चयो नास्ति, साधुभिरिवा-साधुभिरपि व्यवहारादित्यर्थः।

श्रौत्रे हि प्रत्यये ग्रस्तनिरस्तरोमशाम्बूकृतादिदोषरहितोदात्तादिधर्म-सम्बन्धप्रसिद्धानुपूर्वीकवर्णगुणात्मकपदप्रतिभासस्तावदस्ति । स च न सन्दिग्धो न बाधकविधूतधैर्यो नाशुद्धकरणजन्मा न कल्पनामात्रस्वरूप इति तत्र परि-स्फुटक्रमवर्णात्मकपदग्रहणमेव साधुत्वग्रहः, तद्विपरीतयथानिर्दिष्टदोषकलुषित-शब्दग्रहणमेव चासाधुत्वग्रहणमिति प्रत्यक्षगम्ये एव साधुत्वासाधुत्वे इति । 5

ननु यदि श्रोत्रकरणकेनैव प्रत्ययेन साधुत्वासाधुत्वे प्रतिपत्तारः प्रति-पद्यन्ते व्याकरणाध्ययनबन्ध्यबुद्धयोऽपि प्रतिपद्येरन्, न च प्रतिपद्यन्ते । तस्मान्न ते ते इन्द्रियविषये इति ।

नैष दोषः । वैयाकरणोपदेशसाहायकोपकृतश्रोत्रेन्द्रियग्राह्यत्वाभ्युपगमाद् यथा ब्राह्मणत्वादिजातिरुपदेशसव्यपेक्षचक्षुरिन्द्रियग्राह्यापि न प्रत्यक्षगम्यताम-पोज्झति । यथाह । न यद् गिरिश्रृङ्गमारुह्य गृह्यते तदप्रत्यक्षमिति, यथा वा सविकल्पकप्रत्यक्षप्रामाण्यसिद्धौ शब्दानुविद्धबोधेऽपि प्रामाण्यमुपपादितमादौ किल संज्ञोपदेशिना पनसोऽयमिति वृद्धवचसा चक्षुरिन्द्रियेण पनसज्ञान-मुत्पद्यते सङ्केतकरणकाले तदुभयजमित्यव्यपदेशपदेन व्यपनीतं व्यवहारकाले पनसादिज्ञानमुपदेशस्मरणापेक्षचक्षुर्जनितमपि चाक्षुषमेवेतिवर्णितम्, एवमिहापि व्याकरणकोविदोपदेशसचिवश्रवणेन्द्रियग्राह्ये अपि साधुत्वासाधुत्वे न प्रत्यक्ष-तामतिवर्तेते, यथा च ब्राह्मणत्वादिजातिप्रतीतौ कारणान्तरमुक्तम् "क्वचिदा-चारतश्चापि सम्यग् राजानुपालितात्" इति मन्वादिदर्शितानवद्यवर्त्मानुसरण-निपुणनरपतिपरिपाल्यमानवर्णाश्रमाणां शङ्कितकृतककपटार्यवेशदृष्टशूद्र-व्यभिचारे देशे विशिष्टाचारगम्यापि ब्राह्मणत्वादिजातिर्भवति । एवमिहापि विशिष्टशब्दश्रवणोत्तरकालप्रवृत्तव्यवहारावगतार्थप्रतिपत्तिसहितं शब्दानुशासन-शास्त्रोपदिष्टप्रकृतिप्रत्ययविकरणवर्णलोपागमादेशादिलिङ्गमव्यभिचारि तत्-

---

**ग्रस्तनिरस्तेति** । ग्रस्तो जिह्वामूलेन गृहीतोऽव्यक्तो वा, निरस्तो निष्ठुरः, रोमशो गम्भीरः, अम्बूकृतो यो व्यक्तोऽप्यन्तर्मुख इव श्रूयते । आदिग्रहणं कलादि-परिग्रहार्थम् । 25

**क्वचिदाचारतश्चापीत्यस्य** । पूर्वमर्धम्—'संस्थानेन घटत्वादिब्राह्मणत्वादि-

स्वरूपावधारणे कारणं भविष्यति, तदेवंलक्षणकमर्थप्रत्यायकञ्च शब्दस्वरूपं तत्साधुतयावधृतमिति व्याप्तिग्रहणोपपत्तेः, शास्त्रमपि श्रुतिस्मृतिरूपसाधु-शब्दप्रयोगोपनतक्रतूपकारकरणकस्वर्गादिफलसंयोगमुपदिशदपशब्दभाषणप्रभव - प्रत्यवायप्रतिपादकञ्च "वाग्योगविद् दुष्यति चापशब्दैः" इत्यादि साधुत्वेतर-
5 परिच्छेदे प्रमाणत्वं प्रतिपद्यत एव ।

आह । कलञ्जवत् तत्स्वरूपसिद्धौ सत्यां तद्विधिनिषेधयोः शास्त्रं क्रमते न तु तत्स्वरूपमेव विधत्ते, स्वरूपस्य भावार्थत्वेन विधिविषयार्थत्वायोगादि-त्युक्तम्। सत्यमुक्तम्। किन्तु श्रुतिस्मृतिशास्त्रयोर्धर्माधर्मोपदेशिनोर्यथोपवर्णितेनैव प्रकारेण साध्वसाधुविषयविधिनिषेधपरत्वम्, तत्स्वरूपप्रतिपत्तिकर्तव्यतापरन्तु
10 विध्यपेक्षितं प्रमाणीभवत्येव । यदि वा पाणिन्यादिदृष्टस्मृतिद्रढिम्ना मूलभूतमा-चमनविधिवद् वैदिकमपि तथाविधविधिवाक्यं कल्पयितुं शक्यमिति शास्त्रस्यापि न विषयः साधुत्वम्, शब्दवित्प्रयोगश्च सङ्करहित एव, तथा हि अन्या एव

---

जातितः' इति; व्यज्यत इति प्रकृतम् । **शास्त्रमपि श्रुतिस्मृतिरूपं** 'साधुभिर्भाषितव्यम्' इत्यादिकं प्रत्यवायप्रतिपादकं चेति ।

15

यस्तु प्रयुङ्क्ते कुशलो विशेषे
शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र
वाग्योगविद् दुष्यति चापशब्दैः ॥ इति ।

विशेषे कुशलो यथा स एव शब्दः क्वचित् प्रयुक्तः साधुरन्यत्रासाधुः 'अस्व'शब्दो
20 हि निर्धने साधुः, तुरगे त्वसाधुरिति । दुष्यति चापशब्दैर्दुष्टो भवतीति । कः ? अवाग्योग-विदित्यर्थसम्बन्धः ।

**व्रीहिकलञ्जवदिति** । 'व्रीहिभिर्यजेत', 'न कलञ्जं भक्षयेत्' इति । कलञ्जाख्यः शाकभेदः । **यथोपदर्शितेन प्रकारेण** । साधुभिर्भाषणं कार्यं न तु असाधुभिः साधव एवंभूता इत्येवमिति **विध्यपेक्षितमिति** । येन येन विना विधेरसिद्धिस्तत्तत्स्वरूपसिद्धये
25 असावाक्षिपति, साधुत्वांशावगमञ्च विना अस्य न सिद्धिरिति यतः साधुत्वावगमस्तदपि व्याकरणमाक्षिपत्येव । **मूलशास्त्रमपीति** यदा ह्येतेन साधुस्वरूपं निर्णीतं तदा तदनिर्णय-द्वारकं मूलशास्त्रस्य यदप्रामाण्यं तन्निवर्तत एव ।

निरवद्यवर्णक्रमोदीरणोदारगम्भीरगतयः सूक्तयः सूरिजनस्यान्या एव दुःश्रवाः कुत्सितसङ्कीर्णवर्णविभागविनिहितहृदयोद्वेगा ग्राम्यगिर इति प्रत्यक्षमुपलभ्यते। स चायमसङ्करः प्रयोगो व्याकरणसाहायकं प्रतिपद्यमानः साधुत्वावगमोपायतां भजत एवेति सर्वथा नाप्रमाणकः साध्वसाधुशब्दविभाग इति।

एवञ्च "ब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः" इत्याद्यागमवचनान्यपि तदुपयोगीनि व्याख्यातवाक्येन भवन्ति। 5

यत् पुनर्नियमशास्त्रे साधुभिर्भाषितव्यमसाधुभिर्नेत्यस्मिन्नपभाषितं तदपि न पेशलम्। न हि नीरपानोपदेशकृशानुपाननिषेध इवानवकाशमिदं शास्त्रम्, अपशब्दानामेव नार्यजनवदनप्रतिष्ठानां यथातथार्थप्रतीत्युपायत्वदर्शनपूर्वकप्रयोग-प्रसङ्गानपायेन प्राप्तौ सत्यां प्रतिषेधस्यावकाशसम्भवात्साधुभिरेव भाषणस्य 10 भोजनप्राङ्मुखतादिवन्नियमादृष्टसाफल्यात्।

यदपि साध्वसाधुस्वरूपानवधारणात् प्रतिपदोपदेशाद्यशक्यत्वमाशङ्कितं तदपि प्रतिहतम्। यादृगिदं प्रत्यक्षानुमानगम्यं साध्वसाधुशब्दस्वरूपं व्याख्यातं तदवलम्बनपुरःसरनियमकरणस्य सुशक्यत्वात्। अत एव साधुत्वं नाम किमुच्यत इति यद्विकल्पितं तद्विहितमेव प्रति भवति। यतो व्याकरणलक्षणानुगम- 15 विशेषित्वं वाचकत्वं साधुत्वमित्युक्तम्, तच्च स्ववर्गानुगामिगोत्वादिवत्सामान्यं वा भवतु पाचकत्वादिवदसत्यपि सामान्येऽवच्छेदकत्वं भवतु, सर्वथा तत्कृतो निर्वहति सर्वो व्यवहारः, वर्गीकरणे हि तदेव कारणमिति।

अथवा पुनरस्तु वाचकत्वमेव साधुत्वं तथापि तत्र नियमशास्त्रं साधु-भिरेव भाषितव्यमिति प्रवर्तितुमर्हत्येव। यद्यप्यसाधोरवाचकत्वात्प्रयोगप्रसङ्गो 20 नास्ति तथापि साधुस्मरणसरणिसमुपारूढवाचकत्वशङ्कोपप्लवमानप्रसङ्गनिवृत्तये नियमसाफल्यं भविष्यति, विधिफलत्वेन नियमस्य फलतः परिसंख्याकार्यम्

---

**पाचकत्वादिवदिति।** 'पाचकः पाचकः' इति व्यपदेशस्य पचिक्रियानिबन्धनत्वाद् न पाचकत्वसामान्यम्, अपाचकव्यवच्छेदकं तु भवत्येव।

**फलतः परिसङ्ख्याकार्यमिति।** यथा 'इमामगृभ्णन् रशनामृतस्य' 25 इत्यश्वाभिधानीमादत्त इत्यप्राप्तमेवाश्वरशनादानं मन्त्रेण विधीयमानं फलतो गर्दभ-रशनानिवृत्तिं करोतीति।

असाधुशब्दनिवृत्तिः स्थास्यतीति सोऽपि न दोषः ।

यदपि परार्थत्वात्फलश्रुतिमर्थवादीकुर्वता पुण्यपापफलत्वं दूषितं तदपि न साम्प्रतम्, अर्थप्रतीतिपारार्थ्ये सत्यपि प्रयोगनियमापूर्वद्वारकपुण्यपापफलत्वसम्भवात् । पर्णमय्यादिष्वपि तथा प्रसङ्ग इति चेत्, भवतु । को दोषो नैयायिकै-
5 रेकाकारनिरवलम्बनार्थवादपदोपदेशानभ्युपगमात् । शब्दशक्तितात्पर्यालोचनमपि तैरन्यथा क्रियत इति प्राग्विचारितमिति तिष्ठत्वेषा कथा । तेन कामधुग् भवतीत्यादिवचनान्यपि व्याकरणाध्ययनफलप्रकटनपटूनि तथैव नेतव्यानि ।

यदपि सूत्रकृता स्वयं प्रयोजनं किमिति न व्याहृतमिति व्याहृतं तदप्यदूषणमेव । व्याकरणं हि वेदाङ्गमिति प्रसिद्धमेतद् आ हिमवतः आ च
10 कुमारीभ्यः । वेदश्च यदि निष्प्रयोजनः स्वस्ति प्रजाभ्यः; समाप्तानि दृष्टादृष्टफलानि सर्वकर्माणि, जितं चातुर्वर्ण्यबाह्यैरन्त्यजनपदवासिभिर्म्लेच्छैः । अथ सप्रयोजनो वेदः सोऽङ्गवत्त्वादङ्गैः सहैव सप्रयोजनतां भजत इति कोऽर्थः प्रयोजनान्तरचिन्तया ? न हि दर्शपूर्णमासप्रयोजनादन्यत् प्रयाजादिप्रयोजनमन्विष्यत इति मन्वानः स्वयं सूत्रकृत् प्रयोजनं नाख्यत् ।

15 व्याख्यातारस्तु मुख्यानुषङ्गिकभेदभिन्नप्रयोजनप्रपञ्चं प्रयोजनातिशयव्युत्पादनद्वारकश्रोतृजनोत्साहपरिपोषसिद्धये दर्शितवन्त इति न कश्चिदुपलभ्यः ।

कथं पुनरङ्गता व्याकरणस्य, कमुपकारमावहतीति ? क एष पर्यनुयोगो वेदवेदाङ्गानामनादित्वादीश्वरप्रणीतत्वाद्वा पर्यनुयोजनानुपपत्तेः । संक्षेपविस्तरविवक्षया हि पाणिनिपिङ्गलपराशरप्रभृतयस्तत्र तत्र कर्तारः प्रसिद्धि
20 गताः । परमार्थतस्तु वेद इव तदर्थोऽपि तदर्थावगमोऽपि प्रायो हि सर्वं एवा-

---

**अर्थप्रतीतिपारार्थ्ये** इति । अर्थप्रतीतौ पारार्थ्यमङ्गत्वम् । **प्रयोगनियमापूर्वद्वारकेति** । यथा पक्षे प्राप्तेऽपि प्राङ्मुखभोजने नियमादपूर्वम्, एवमर्थप्रतीतिपरत्वेन पक्षे प्राप्तेऽपि शास्त्रप्रयोगे नियमाद् यद् अपूर्वं तेन द्वारेण । **पर्णमय्यादिष्विति** । 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्यत्र जुह्वा होमसाधनत्वेन निर्ज्ञानात् फलश्रुते-
25 रर्थवादतैव व्यवस्थापिता । ननु तात्पर्यपर्यालोचनयार्थवादतैव प्राप्नोति, तन्नेत्याह **शब्दशक्तितात्पर्येति** ।

नादयः प्रजापतिनिर्मिता वेत्येवमपर्यनुयोज्या एव । अत एव वेदैस्तदङ्गैश्च सह चतुर्दश विद्यास्थानानि गण्यन्ते,

अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।
पुराणं धर्मशास्त्राणि विद्या ह्येताश्चतुर्दश ।। इति ।

येऽपि शब्दसंस्कारादिविकल्पाः कृताः, तेऽपि बहुभाषित्वयोगमात्र- 5
निर्मिता एव न वस्तुस्पृशः । के वा तद्विपरीताः कश्च तेषां संस्कार इति ? न चैतावता शिष्टप्रयोगमूलमेव व्याकरणं ब्रूमो वेदवद् अनादित्वस्य दर्शितत्वाद् । अन्धपरम्पराप्रसक्तदोषपरिजिहीर्षया तु शिष्टप्रयोगमूलत्वमभिधीयते, वैदिक-स्मृतेरिवान्वयव्यतिरेकमूलत्वम् । ये हि व्याकरणस्मृतौ साधव इत्यनुशास्यन्ते शब्दास्ते शिष्टैस्तथैव प्रयुज्यमाना दृश्यन्ते हरीतकीभक्षणादिवारोग्यम्, न तु 10
शिष्टेभ्यः शब्दसमाम्नायमधिगम्य पाणिनिर्ग्रन्थं कृतवान्, न चान्वयव्यति-रेकाभ्यां द्रव्यशक्तीरवगत्य चरकं प्रणीतवानिति शिष्टानामनादित्वाभिधानात् ।

---

**शब्दसंस्कारादिविकल्पा** इति । बहुभाषित्वादित्यनेन भट्टं सूचयति, स हि बहुभाषित्वेन प्रसिद्धः । तथा च,

भट्टस्य तस्य बहुभाषणलब्धकीर्ते- 15
र्दिङ्नागदूषणमिदं न तु धर्मकीर्तेः ।। इति ।

तमेवं प्रतिपादयन्ति । तथा चाह सः,

संस्कृतानाञ्च शब्दानां साधुत्वे परिकल्पिते ।
वक्तव्यः कस्य संस्कारः कथं वा क्रियते पुनः ।।
न तावदस्ति शब्दत्ववर्णत्वव्यक्तिसंस्क्रिया । 20
सर्वत्रातिप्रसङ्गेन न व्यवस्था हि सिद्ध्यति ।।
शब्दत्वे संस्कृते स्याद्धि ध्वनीनामपि साधुता ।
वर्णत्वेऽप्येकवर्णानां गाव्यादीनाञ्च तुल्यता ।।
गवादिषु गकारादिर्यः सकृद् संस्कृतः क्वचित् ।
गाव्यादिषु स एवेति साधुरेव प्रसज्यते ।। इत्यादि । 25

एतेनेतरेतराश्रयत्वमपि प्रत्युक्तम्, न हि शिष्टेभ्यो व्याकरणस्य प्रभव इति ।

यत्तु शिष्टानामपि प्रमादित्वमुपवर्णितं किल पुराणैर्मुनिभिरपि बहुभिरपशब्दाः प्रयुक्ता इति, तत्राभियुक्तैस्तदपनयनमार्गः प्रदर्शित एव । स तु ग्रन्थविस्तरत्रासादिह न प्रतन्यते ।

5 यदपि पाणिनितन्त्रे धातुप्रातिपदिककारकाद्यनुशासनविसंष्ठुलत्वमनेकशाखमाख्यापितं तदपि निपुणमतिभिः प्रतिसमाहितमेव । न च तेषामपि दोषोत्प्रेक्षणसम्भवादनवस्था निपुणदर्शितमार्गे विप्लवकारिवैतण्डिकतस्करविकासानुपपत्तेः ।

---

**इतरेतराश्रयत्वमपि** । व्याकरणात् साधुत्वपरिज्ञाने सति तत्प्रयोक्तॄणां शिष्टत्वम्, 10 सति च शिष्टप्रयोगे व्याकरणस्य प्रामाण्यमितीतरेतराश्रयत्वम् ।

**तदपनयनमार्गः प्रदर्शित** इति । तत्र मन्वादिवचनानि तावच्छान्दसरूपसिद्ध्या सिद्ध्यन्ति 'वेदविद्वचः' इति वचनात् । 'जनिकर्तुः' 'तत्प्रयोजकः' इति च निपातनात् सिद्ध्यति । तत एव ज्ञापकात् 'जातिवाचकत्वात्' इति च सिद्धम् । 'आन्यभाव्यम्' इत्यगुणवचनत्वेऽपि ब्राह्मणादिपाठात् ष्यञ् । 'अविरविकन्यायेन' इत्यत्र तु यथा अविः 15 अविशब्दः अविकन्यायेन अविकमुखेन प्रत्ययमुत्पादयतीति भिन्नपदत्वेन व्याख्येयम् । 'अन्यथाकृत्वा चोदितम्' इत्यत्र च सिद्धाप्रयोगत्वस्याविवक्षया णमुल् कृतः । भाष्यकारवचनाद्वा सिद्धाप्रयोगत्वेऽपि साधुरेवायमित्येके ।

**निपुणमतिभिः प्रतिसमाहितमेवेति** । भर्तृहरिप्रभृतिभिर्हि तथा तद् व्याख्यातं यथा नैषां दूषणानामवकाश एव न भवतीति । तथाहि यत्तावच्चोदितं 'क्रियावचनत्वे- 20 ऽस्तिभवत्यादीनां धातुसंज्ञा न प्राप्नोति' इति, तत्तत्रैव प्रतिसमाहितम् । नात्र लौकिक्याः क्रियायाः परिस्पन्दस्वभावाया धातुभ्यः प्रतीतिर्विवक्षिता, येनास्यादीनां धातुसंज्ञा न भवेदपि तु शब्दार्थभूतायाः । तथाहि कारकव्यापारविषयीकृतोऽर्थः क्रियेति क्रियाशब्दार्थः । एतदेव भाष्यकृता 'कारकाणां प्रवृत्तिविशेषः क्रिया' इति वदता प्रदर्शितम् । तदेवं कारकप्रवृत्तिविषयः पूर्वापरीभूतोऽर्थः क्रियेति विवक्षायामस्त्याद्यर्थस्य साधनाय 25 व्यापारविषयत्वेन पूर्वापरीभूतस्य शब्देनाभिधानात् क्रियारूपता । तथाहि अस्ति आत्मानं बिभर्तीति गम्यते पूर्वापरीभावस्तदुक्तम्,

एतेन शोभाचीर्णवरेण्यगणेयभ्राजिष्णुकान्दिशीकादिशब्दासङ्ग्रहस्मृति-सन्देहविपर्ययादिदूषणान्यपि कैश्चिदुत्प्रेक्षितानि प्रतिक्षिप्तानि मन्तव्यानि, तानि च तैरेव समाहितानीति ।

---

यावत् सिद्धमसिद्धं वा साध्यत्वेन विवक्ष्यते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥ इत्येवमन्यत्रापि । 5

**तेनैव प्रतिसमाहितानीति** । तथाहि शोभेत्यादौ उद्भटेनैव प्रतिसमाधानं कृतम् । "अ प्रत्ययात्" इति प्राक् प्रकृतिनिर्देशे कर्तव्ये प्राक् प्रत्ययनिर्देशाद् योगविभागकरणे-नाप्रत्ययं कृत्वा 'शोभा' इति साधयेत् । 'चीर्णम्' इत्यत्र च प्रतिषेधविधेर्बलीयस्त्वात् क्वचिद् विहितबाधः, तेनेह विहितस्येटो बाधः । अनित्यमागमशासनमिति वा । उत्त्वं तु "ति च" इत्यनेन सूत्रेण गत्यर्थचरेस्तेन लक्षणार्थस्येत्त्वेन भवितव्यम् । "ऋत इद्धातोः" 10 इत्यतः सूत्रादनन्तरं 'कॄतश्च' इति कर्तव्ये यद् उपधाग्रहणं तदावृत्तिज्ञापनार्थम्, 'च' ग्रहण-श्चैतद् रेफान्तमवसेयम् । "उपधायाश्च" उपधाया ऋत इत्त्वं भवति । चः चरश्चोपधाया इत्त्वमित्यर्थः । 'चर्' इति लुप्तषष्ठयन्तम् । 'न याति वाक्यं प्रतिभेत्तुम्' इत्यत्र च 'याति' इति तिङन्तप्रतिरूपको निपातः 'शक्यते' इत्यर्थे वर्तते । एवं हि 'अद्यास' इत्यत्रापि 'आसशब्दो निपात एव 'बभूव' इत्यस्यार्थे । "कृत्यानां कर्तरि वा" इत्यनन्तरेऽपि 'वा'- 15 ग्रहणे "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्"इत्यत्र यद् विकल्पवाचि 'अन्यतरस्याम्' ग्रहणं तद् व्यवस्थितविभाषार्थम्, तेन क्वचिद् द्वितीययापि सह विकल्पः सिद्धो भवति तेन 'मातुरनुहरति' इति सिद्धम् । कान्दिशीक इत्यत्रापि अभियुक्तैर्व्युत्पत्तिः कृतैव । सा च दर्शिता । प्रत्ययः विभक्त्यलुक् चात्रापि प्राङ्नीत्या प्रकारविशेषाश्रयणेन समर्थ-यितव्यः । भ्राजिष्णुरित्यत्र तु "भुवश्च" इति 'च' शब्दस्यानुक्तसमुच्चयत्वाद् इष्णुप्रत्ययो 20 वृत्तिकारेण दर्शितः । औणादिकानामपि गमि-गामि-भाविप्रभृतीनां यौगिकत्वदर्शनाद् 'वृञ एण्यः' इति एण्यप्रत्ययेन वरेण्यः । एवं गणेयशब्देऽपि णेरलोपः कयापि भङ्ग्या चीर्णमितिवत् समर्थ्यः । यत् पुन; स्मृतिविपर्ययापादनं तदभिप्रायापरिज्ञानादेव । शब्दानां हि राशित्रयेणानुशासनम् । छन्दोमूलप्रयोगदर्शनात्, छन्दोभाषाप्रयुक्तिदृष्टेः, भाषाप्रयोगावगमाच्च । न पुनर्विषयनियमस्तैस्तैः सूत्रे क्रियते । अवश्यं चैतदेवं विज्ञेयम्, 25 यदि पुनः परिपन्थ्यादयः शब्दाश्छन्दोविषया एव स्युस्तदा पदपदार्थव्युत्पत्त्यभावाद-प्रतिपादकत्वलक्षणमप्रामाण्यं श्रुतेः प्रसज्येत । छन्दोग्रहणन्तु तेषु तेषु सूत्रेषु तेषां

बार्हस्पत्यमपि सूत्रमसूत्रमेवेत्यलं स्वमनीषिकाकल्पितानल्पदुर्विकल्पाडम्बरोत्तम्भितालीकपाण्डित्यगर्वगलग्रहगद्गदगिरामुद्वेगकारिणानेन वस्तुविचारेण, सर्वथा प्रकृतिनिर्मलमत्युदारं व्याकरणाडम्बरमेवंप्रायैः परिवादपांसुपातैर्न मनागपि दूरीकर्तुं पार्यत इति सिद्धम् ।

5 **स्वमते व्याकरणस्यावश्याध्येयत्वम्**

तस्मात् पवित्रात् सर्वस्मात् पवित्रं जनबहुमतमधिगतचतुर्वर्गमग्राम्यमात्मानं कर्तुमध्येतव्यं व्याकरणम् । आह,

आपः पवित्रं परमं पृथिव्या अद्भ्यः पवित्रं परमं हि मन्त्राः ।
तेषाञ्च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः ।।

10 इहाप्युक्तम्,

रूपान्तरेण देवास्ते विहरन्ति महीतले ।
ये व्याकरणसंस्कारपवित्रितमुखा नराः ।।

किञ्च,

वरं हि जातास्तिमयो गभीरे जलाशये पङ्किनि नित्यमूकाः ।
15 न मानवा व्याकरणप्रयोगप्रबुद्धसंस्कारविहीनवाचः ।।

मनुना च पङ्क्तिपावनत्वेनाधिगतव्याकरणो मीमांसकश्च स्वस्मृतौ पठितौ 'यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्' इति । पुष्पदन्तोऽप्याह,

---

परिपन्थ्यादीनां काव्यादिषु पञ्चसु प्रभेदेषु प्रयोगप्रतिषेधार्थो न सर्वत्र । स्मृतिसन्देहोऽपि
20 न कश्चित् । त्वामनुकरोतीत्यत्रार्थदृशेस्तत्र प्रयोगात्; अनुकृतिलक्षणश्चार्थो धात्वर्थ एवेति नास्ति कश्चित् सन्देहः । अप्रतिपादकत्वञ्च नास्ति, गत्यर्थादिसूत्रस्य प्रत्याख्यानानाश्रयणादिति ।

बार्हस्पत्यसूत्रमसूत्रमेव प्रमाणविरुद्धार्थसूचनादसूत्रपदतुल्यमित्यर्थः ।

तिमयो मत्स्यविशेषाः ।

भ्रष्टः शापेन देव्याः शिवपुरवसतेर्वन्ध्यहं मन्दभाग्यो
भाव्यं वा जन्मना मे यदि मलकलिले मर्त्यलोके सशोके।
स्निग्धाभिर्दुग्धधारामलमधुरसुधाबिन्दुनिष्यन्दिनीभिः
कामं जायेय वैयाकरणभणितिभिस्तूर्णमापूर्णकर्णः ॥
एवं व्याकरणाभियोगसुलभप्रौढोक्तिभिः पण्डितै-　　5
रक्लेशेन विचित्रवैदिकपदव्युत्पत्तिरासाद्यते ।
अन्यैरप्युपबृंहिते दृढतरासङ्गैर्निरुक्तादिभि-
र्वेदे स्वार्थधियं वितन्वति कुतः प्रामाण्यभङ्गो भवेत् ॥
अङ्गभावनिरपेक्षयैव नः प्रत्ययो यदिह शब्दविद्यया ।
वैदिकार्थविषयो विधीयते तत् परास्तमितरेतराश्रयम् ॥　　10
आदृतमस्खलितव्यवहारैर्भोगिमतश्रुतसङ्गिभिरार्यैः ।
व्याकरणं कथमेतदनादि प्राकृतलक्षणतौल्यमुपेयात् ॥

**एतेनागमप्रामाण्यं सिद्धम्**

एवं मृषात्वमुदगीयत येन येनच्छिद्रेण कल्पितपिशाचरवैरनार्यैः ।
तत्तत्समग्रमपसारितमित्यतश्च प्रामाण्यमप्रतिहतं स्थितमागमानाम् ॥　　15

---

**दुग्धधारेति** दुग्धधारावदमला मधुराश्च तथा सुधाबिन्दुनिष्यन्दिन्यस्तु याः ।

**तत् कुतस्त्यमितरेतराश्रयमिति** । सति वेदाङ्गत्वेन व्याकरणात् प्रमाण-भूतादर्थनिश्चये वेदस्याप्रतिपादकत्वाभावात्, । प्रामाण्यम्, सति च तत्प्रामाण्ये तदङ्गत्वेन व्याकरणप्रामाण्यमिति यदितरेतराश्रयं तत् कुतस्त्यम् । **भोगिमतश्रुत-सङ्गिभिः** । भोगी शेषः, तन्मतं महाभाष्यं तच्छ्रुतेन सङ्गशीला ये भर्तृहरिप्रभृतय आर्या　　20
इति भद्रम् ।

भट्टश्रीशङ्करात्मजश्रीचक्रधरकृते
न्यायमञ्जरीग्रन्थिभङ्गे षष्ठमाह्निकं समाप्तम्

॥ ॐ ॥ जयत्येकशराघातविदारितपुरत्रयः ।
धनुर्धराणां धौरेयः पिनाकी भुवनत्रये ॥　　25

इति प्रमाणानि यथोपदेशमेतानि चत्वारि परीक्षितानि ।
प्रतन्वतां संव्यवहारमेभिः सिध्यन्तु सर्वे पुरुषार्थसार्थाः ।।

।। इति श्रीभट्टजयन्तकृतौ न्यायमञ्जर्यां षष्ठमाह्निकम् ।।

**।। समाप्तं न्यायमञ्जर्यां प्रमाणप्रकरणम् ।।**



सप्तममाह्निकम्

## प्रमेयप्रकरणम्

### प्रमेयोद्देशविभागौ

एवं प्रमाणपदार्थे परीक्षिते सति यदर्थं तत्परीक्षणं तत् प्रमेयमिदानीं दर्शयितुमाह,

[ **आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्य-**
**भावफलदुःखापवर्गास्तु प्रमेयम् ॥** ] 5

प्रमाणवदिहाप्येतत् सूत्रं व्याख्यायि सूरिभिः ।
एवं विभागसामान्यलक्षणप्रतिपादकम् ॥
प्रमेयश्रुतिरात्मादिपदपर्यन्तवर्तिनी ।
तेषामेव प्रमेयत्वं नान्यस्येति नियच्छति ॥

[ यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्येवकारादिश्रुतिमन्तरेणापि 10 शब्दसामर्थ्यात् त एव भोजनक्रियायोगिनोऽवगम्यन्ते, नान्ये, तथेहाप्यात्मादयः प्रमेयमित्युक्ते तथैव तदितरप्रमेयनिषेधोऽवधार्यते । ]

### प्रमेयस्य द्वादशविधत्वविचारः

ननु [ कथं द्वादशविधमेव प्रमेयमुपपद्यते, यावता समानतन्त्रे पृथिव्यादीनि नव द्रव्याणि, रूपादयश्चतुर्विंशतिर्गुणाः, उत्क्षेपणादीनि पञ्च 15 कर्माणि, परापरभेदेन द्विविधं सामान्यम्, नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः, एकः समवाय इति षट्पदार्थीमनुक्रम्य तदवान्तरविशेषैरानन्त्यं प्रमेयस्योपवर्णितमिति ? ]

उच्यते । किं पुनरिह प्रमेयं विवक्षितमिति । तत्सामान्यलक्षणं तावत् 20 परीक्ष्यताम् । आह । सूक्तमिदं कस्यापि 'कर्णे स्पृष्टः कटिं चालयति' इति । द्वादशविधत्वमाक्षिप्तं न प्रतिसमाधत्ते भवान्, प्रमेयस्य सामान्यलक्षणन्तु परीक्षत एव ।

उच्यते । अलं केलिना, एतदेवात्र प्रतिसमाधानं भवति । न हि प्रमाणविषयमात्रमिह प्रमेयमभिमतमेवंविधस्य प्रसिद्धत्वेन लक्षणानर्हत्वात् । प्रमाण एव ज्ञाते सति तद्विषयोऽर्थः प्रमेयमिति ज्ञायत एव । किं तेन लक्षितेन ? तस्माद् विशिष्टमिह प्रमेयं लक्ष्यते ।

5 ज्ञातं सम्यगसम्यग् वा यन्मोक्षाय भवाय वा ।
तत् प्रमेयमिहाभीष्टं न प्रमाणार्थमात्रकम् ।।

[तच्च द्वादशविधमेव भवति, न न्यूनमधिकं वेति समाहित इत्थं भवति विभागाक्षेपः । कुतः पुनरेष प्रमेयविशेषो लभ्यते ? निःश्रेयसार्थत्वाच्छास्त्रस्य, प्रमेयज्ञानस्य प्रमाणज्ञानवदन्यज्ञानोपयोगितामन्तरेण स्वत एव मिथ्या-
10 ज्ञाननिवृत्त्यादिक्रमेणापवर्गे हेतुत्वप्रतिज्ञानात्, तथाविधस्य चापवर्गोपायत्व-स्यात्मादिष्वेव भावात् ।]

भवत्वेवम्, सूत्रस्य तु कथमीदृशप्रमेयविशेषसमर्पणे सामर्थ्यं विशेषात्तु-शब्दप्रयोगसामर्थ्याच्च ? सत्यम् [आकाशकालदिगादि प्रमाणविषयत्वात् प्रमेयं भवति, तत्तु न सप्रयोजनम् । आत्मशरीरेन्द्रियार्थमनःप्रवृत्तिदोषप्रेत्य-
15 भावफलदुःखापवर्गास्तु प्रमेयं निःश्रेयसहेतुत्वादि]त्याशयः । तदित्थमेष तुशब्दो निःश्रेयसाङ्गभूतप्रमेयान्तरपरिहारद्वारेण विशिष्टमात्मादि प्रमेयमिह सूचयति ।

**प्रमेयपरीक्षाप्रयोजनम्**

तद् द्वादशविधत्वेऽपि हेयोपादेयभेदतः ।
20 द्विधोच्यते मुमुक्षूणां तथैव ध्यानसिद्धये ।।
तत्र देहादिदुःखान्तं हेयमेव व्यवस्थितम् ।
उपादेयोऽपवर्गस्तु द्विधावस्थितिरात्मनः ।।
सुखदुःखादिभोक्तृत्वस्वभावो हेय एव सः ।
उपादेयस्तु भोगादिव्यवहारपराङ्मुखः ।।

25 [आत्मनो हि भोगाधिष्ठानं शरीरम्, भोगसाधनानीन्द्रियाणि, भोक्तव्या इन्द्रियार्थाः, भोगो बुद्धिः, आन्तरं हि भोगकारणं मनः, प्रवृत्तिः पुण्यपापा-

त्मिका, रागादयश्च दोषाः शरीरादिजन्महेतवः, एतत्कृतश्च शरीरादियोगाध्यासः प्रेत्यभावः, एतत्कृतमेव च संसारे सुखदुःखरूपं फलम्, तच्च द्विविधमेव। विवेकवतः सर्वं दुःखमेवेति। एवं शरीरादिदुःखान्तं हेयतयैव भावनीयम्, एतदनुषक्तश्चात्मापि तथैव, एतद्वियुक्तस्त्वात्मैवापवर्ग उच्यते, स चोपादेयतया भावनीय इत्यत एवात्मपदसंगृहीतस्याप्यस्य पुनर्निर्देशः। स हि परमः पुरुषार्थ इति। एवमिदं द्वादशभेदं प्रमेयं हेयोपादेयतया तत्त्वज्ञानेन भावयन्नभ्यासात्तद्विषयविपरीतग्रहात्मकं मिथ्याज्ञानं क्षिणोति।

तत्त्वज्ञानेन तेनास्य मिथ्याज्ञानेऽपबाधिते।
रागद्वेषादयो दोषास्तन्मूलाः क्षयमाप्नुयुः॥
क्षीणदोषस्य नोदेति प्रवृत्तिः पुण्यपापिका।
तदभावान्न तत्कार्यं शरीराद्युपजायते॥
अशरीरश्च नैवात्मा स्पृश्यते दुःखडम्बरैः।
अशेषदुःखोपरमस्त्वपवर्गोऽभिधीयते॥

तदित्थमेव द्वादशविधं प्रमेयमतिगहनसंसारमारवस्थलप्रभवतीव्रसन्तापनिर्वापणमहाह्रदतामुपयातीति तदेवादेशार्हमिति सिद्धम्।

## आत्मपरीक्षायां लौकायतिकमतम्

विरक्तसङ्कथास्तावदसञ्जातफलोचिताः।
आत्मैव त्वस्ति नास्तीति कथं न परिचिन्त्यते॥
तथा च लौकायतिकाः परलोकापवादिनः।
चैतन्यखचितात् कायान्नात्मान्योऽस्तीति मन्वते॥

न तावदात्मा प्रत्यक्षतो गृह्यते घटादिवद् बाह्येन्द्रियेण, सुखादिवन्मनसा परिच्छेत्तुमशक्यत्वात्। अनुमानन्तु न प्रमाणमेव चार्वाकाणाम्। न चात्मसिद्धौ किञ्चन लिङ्गमस्ति। ज्ञानादियोगस्तु भूतानामेव परिणामविशेषोपपादितशक्त्यतिशयजुषां भविष्यति। यथा गुडपिष्टादयः प्रागसतीमपि मदशक्तिमासादितसुराकारपरिणामाः प्रपद्यन्ते, तथा मृदाद्यवस्थायाम-

चेतनान्यपि भूतानि शरीराकारपरिणतानि चैतन्यं स्प्रक्ष्यन्ति । कालान्ते स्वव्याध्यादिना विशेषमवजहति तान्येव चैतन्यशून्यतामुपयास्यन्ति, चैतन्यत्वानपायाच्च तावन्तं कालं तान्येव स्मृत्यनुसन्धानादिव्यवहारनिवहनिर्वाहणनिपुणतामनुभविष्यन्तीति किमनुमानक आत्मा स्याद् ? आगमास्तु मनोरथाधिरूढप्रामाण्याः कथमात्मानमवबोधयितुं शक्यन्ते ? अयमपि चागमोऽस्त्येव 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीति । तदात्मनो नित्यस्य परलोकिनोऽभावात् कृतमेताभिरपार्थकपरिश्रमकारिणीभिः परलोककथाभिः ।

**तत्रैव मीमांसकमतम्**

तत्र प्रत्यक्षमात्मानमौपवर्षाः प्रपेदिरे ।
अहंप्रत्ययगम्यत्वात् स्वयूथ्या अपि केचन ॥

अस्त्ययमहंप्रत्ययः कश्चिच्छरीरसमानाधिकरणः स्थूलोऽहं कृशोऽहम्, कश्चिद् ज्ञातृसमानाधिकरणो जानाम्यहं स्मराम्यहमिति । तत्र स्थूलादिसमानाधिकरणस्तावदास्तामहंप्रत्ययः ।

ज्ञानेच्छासुखदुःखादिसामानाधिकरण्यभाक् ।
यस्त्वहंप्रत्ययस्तत्र नात्मनोऽन्यः प्रकाशते ॥
न हि ज्ञानसुखेच्छादियोगः कर्मेन्द्रियादिषु ।
न च ज्ञानादिशून्येऽर्थे जानामीत्यादिसंविदः ॥
ज्ञानमात्रावभासोऽपि वारितः प्रत्यभिज्ञया ।
ज्ञातवानहमेवादावहमेवाद्य वेद्मि च ॥
नोत्तरस्य न पूर्वस्य न ज्ञानक्षणयोर्द्वयोः ।
न सन्तानस्य चैतस्मिन् प्रत्ययेऽस्त्यवभासनम् ॥
नोत्तरो ज्ञातवान् पूर्वं पूर्वो जानाति नाधुना ।
न द्वयोर्द्वयमप्यस्ति सन्तानस्तु न वास्तवः ॥

---

**औपवर्षाः प्रपेदिरे ।** औपवर्षा मीमांसकाः ।

**नोत्तरस्य** यदुत्तरकालमिदमनुसन्धानज्ञानं तदुत्तरम् । **न द्वयोर्द्वयमप्यस्तीति ।** पूर्वस्योत्तरज्ञानम्, उत्तरस्य च पूर्वज्ञानम् ।

अवस्तुत्वाच्च नासौ पूर्वं किञ्चिद् ज्ञातवान्न चाद्य किञ्चिज्जानातीति। तस्मादहमेव ह्यो ज्ञातवानहमेवाद्य जानामीत्यस्मिन् प्रत्यये ह्यश्चाद्य चानुवर्तमानो ज्ञाता प्रतीयत इति गम्यते। न चासौ कार्यः, बाल्याद्यवस्थाभेदेन नानात्वादचेतनत्वाच्च। एवं सप्रत्यभिज्ञाहंप्रत्ययग्राह्ये ज्ञातरि सिद्धे सोऽयं स्थूलादिसमानाधिकरणोऽहंप्रत्ययस्तदभेदोपचारेण शरीरे वर्तमानो मिथ्येति कल्पयिष्यते। न पुनरेतदनुरोधेन ज्ञानादिसमानाधिकरणाहंप्रत्ययस्य मिथ्यात्वकल्पनं युक्तमबाधितत्वात्। न खल्वहं जानामीति प्रत्ययः केनचिदल्पीयसा दोषरेणुना धूसरीकर्तुं पार्यते। तदस्यात्मैव मुख्यो विषयस्तदतिरिक्तं वस्तु भाक्तमिति। तस्मादहंप्रत्ययगम्यत्वादात्मा प्रत्यक्ष इति।

## आत्मनो ज्ञानानतिरिक्तत्वम्

अत्र वदन्ति। शब्दमात्रोच्चारणमेतदहं जानाम्यहमिच्छाम्यहं सुख्यहं दुःखीति, न तु ज्ञानादिस्वरूपातिरिक्तस्तदाश्रयः कश्चिदेतासु बुद्धिषु परिस्फुरतीति, कथमेकस्यामेव संविदि कर्ता च कर्म चात्मा भवेत्?

ग्राह्यग्राहकतैकस्य　　ज्ञानस्यापाकरिष्यते।
त्वयापि नेष्यते चेति　तथा सत्यात्मनोऽपि सा॥

यच्चावस्थाकृतं भेदमवलम्ब्य ग्राह्यग्राहकभावसमर्थनमेकस्यैवात्मनः कृतं किल, द्रव्यादिस्वरूपमात्मनो ग्राह्यं ज्ञातृरूपञ्च ग्राहकमिति, तदनुपपन्नम्, द्रव्यादिस्वरूपे ग्राह्ये न ज्ञातरि ग्राहकता साधिता स्यात्, आत्मवर्तिनोऽपि द्रव्यादिरूपस्य घटादितुल्यत्वात्।

यद्यपि निपुणमन्यैरुच्यते भवतु ज्ञातृतैव ग्राहिका तथापि विषयोपाधिकृतोऽस्त्येव भेदः, घटावच्छिन्ना हि ज्ञातृता ग्राह्या शुद्धैव तु

---

**तदभेदोपचारेणेति।** आत्मोपकारकत्वाच्छरीरमात्मवाचिना पदेन निर्दिश्यत इति।

**द्रव्यादिस्वरूपे ग्राह्ये नेति।** ततश्च घटादिवत् 'इदम्' निर्देश्यः स्याद् ग्राह्यांशः पृथगेव, पुनरप्यात्मनो ज्ञातुर्न ग्राह्यत्वम्।

**विषयोपाधिकृत इति।** विषयलक्षणो य उपाधिस्तत्कृतः।

ज्ञातृता ग्राहिकेति, अन्यत्र तु शुद्धविषयग्रहणमेव भवति घटोऽयमिति। तदेतदपि सरलमतिप्रतारणमात्रम्, तथा हि घटोऽयमित्यत्र घटमात्रप्रवणैव बुद्धिः; । इयांस्तु विशेषः पूर्वं केवलं घटग्रहणमधुना तु ज्ञानविशिष्टघटावमर्श इति ।

5 **शरीरस्यैवाहंप्रत्ययविषयत्वेनात्मनः परोक्षत्वम्**

ननु विभज्यमानायां प्रतीतौ घटोऽयमिति तावद् विषयग्रहणम्, जानामीति ज्ञानग्रहणमपि भवतु नाम, अहमिति तु कस्य ग्रहणम् ? न चैकस्यामेव प्रतीतावंशविभागेन प्रामाण्यमप्रामाण्यं वा वक्तुं युक्तम् । घटमिति जानामीति च प्रमाणमहमिति तु न प्रमाणमिति । तस्मादत्र ज्ञातुरवभासोऽभ्युपेयः ।
10 उक्तमत्र नैकस्यां प्रतीतावात्मनः कर्मता कर्तृता च स्यात्, यस्तूपाधिस्त्वयोन्नेतुमुपक्रान्तः सोऽयं न घटते घटप्रवणत्वादहं जानामीतिप्रतीतेर्विभज्यमानत्वेऽपि घटमिति जानामीति चांशद्वयं विशेषनिष्ठमेव जातम् । अहमिति त्वयमंशो यद्यात्मविषयो दृश्यते, तर्हि स एव शुद्धोऽवशिष्यते ग्राह्यग्राहकश्चेति नावस्थाकृतस्तद्भेदः समर्थितः स्यात्, भेदाभावेन चैकस्यैव ग्राह्य-
15 ग्राहकभावमुपाधिमभिदधता विज्ञानवादवर्त्म संश्रितं स्यात् । तस्मादहंप्रत्ययस्य ग्राहकाद्भिन्नं ग्राह्यमभिधित्सता शरीरमेव ग्राह्यमभ्युपगन्तव्यं ज्ञानसामानाधिकरण्यानुपपत्तेश्च वरमस्य नात्मालम्बनता । अत एव कृशश्यामसामा-

---

**अस्मत्प्रयोगसम्भेदाच्चेति** । तदुक्तम्,

अस्मत्प्रयोगसम्भिन्ना ज्ञानस्यैव च कर्तरि ।
20 भवन्ती तत्र संवित्तिर्युज्येताप्यात्मकर्तृका ॥ इति ।

अस्मदो यः प्रयोगोऽहमिति तेन सम्भिन्ना तदनुप्रवेशवती । **घट[मात्र]प्रवणैव**, न घटज्ञातृताविशिष्टात्मविषया । **ज्ञानविशिष्टघटावमर्श** इति । यमहं जानामि स घट इत्येवं ज्ञानविशिष्टघटावमर्शः ।

**त्वयोन्नेतुमुपक्रान्तः** त्वया उम्बेकेन पूर्वैरनुन्नीतोऽपि । **विशेषनिष्ठं** ग्राह्यग्रहीतृ-
25 निष्ठम् । **विज्ञानवादवर्त्मेति** । अनेनैव दृष्टान्तेन विज्ञानवादस्यावतारणात् । एकमेव ज्ञानं ग्राह्यं ग्रहीता च ज्ञातृत्वाद् आत्मवदिति । **ज्ञानसामानाधिकरण्यानुपपत्तेरिति** ।

नाधिकरण्यधीः शरीरालम्बनत्वस्य साक्षिणी न विरोत्स्यते ।

ननु ममेदं शरीरमिति भेदप्रतिभासात् कथमहंप्रत्ययः शरीरालम्बनः स्यात् ? भोः साधो ! नैवंविधेषु प्रत्ययेषु विश्वास्यत्वमर्हसि ममात्मेत्यपि भेदप्रत्ययस्य दर्शनादवस्थाभेदादिना यथा तथा तत्समर्थनमास्थीयते तदिह शरीरालम्बनत्वेऽपि सैव सरणिरनुसरिष्यते । तस्मादहंप्रत्ययः शरीरालम्बन एवेति । स च ज्ञानादिसमानाधिकरणो मिथ्या, स्थूलादिसमानाधिकरणस्तु सम्यगिति । ये तु मम शरीरं ममात्मेति च बुद्धी ते द्वे अपि मिथ्या ममप्रत्ययस्याहंप्रत्ययवदात्मानालम्बनत्वाच्छरीरं च भेदानुपपत्तेः ।

मम पाणिर्भुजो वेति भिन्नत्वादुपपद्यते ।
शरीरन्तु ममेत्येषा कल्पना राहुमूर्धवत् ॥

तस्मादहङ्कारममकारयोर्द्वयोरप्यविषयत्वादात्मा परोक्ष इति सिद्धम् ।

**तत्र पूर्वपक्षविरसनम्** - खण्डनम्

अपरे पुनराहुः । न ग्राह्यग्राहकरूपोभयसम्पत्तेरेकस्य कर्मत्वं कर्तृत्वञ्च युगपदात्मनो मन्यामहे; किन्तु चितिशक्तिस्वभावमपरसाधनमपरोक्षमात्मतत्त्वं प्रचक्ष्महे । न ह्यात्मा जन्येन ज्ञानेन घटादिरिव प्रकाशते, अपि तु स्वत एव प्रकाशते । चेतनत्वमपि तस्य नैसर्गिकमेव, न करणोपजनितचितियोगनिबन्धनम् । चिद्योगाद्धि चेतनत्वे घटादावपि तत्प्रसङ्गः । न चास्ति

---

यदाहं जानामीत्येवं प्रत्यय उत्पद्यते तदा मिथ्यैवायं प्रत्ययः । न ह्यहमिति प्रतिभासमानस्य शरीरस्य जानामीति सम्बन्ध उपपद्यत इत्यर्थः ।

**अवस्थाभेदादिना** सुखाकारत्वाद्यवस्थाभेदमाश्रित्य ममात्मेति व्यतिरेकः । **शरीरालम्बनत्वेऽपि सैव सरणिः** । ममेदं शरीरमित्यत्र ममेत्यनेन यौवनावस्थां परामृश्येदमित्यनेन वृद्धावस्थां निर्दिशति ।

**चिद्योगाद् हि चेतनत्व इति** । उत्पद्यमानया चिता ज्ञानेन यस्य सम्बन्धः स चेतन इति हि यद्युच्येत ततो घटस्यापि तयोत्पद्यमानया कारणत्वाविशेषात् सम्बन्धः केन वार्यतेति । अथात्मसम्बद्धैव सा उत्पद्यते न घटादिकारकान्तरसम्बद्धेति । तत्रा-

नियमहेतुरनेककारकपरिघट्टिततनुरपि चितिरात्मानमेव ज्ञातारं करोति, न कारकान्तरमिति। तस्मात् स्वत एव चित्स्वभावतास्य भद्रिका। तदिदमात्मप्रकाशनं संविद्वदवगन्तव्यम्। यदाहुः, 'संवित् संवित्तयैव संवेद्या न वेद्यतया' इति। नास्याः कर्मभावो विद्यत इत्यर्थः। एवमात्मा ग्राहकतयैव
5 प्रकाशते, न ग्राह्यतयैवेति तद्द्वैरूप्यस्य चोदनमनुपपन्नमिति।

एतदपि न चतुरश्रम्। अपरसाधनमिति कोऽर्थः? उपायान्तरनिरपेक्षमेव प्रकाशमानमात्मतत्त्वमास्त इति, तदयुक्तमकरणिकायाः प्रतीतेरदृष्टत्वात्। अपूर्वञ्च तत्किमपि यथाभ्युपगतं प्रमाणातिरिक्तमेव प्रमाणं स्यात्। न च नियमकारणमत्र पश्यामः। तथा प्रकाशमानः स एवात्मा प्रकाशते न परात्मेति,
10 प्रकाशमानत्वेनात्मनो नूनमनुभूयमानता वाच्या, अनुभूयमानता चानुभवकर्मत्व-मितरथास्याः प्रत्यक्षतैव न स्यात्।

अथोच्यते। न प्रत्यक्ष आत्मा किन्त्वपरोक्ष इति। नेदमर्थान्तरवचनम्। शिशव एवं प्रतार्यन्ते न प्रामाणिकाः। प्रत्यक्षश्च न भवत्यपरोक्षश्च भवतीति चित्रम्! प्रत्यक्षज्ञानकर्मत्वमस्य नास्तीति चेत्, तर्ह्यपरोक्षत्वमपि मा भूत्।
15 प्रकाशत्वादपरोक्षत्वमिति चेत्, न, दीपादेः प्रकाशस्याप्यन्धादिभिरगृह्य-माणस्य प्रकाशमानत्वायोगात्। तस्मात् प्रकाशते चिदात्मा नूनमनुभूयेतापि इति बलात् कर्मत्वमपरिहार्यम्। अतश्च तदवस्थैव द्वैरूप्यचोदना। प्रकाशज्ञानपक्षञ्च प्रतिक्षेप्स्यामः। स चात्मन्यपि तुल्यो न्यायः। कल्पनाद्वैरूप्यञ्च भवतामात्मा

---

प्याह न चास्ति नियमहेतुरिति। न ग्राह्यतयेति। एकस्यां संविद्यनुभवारूढस्य त्रयस्य
20 स्वेन स्वेन रूपेणावभासनात् प्रमातुः प्रमेयस्य प्रमितेश्च। प्रमातात्मा प्रमातृतयैव भासते अन्यथा भासनेऽस्य प्रमेयादविशेषः स्यात्; एवं प्रमितिरपि स्वरूपेणैव भासते, न प्रमातृ-प्रमेयरूपतया; प्रमेयन्तु प्रमेयरूपतयैव। अत एव त्रितयप्रतिभासोऽभ्युपगतो भवति, अन्यथा सर्वं प्रमेयमेव स्यात्।

किन्त्वपरोक्ष इति। प्रत्यक्षं हि तदुच्यते यत्राक्षव्यापाराद् ज्ञानमुत्पद्यते। तदन्यत्
25 परोक्षम्। [प्रकाशत्वाद् अपरोक्षमिति]। तत् पुनः प्रकाशते, अथवा अक्षव्यापारं नापेक्षते तदपरोक्षमिति। इह चात्मा प्रतीतिकर्तृतया प्रकाशते घटस्तु प्रतीतिकर्मतयेति।

च स्वप्रकाशः संविच्च स्वप्रकाशेति । न च निपुणमतिरपि विवेकमीदृशमुपदर्शयितुं शक्नोति भवान् । इयं स्वप्रकाशफलरूपा संवित्, अयं स्वप्रकाशो ज्ञातृरूप आत्मेति । चित्रञ्चेदं यत् तयोर्द्वयोः प्रकाशयोरन्तराले तद्व्यापारः परोक्षज्ञानाख्यः सम्पन्न इति ।

ननु घटमहं जानामीत्यत्र त्रयप्रतिभासो घटमिति विषयः प्रकाशते, अहमित्यात्मा, जानामीति संविदिति, उक्तमत्र घटं जानामीति ज्ञानविशेषणविषयप्रतिभासः, अहमिति तु शरीरे ज्ञातृत्वभ्रम एकस्यात्मनो ग्राह्यग्राहकत्वानुपपत्तेः ।

यदपि स्वतश्चेतनस्वभावत्वमात्मनः कथ्यते तदपि न सोपपत्तिकम् ।

सचेतनश्चिता योगात् तद्योगेन विना जडः ।
नार्थविभासादन्यद्धि चैतन्यं नाम मन्महे ॥

यदि च स्वत एवार्थावभाससामर्थ्यपक्षे च सर्वज्ञतापत्तिः, अतोऽवश्यं ज्ञानसमवायनिबन्धनमेवात्मनश्चेतयितृत्वम्, न च घटादिभिरतिप्रसङ्ग आशङ्कनीयः, पदार्थस्वभावोपनतस्यैव क्रियावैचित्र्यस्य सर्वलोकप्रसिद्धत्वाच्चेतनादिक्रियाः कर्मसमवायिन्यो न भवन्ति गमनादिक्रियास्तु कर्तृसमवायिन्य एव । न च वस्तुशक्तिरनुयोज्या भवति ।

न जडत्वाविशेषेऽपि कर्मादौ समवैति चेत् ।
न द्रव्यत्वाविशेषेऽपि गन्धः स्पृशति पावकम् ॥

तस्मान्न प्रत्यक्ष आत्मा, नापि स्वतश्चेतयितेति स्थितम् ।

## आत्मनः प्रत्यक्षत्वसाधनम्

स्वयूथ्यास्तु केचिदाचक्षते । यदेकस्य कर्तृत्वकर्मत्वमनुपपन्नमित्यप्रत्यक्ष आत्मेष्यते, तदयमनुमानेनापि कथं ग्रहीष्यते ?

---

**न च घटादिभिरतिप्रसङ्ग** इति । यदि [सं]वित्तिजनकत्वाद् वैषम्यं तर्हि घटादीनामपि प्राप्तं तदिति ।

**द्रव्यत्वाविशेषेऽपीति** । यथा द्रव्यत्वे सति पृथिव्या सम्बध्यते गन्धो नैव तेजसेत्यर्थः ।

आत्मानमात्मनात्मैव लिङ्गादनुमिनोति हि ।
तत्र नूनमुपेतव्या कर्तृता कर्मतास्य च ॥
तत्रानुमानज्ञानस्य यथात्मा याति कर्मताम् ।
तथाहंप्रत्ययस्यैव प्रत्यक्षस्यापि गच्छतु ॥
देहादिव्यतिरिक्तश्च यथा लिङ्गेन गम्यते ।
तथाहंप्रत्ययेनापि गम्यतां तद्विलक्षणः ॥

न चात्मनः किं रूपं यत् प्रत्यक्षेण साक्षात्क्रियते ? यद्येवं सुखादेरपि किं रूपं यन्मानसप्रत्यक्षसमधिगम्यमिष्यते ?

नन्वानन्दादिस्वभावरूपं प्रसिद्धमेव सुखादेस्तर्हि तदाधारत्वमात्मनोऽपि रूपमवगच्छतु भवान् ।

सुखादि चेत्यमानं हि स्वतन्त्रं नानुभूयते ।
मतुबर्थानुवेधात्तु सिद्धं ग्रहणमात्मनः ॥
इदं सुखमिति ज्ञानं दृश्यते न घटादिवत् ।
अहं सुखीति तु ज्ञप्तिरात्मनोऽपि प्रकाशिका ॥

अपि च,

ज्ञातृज्ञानविशिष्टार्थग्रहणं किल भाष्यकृत् ।
स्वयं प्रादीदृशत् तच्च किं वा युक्तमुपेक्षितुम् ॥
विशेष्यबुद्धिमिच्छन्ति नागृहीतविशेषणाम् ।
पूर्वञ्चाननुभूतस्य स्मरणं नावकल्पते ॥

---

**भाष्यकृत् स्वयं प्रादीदृशदिति** । तथा च न्यायभाष्यम्—"येयं स्मृतिरगृह्यमाणेऽर्थेऽज्ञासिषम[हम्] मुमर्थमिति, अस्या ज्ञातृज्ञानविशिष्टः पूर्वज्ञातोऽर्थो विषयो नार्थमात्रम्, अज्ञासिषममुमर्थम्, ज्ञातवानहममुमर्थम्, असावर्थो मया ज्ञातः, अमुष्मिन्नर्थे मे ज्ञानमभूदिति चतुर्विधमप्येतद् वाक्यं स्मृतिविषयप्रज्ञापकं समानार्थम् । सर्वत्र खल्वत्र ज्ञाता ज्ञानं ज्ञेयञ्च गृह्यते" इत्यादि । अत्र ज्ञातृविशिष्टार्थस्मरणं समर्थितम् । तथाभूतस्यैवानुभवो वाच्यः । न च अगृहीतविशेषणन्यायेन तज्ज्ञेयग्रहणसमये ज्ञातुरप्यवगमोऽभ्युपेयः । न च यदा ज्ञेयग्रहणं तदानुमानतो ज्ञाततादिलिङ्गाद् आत्मनो गृहीतिर्गृही-

न चानुमानतः पूर्वं ज्ञात्वात्मानं विशेषणम् ।
तद्विशिष्टार्थबुद्धिः स्यात् क्रमस्यानवधारणात् ॥

तस्मात् प्रत्यक्ष आत्मा ।

सामानाधिकरण्यञ्च स्मरणानुभवादिषु ।
अनुसन्धीयमानं यद् दृश्यते तत्कथं भवेत् ॥ 5

**आत्मनोऽनुमानगम्यत्वमपि**

पूर्वमहममुमर्थमनुभूतवानहमेवाद्य पुनरनुभवामीति तुल्यविषयतावत् तुल्यकर्तृकतापि तत्र प्रकाशते, इतरथा त्वनुमातुमप्यात्मा न शक्यते ।

ज्ञानेच्छासुखदुःखादि किलेदं लिङ्गमात्मनः ।
एकाश्रयतया ज्ञातमनुसन्धातृबोधकम् ॥ 10
तथात्वेन च तज्ज्ञानमाश्रयज्ञानपूर्वकम् ।
ज्ञाते तत्राफलं लिङ्गमज्ञाते तु न लिङ्गता ॥
तस्मात् प्रत्यक्ष एवात्मा वरमभ्युपगम्यताम् ।
वृद्धागमानुसारेण संविदालोकनेन च ॥
अथवाभिनिवेशेन किमनेन प्रयोजनम् । 15
अनुमेयत्वमेवास्तु लिङ्गेनेच्छादिनात्मनः ॥

तदाह सूत्रकारः, 'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्' । इच्छा नाम तावदित्थमुपजायते यज्जातीयमर्थमित्थमुपयुञ्जानः पुरुषः पुरा सुखमनुभूतवान्, पुनः कालान्तरे तज्जातीयमुपलभ्य सुखसाधनतामनुस्मृत्य

---

तस्य च स्मरणमिति । यदाह **क्रमस्यानवधारणाद्** ग्रहणसमय इत्यर्थः । 20

**एकाश्रयतया ज्ञातमिति** । यस्यैव प्रागनुभवस्तस्यैव दर्शनक्रमेणेच्छोपजायमाना पूर्वापरयोरनुसन्धातारमेकं गमयतीत्येकाश्रयत्वं प्रागवश्यमभ्युपेयम् । अनुभवेनैकाश्रया इच्छा अनुसन्धातृपूर्विका, एकाश्रयत्वे सतीच्छारूपत्वात्; यत्र पुनरेकानुसन्धातृपूर्वकत्वं नास्ति तत्रैकाश्रयत्वे सतीच्छारूपत्वमपि नास्ति, यज्ञदत्तो(त्ता)नुभूत इव देवदत्तेच्छायाः । **तथात्वेन** एकाश्रयतया । **अज्ञाते तु न लिङ्गता** । न हि यथा तल्लिङ्गं 25 तथा अज्ञातलिङ्गं भवति ।

तदादातुमिच्छति सेयमनेन क्रमेण समुपजायमानेच्छा पूर्वापरानुसन्धानसमर्थ-
माश्रयमनुमापयति कार्यस्य निराधारस्यानुपपत्तेराश्रयमात्रप्रतीतौ चान्वय-
व्यतिरेकवानेव हेतुर्भवति। इच्छा धर्मिण्याश्रितेति साध्यो धर्मः कार्यत्वाद्
घटादिवद् गुणत्वादिति वा हेतुर्वक्तव्यः। गुणत्वञ्चेच्छादीनामचाक्षुषप्रत्यक्ष-
5 त्वादिना रसादिवद्दर्शितमाचार्यैः। एवमन्वयव्यतिरेकवतामुना हेतुनाधिष्ठान-
मात्रेऽनुमिते तदधिष्ठानत्वे च देहेन्द्रियादौ प्रसक्ते पूर्वानुभूतसुखसाधनत्वानु-
सन्धानसव्यपेक्षतदुत्पादनपर्यालोचनया तत्कार्यसमानकर्तृकत्वावगमाच्छरीरादि-
विलक्षणाश्रया, शरीरादिषु बाधकोपपत्तौ सत्यां कार्यत्वादित्यत्र च
साधर्म्यदृष्टान्तो न सम्भवतीति वैधर्म्यदृष्टान्तः कार्यत्वे निर्विशेषणे य एव
10 साधर्म्यदृष्टान्तो घटः स एव वैधर्म्यदृष्टान्तः सविशेषणे, यत्र विलक्षणाश्रितत्वं
नास्ति तत्र सविशेषणं कार्यत्वमपि नास्ति यथा घटादाविति तु शक्यते
वक्तुम्, तत्र कार्यमात्रयोगेऽपि सविशेषणानां कार्यत्वाभावाद् विलक्षणाश्रया-
श्रितत्वं नास्ति भूतलाश्रितत्वेन प्रत्यक्षमुपलभ्यमानत्वात्।

ननु चान्वयदर्शनमन्तरेण केवलव्यतिरेकः प्रतीयमानः सन्दिग्धो भवति
15 किं तत्साध्याभावकृतैव तस्य तस्माद् व्यावृत्तिरुत निमित्तान्तरकृतेति, सन्दिग्ध-

---

**गुणत्वञ्चेच्छादीनामिति।** इच्छाधर्मो गुण इति साध्यम्, कार्यत्वे सति नियमेना-
चाक्षुषप्रत्यक्षत्वात्, रसवदिति। **तत्कार्यसमानकर्तृत्वेति।** सुखसाधनत्वज्ञानादिकार्येणैक-
कर्तृकत्वावगमात् शरीरादिप्रतिषेधे सतीति। तेषां नानात्वात् पूर्वोपलम्भाद्येककर्तृक-
त्वविशिष्टकार्याश्रयत्वाभावात्। **शरीरादिषु बाधकोपपत्ताविति।** पूर्वानुभवादिसव्य-
20 पेक्षकार्यत्वमेवेच्छायाः शरीराद्याश्रयत्वे बाधकम्, सविशेषणकार्यत्वायोगादिति। शरीरा-
दिष्वित्यत्र आदिपदेन यान्युपात्तानि भूतानि तत्कार्यत्वे बाधकाभावात् 'शरीरादिषु
बाधकोपपत्तौ कार्यत्वात्' इति सविशेषणस्य कार्यत्वाभावात्। **सविशेषणानां कार्यत्वा-
भावाद् विलक्षणाश्रयाश्रितत्वं नास्तीत्यादिना** एतदेव व्यक्तीकृतम्।

**तस्य तस्माद् व्यावृत्तिरिति।** यदिदं शरीरादिषु बाधकोपपत्तिविशिष्टं कार्यत्वं
25 तत् किं घटादौ शरीरादिविलक्षणाश्रितत्वस्य साध्यस्याभावाद् नास्त्युत कारणान्तरत
इति। अन्वये पुनः प्रदर्शित एवं वक्तुं न शक्यते। अन्यत्र साध्यान्विततयोपलम्भादिह
तस्याभाव इति हि तदा वक्तुं शक्यत एव।

व्यतिरेकस्य हेतोरगमकत्वं निश्चितव्यभिचारहेतुवदिति तार्किकाः ।

उच्यते । स्यादेतदेवं यदि प्रथममनवगतान्वय एव केवलव्यतिरेकशरणो हेतुः प्रयुज्यते, यतस्त्वन्वयव्यतिरेकता अवकाशं लभते । घटो हि भूतलाश्रितत्वेन प्रत्यक्षमुपलभ्यते, तदस्य विशेषणाश्रयविरहादेव सविशेषणहेतुशून्यता जाता, निर्विशेषणावस्थायां तद्योगदर्शनादिति न सन्दिग्धो व्यतिरेकः । अथवा शरीरत्वं सामान्यमिह वैधर्म्यदृष्टान्तीकर्तव्यम् । तत्र हि सर्वात्मना कार्यत्वस्पर्शोऽस्ति नास्ति, न च तद्विलक्षणाश्रितम्, शरीराश्रितत्वस्य प्रत्यक्षत उपलम्भादिति । तदियमिच्छा प्रथमपदार्थदर्शनादिकार्यसमानकर्तृकतयावगम्यमाना शरीरादिविलक्षणमाश्रयमवगमयति सविशेषणात् कार्यत्वादिति स्थितम्; यश्च स विलक्षण आश्रयस्तत्रात्मसंज्ञा आगमिकी ।

एवमेव द्वेषादेरात्मलिङ्गता वक्तव्या । यज्जातीयस्यार्थस्य सन्निधानाद् दुःखमनुभूतवान् पुरुषः, तज्जातीयमर्थं पुनरुपलभमानो दुःखसाधनतामनुसन्धाय तं द्वेष्टीति सोऽपि प्रतिसन्धातारमेकमन्तरेण नोपपद्यते । आभ्यामिच्छाद्वेषाभ्यामनन्तरं प्रयत्नः समुत्पद्यते । सोऽपि यथोक्तेन क्रमेणानुसन्धानपूर्वक एव प्रयतमानस्य सुखदुःखे भवतः । ते अपि तथैव द्रष्टव्ये । ज्ञानं यद्यपि प्रथममनुसंन्धाननिरपेक्षमपि भवति, तदपि च शक्यत एवात्मलिङ्गमभिधातुं तथाप्यनुसन्धानपूर्वेच्छादिकार्यप्रकरणान्निर्णयात्मकमिह ज्ञानमुदाहर्तव्यम् । तत्र हि बुभुत्साविमर्शादिपूर्वकत्वमुपकल्प्यते। तदेवमिच्छादीन्यात्मलिङ्गानीति स्थितम् ।

शास्त्रे चानेकहेतूक्तिर्न दोषाय कथास्विव ।
शिष्यः कश्चित् क्वचित् किञ्चिदनुस्मृत्याभिधास्यति ।।

इति कारुणिको मुनिरनेकमिह हेतुमार्गमुपदिष्टवान् ।

---

**तत्रात्मसंज्ञा आगमिकी** न पुनः प्रमाणादिसंज्ञावद् यौगिकी ।

**ते अपि तथैव द्रष्टव्ये** पूर्वानुसन्धानं विना प्रयत्नाभावः, प्रयत्नाभावाच्च तयोरप्यभाव इति । तदुत्पत्तावपि सर्वः पूर्वोक्तः क्रमः ।

**न दोषाय कथास्विव** । यथा वादादिकथासु दोषाय ।

नन्वत्र चोदितमनुसन्धातारमन्तरेण तदेतदिच्छादिकार्यं नावकल्पत इति कथं ज्ञायते ? एकत्र प्रमातरि तद्दर्शनादिति । यदुच्यते तदिदमेकप्रमातृग्रहणादात्मप्रत्यक्षत्वमङ्गीकृतं स्यादिति व्यर्थमनुमानम्; अग्रहणे तु प्रमातुरेकस्य तत्पूर्वकेच्छादेः प्रतिबन्धाग्रहणादशक्यमनुमानमिति, परिहृतमेतत्; कार्यत्वेनैव लिङ्गत्वमिच्छादेरुपवर्णितमस्माभिर्न स्मरणादिसमानाश्रयतयेति । किमर्थस्तर्हि प्रतिसन्धानोपन्यासः ? शरीरादिषु तदाश्रयत्वप्रतिषेधार्थः । न त्वेवं व्याख्यातवन्तो वयमेकस्य प्रमातुरिच्छादिकार्याश्रयत्वदर्शनादेकाश्रयत्वानुमानमिति तस्मान्न दोषः, शरीराश्रयत्वप्रतिषेधसाधनत्वेऽपि हेतोर्व्याप्तिग्रहणासम्भवात् । ग्राहकबुद्धिदर्शनस्मरणेच्छादिकार्यजातमेकत्र प्रमातृनियततयानवधारितम् । तत् कथमस्मदवस्थादिभिन्नशरीराद्याश्रयत्वनिषेधस्य तत्पूर्वकस्य वात्माश्रितत्वस्य सिद्धिः ?

क एवमाह न गृहीतमेककर्तृकतया कार्यमिच्छादीति । यदि गृहीतं तर्हि वक्तव्यं क्व गृहीतं केन वा प्रमाणेन गृहीतमिति ? स्वात्मन्येवेति चेत् सोऽयं प्रत्यक्ष आत्मा भवेत् । एवमनभ्युपगमे न व्याप्तिग्रहणमिति ।

उच्यते । न च प्रत्यक्ष आत्मा, न च व्याप्तेरग्रहणम्, न चैव धर्म्यन्तरे व्याप्तिर्गृह्यते किन्तु स्वसन्तान एव; तथापि न सिद्ध्यति प्रमातृनियतानुमानम्; कथमिव सिद्ध्यति सन्तानान्तरेषु प्रतिसन्धानस्य दृष्टत्वात् ।

किञ्च कोऽत्र व्याप्तिग्रहणकालः ? प्रमातृवद्धि तद्भेदेन भवितव्यम् । ततः किम् ? इदं ततो भवति । कथं स्वसन्तान एव व्याप्तिर्गृह्यतां कथञ्च तत्रैव प्रमातृनियमोऽनुमीयतामिति सेयमुभयतःपाशा रज्जुः; आत्मा वा प्रत्यक्षो व्याप्तिर्वा दुरवगमेति । नैतदेवम् । यथा शाक्यपक्षे सत्त्वात् क्षणिकत्वानुमाने

---

किन्तु स्वसन्तान एवेति । एकशरीरावच्छिन्ने क्वचिद् वस्तुनि । सन्तानान्तरेषु प्रतिसन्धानस्यादृष्टत्वात् । प्रमातृनियमस्य 'ये केचिदत्र न प्रमातारोऽपि तु नियम एव कश्चित्' इत्येवंरूपस्य ।

सेयमुभयतःपाशा । यथोभयतः पाशारज्जावेकदिशा योजनेऽपरदिशा विघटनम् । तद्वद् इदम् । यद्यात्मा न प्रत्यक्ष इत्यभ्युपगम्यते तदा व्याप्तेरघटनम्, व्याप्तिघटने त्वात्म-

व्याप्तिग्रहणम्, तथेहापि भविष्यति। तत्र हि यैव क्रमयौगपद्यव्यावृत्त्या सत्त्वस्य नित्येभ्यो व्यावृत्तिः, स एव क्षणिकैरन्वय इति धर्म्यन्तरनिरपेक्षतयैव साध्येऽपि धर्मिणि प्रतिबन्धग्रहणञ्चानुमानञ्च दर्शितम्। तद्वदिहाप्येकप्रमातृपूर्वकत्वेन प्रतिसन्धानस्य धर्म्यन्तरे यद्यपि ग्रहणं नास्ति तथापि सन्तानान्तरभेदे यदस्य दर्शनं तदेवैककर्तृकत्वदर्शनमिति कोऽनयोर्हेतुत्वे विशेषः ? 5

ननु तत्र नित्येभ्यः क्रमयौगपद्यव्यावृत्त्या व्यावृत्तं सत्त्वं शक्यग्रहणम्, इह तु प्रमातृभेदेन प्रतिसन्धानव्यावृत्तिर्दुरवगमा, स्वसन्तानेऽपि ज्ञानक्षणाभिन्ना एव प्रमातारः। न च तेभ्यो व्यावृत्तं प्रतिसन्धानमिति, तिष्ठत्वन्वयः। व्यतिरेक-मुखेनापि कष्टमिदमनुमानं वर्तते, स्वसन्ताने सन्तानान्तरवत् प्रमातृभेदाग्रहणात्, तद्भेदग्रहे हि स्वसन्तानविवेको न स्यात्, न चैवं प्रमातृभेदाग्रहणाभावात् 10 पुनरप्यात्मा प्रत्यक्ष आयातः।

मैवम्, नात्मा प्रत्यक्षः प्रमातृभेदो हि स्वसन्ताने न गृह्यते। अन्यच्च भेदाग्रहणमन्यच्च तदैक्यग्रहणम् भेदाग्रहवदेव च व्याप्तिसिद्धेर्न कष्टमनुमानम्।

ननु च स्वसन्ताने प्रमातृभेदाग्रहणं किं प्रमातुरेकत्वादुत ज्ञानानां कार्य- 15 कारणभावादिति न निश्चीयते, ततश्च सन्दिग्धो व्यतिरेकः; यथा ज्ञानानां कार्यकारणभावो नास्ति यथा च न तत्कृतोऽयं व्यवहारस्तथानन्तरमेव वक्ष्यामः। तस्मादिच्छादिकार्येण युक्तमेकप्रमात्रनुमानम्।

---

प्रत्यक्षसिद्धिरिति। **स एव क्षणिकैरन्वय** इति। न हि सत्त्वक्षणिकत्वयोः क्वचिद् धर्मिणि सिद्धेरन्वयग्रहणं सम्भवति, सर्वस्य क्षणिकत्वेन साध्यत्वात्। अतोऽक्षणिकेभ्यो व्यावृत्ति-रेव क्षणिकैरन्वयः सत्त्वस्य। क्षणिकाक्षणिकाद् राश्यन्तरस्याभावाद् अक्षणिकेभ्यो व्यावृत्तं 20 सत्त्वं क्वान्यत्र यायात् क्षणिकान् मुक्त्वेति।

**व्यतिरेकमुखेनापि** इति। यत्रैककर्तृकत्वं नास्ति तत्र प्रतिसन्धानादि नास्तीति व्यतिरेकासिद्धिः। ज्ञानक्षणेषु भिन्नेष्वपि प्रमातृषु प्रतिसन्धानस्य बौद्धदृष्ट्या सम्भाव्य-मानत्वादिति।

**भेदाग्रहणादेव च व्याप्तिसिद्धेरिति**। यावदेव भेदान् अगृहीतस्तावदेव प्रति- 25 सन्धानादेरभिन्नकर्तृकत्वेनान्वयो गृहीत इति।

ननु चाश्रितमिच्छादि देह एव भविष्यति ।
भूतानामेव चैतन्यमिति प्राह बृहस्पतिः ॥

उक्तञ्च मदशक्तिवद्विज्ञानमिति । उच्यते, शरीरं तावन्नेच्छादेराश्रयः शैशवयौवनवार्धकादिदशाभेदेन भिन्नत्वात् ।

5 तथा हि नान्यदृष्टोऽर्थः स्मर्तुमन्येन शक्यते ।
न चान्येन स्मृते तस्मिन्नन्यस्येच्छोपजायते ॥
तेनाद्यादर्थविज्ञानात् प्रभृतीच्छासमुद्भवात् ।
एकस्य कार्यचक्रस्य वक्तव्यः कश्चिदाश्रयः ॥

शरीरञ्च बाल्याद्यवस्थाभेदेन भिन्नम्, अतस्तस्य नाश्रयो भवितुमर्हति, 10 सन्तानान्तरवत् । यथा हि देवदत्तदृष्टेऽर्थे यज्ञदत्तस्य न स्मरणमेवं बालशरीराद् अनुभूते युवशरीरस्य तन्न स्यात् ।

नन्ववस्थामात्रमेव भिन्नमवस्थातृशरीरस्वरूपमभिन्नमेव प्रत्यभिज्ञा-प्रत्ययप्रामाण्यादवगम्यते, न चेयं प्रत्यभिज्ञा लूनपुनर्जातनखादिप्रत्यभिज्ञान-वदन्यथासिद्धा विनाशस्यासम्भवात् । स्तम्बादौ हि क्षणभङ्गित्वप्रतिषेधः 15 प्रत्यभिज्ञयैव करिष्यते, सा चेहापि तादृश्येव । तदयुक्तम् । स्तम्बादौ नानात्व-कारणाग्रहणात्, इह तु रूपपरिमाणपरिवेशाद्यन्यत्वदर्शनात् । सादृश्यनिबन्धनेयं भ्रान्तिरेव प्रत्यभिज्ञा । न खलु शिशुशरीरे तरुणशरीरे जरच्छरीरे च तुल्य-मेव परिमाणाद्युपलभ्यते ।

आहारपरिणामाच्च देहभेदोऽवगम्यते ।
20 पाकजोत्पत्तिमार्गेण न जीर्येतान्नमन्यथा ॥

---

**मदशक्तिवद् विज्ञानमिति** । यथा किण्वादिद्रव्यपरिणामादेव मदशक्तिरुदेति तद्वद् भूतपरिणामविशेषाच्चैतन्यमिति ।

**आहारपरिणामाच्चेति** । आहारो हि तदा परिणतो भवति यदा पुष्टिरुत्पद्यते । पुष्टिश्चोपचयः, स चापचयनिरोधेन भवति । अपचयोपचयनिरोधोत्पत्तिभ्यां चापचीय-25 मानोपचीयमाननिरोधोत्पत्ती । ते च **पाकजोत्पत्तिन्यायेन** । **न जीर्येतान्नमन्यथा**, अपरिणतं

न भवेत् परिपोषो हि दधिक्षीरादिभक्षणे ।
काञ्चनाद्युपयोगेन दृश्यते तस्य रक्तता ॥
क्षीणैरवयवैः कैश्चित् कैश्चित् त्वभिनवोद्गतैः ।
अभिन्न एवावयवी कथं भवितुमर्हति ॥

**बाल्यादिशरीरभेदसाधकं पीलुपाकवादिमतम्** 5

तथा च केचित् पच्यमानस्य घटादेरपि प्रागवस्थाविसदृशरूपादि-योगिनः पाककारणभूतवेगवदग्निद्रव्यसंयोगपर्यालोचनयैव प्रलयोदयौ कल्पितवन्तः ।

यद्यपि कन्दुकनिक्षिप्ता घटादयस्तृणपर्णादिपिहितवपुषोऽपि तद्विवर-प्रसृतेन नयनरश्मिना न विनष्टा इत्युपलभ्यन्ते, यद्यपि तत्संख्या तत्परिमाणं 10 तत्सन्निवेशस्तद्देशाश्च पक्वा अपि दृश्यन्ते, यद्यपि ततो विभक्ता न विभाव्यन्ते, ततस्तेषां कर्त्रादिकारणकलापासम्भवात् पुनर्घटनमघटमानमिव लक्ष्यते; तथापि तेषामनुमानेन विनाशः परिकल्प्यते, सर्वावयवेष्वन्त-र्बहिश्च पाकपूर्वकपूर्वरूपादिविलक्षणगुणोपलब्धेरन्तः प्रवेशः कृशानोरनुमीयते; तेन वेगवता वह्निद्रव्येण नोदनादभिघाताद् वा नूनं घटाद्यारम्भकेष्ववयवेषु 15 क्रिया जायते, क्रियातो विभागः, विभागाद् द्रव्यारम्भकसंयोगविनाशः, तद्विनाशाद् द्रव्यविनाश इति । अनुप्रवेशपक्षेऽपि सूक्ष्मविवरपरिकल्पनाद-वश्यमवयवसंयोगविघटनं घटादेरिति विनाश एव । अपि च पाकानन्तरं कन्दुकादपकृष्यमाणाः पिठरादयः केचित् स्फुटिताः केचिद् वक्रतां गताः, केचित् सन्निवेशान्तरमेव प्रतिपन्ना दृश्यन्ते । तस्मादपि पश्यामो नश्यन्तीति, 20 तत्संख्यत्वादिति सर्वमनैकान्तिकं सूच्यग्रविद्धकण्ठकोणैः कुम्भादिभिः, पूर्वोक्त-

---

स्यात् । **न भवेत् परिपोषः** विनाशानभ्युपगमे । सर्वस्मिन्नेव हि शरीरे विनष्ट आरम्भ-काणामवयवानामाहारभूतदध्यादिसारावयवसहितानामारम्भकत्वे स्थूलशरीरनिष्पत्तौ पुष्ट्यर्थानां दध्यादीनामुपयोगस्य साफल्यम् । शरीरस्य **प्राक्तनस्याविनाशे** चयाभावाद् आहाराभावाद् आहाराभावकृता रिक्ततापि न भवेत् । 25

**अनुप्रवेशपक्षेऽपीति** । तेजःपरमाणवो ह्यविनष्टेऽपि घटे प्रविशन्तीति पिठरपाक-

नीत्या नष्टेषु घटादिकार्यद्रव्येषु परमाणव एव पच्यन्ते, पक्वाच्च श्यामादि-गुणानवजहतो रक्तादिगुणान्तरयोगमनुभवन्तः प्राणिगतसुखदुःखोपभोग-साधनभूतादृष्टप्रेर्यमाणाः परस्परं संयुज्य द्व्यणुकादिप्रक्रमेण तादृशमेव घटादिकार्यमारभन्ते। तत्रामुष्मिन् क्षणेऽमुष्य कार्यस्य प्रसवोऽमुष्य प्रलय इति 5 प्रक्रिया न लिख्यते ग्रन्थविस्तरभयादप्रयोजनत्वाच्चेति।

एवं तपनातपदृश्यमानेष्वाम्रादिफलेष्वेष एव न्यायः। शरीरेऽप्युदर्येण तेजसा पच्यमानेष्वन्नपानादिषु रसमलधातुभावेन परिणाममुपगच्छत्सु प्रायेण प्रतिक्षणमुत्पादविनाशौ सम्भवत इति स्थैर्याभावात् कथमनुसन्धानादिकार्य-योगोऽस्येति।

10 **तत्रैव पिठरपाकवादिमतम्**

अपरे पुनः प्रत्यक्षबलवत्तया घटादेरविनाशमेव पच्यमानस्य मन्यन्ते। सुषिरद्रव्यारम्भाच्चान्तर्बहिश्च पाकोऽप्युपपत्स्यते। दृश्यते च पक्वेऽपि कलश-निषिक्तानामपां बहिः शीतस्पर्शग्रहणम्। अतश्च पाककाले ज्वलदनलशिखा-नुप्रवेशकृतविनाशबलादपि शिशिरतरनीरकणनिकरानुप्रवेशकृतनाशप्रसङ्गः। 15 न चेदृशी प्रमाणदृष्टिः। अतः प्रकृतिसुषिरतयैव कार्यद्रव्यस्य घटादेरारम्भा-दन्तस्तेजःकणानुप्रवेशकृतपाकोपपत्तेरलं विनाशकल्पनया। पिठरपाकपक्ष एव पेशलः।

> यादृगेव हि निक्षिप्तो घटः पाकाय कन्दुके।
> पाकेऽपि तादृगेवासावुद्गतो दृश्यते ततः॥

---

20 वादिनां मतम्। **अमुष्य कार्यस्य प्रसव** इति। अप्रयोजनन्तु कार्यमिदमस्ति किं कारण-विकल्पैरित्यनेन न्यायेन। तथा च वैशेषिकैर्नानाप्रक्रियाः प्रदर्शिता एव। श्यामादिनिवर्तके वह्नौ क्रियाया उत्पादः, प्राक्तनाकाशदेशेन विभागस्योत्पद्यमानता, तदवयवे क्रियाया उत्पद्यमानता, रक्ताद्युत्पादके च वह्नौ क्रियाया उत्पद्यमानतेत्येषामेकः कालस्तदनन्तरं श्यामादिनिवर्तके वह्नौ प्राक्तनाकाशदेशेन विभागस्योत्पादः, संयोगस्य विनश्यत्ता, 25 तदवयवे क्रियाया उत्पादः, प्राक्तनाकाशदेशेन विभागस्योत्पद्यमानता, रक्ताद्युत्पादके वह्नौ क्रियाया उत्पादः, प्राक्तनाकाशदेशेन विभागस्योत्पद्यमानतेत्येषामेकः काल इत्याद्यास्तत एवावसेयाः।

क्वचित्तु सन्निवेशान्तरदर्शनं काष्ठाद्यभिघातकृतमुपपत्स्यते पावकसम्पर्कस्य तत्कारित्वे तु सर्वत्र तथाभावः स्यात् । तस्मादविनष्टा एव घटादयः पच्यन्ते । सोऽयं तु घटादिन्यायः शरीरे नेष्यते ।

न ह्यन्नपाकस्थैर्येऽपि तत्र कुम्भादिपाकवत् ।
चयापचययुक्तं हि शरीरमुपलभ्यते ॥ 5

तस्मात् परिमाणादिभेददर्शनान्नैकं शरीरमिति ज्वालादिप्रत्यभिज्ञावत् तत् प्रत्यभिज्ञेति स्थितम् ।

## शरीराभेदसाधने युक्त्यन्तरनिराकरणम्

यदप्युच्यते, अवस्थानामेव नानात्वमवस्थाता पुनरेक एव देहाख्य इति, तदप्ययुक्तम्, भेदाभेदविकल्पानुपपत्तेः । यदि शरीरादव्यतिरिक्ता एव तदवस्था- 10 स्तदावस्थानामप्यन्योन्यं भेदो न स्यात् । अथ व्यतिरिक्ताः शरीरादवस्थास्तर्हि भेदेन तदुपग्रहो दर्शयितव्यः । न चासावस्ति । गोत्वादावनुवृत्ता बुद्धिरनन्यथासिद्धा सती न केनचित् प्रतिहन्यते । इह पुनरवस्थान्तरैकत्वग्राहिणी बुद्धिः पूर्वनीत्या प्रमाणबाधितत्वाद् भ्रान्तेति । तस्माच्छरीरस्य भिन्नत्वात् सन्तानान्तरवत् स्मृत्यनुसन्धानादिकार्ययोगो दुर्घट इति न 15 तस्येच्छादिकार्याश्रयत्वम् । इतश्च न शरीरस्य ज्ञानादियोगः परिणामित्वात् क्षीरादिवद्, रूपादिमत्त्वात् तद्वदेव, अनेकसमूहस्वभावत्वात् त्रिदण्डादिवत्, सन्निवेशविशिष्टत्वाच्च बाह्यभूतवत्; चैतन्यशून्यंशरीरंशरीरत्वान्मृतशरीरवत् । न शरीरधर्मश्चैतन्यमयावद्द्रव्यभावित्वात् । न च कण्ड्वादिभिर्व्यभिचार- स्तदुपजनापाययोर्निमित्तान्तरजन्यत्वदर्शनादिह च तदभावात्, विशेषगुणत्वे 20 सतीति वा विशेषणोपादानान्न व्यभिचारः । तद्विशेषगुणत्वे हि चैतन्यस्य रूपादिवत्तदवस्थानादविनाशप्रसङ्गः ।

## भूतचैतन्यवादोत्थापनं तन्निरासश्च

यत्तु मदशक्तिवदित्युक्तं तत्र मदशक्तेर्दृष्टत्वादभ्युपगमो न ज्ञानस्य तत्र

---

उपजनापाययोः काष्ण्याद्युपजनापाययोर्निमित्तान्तरानुपयोगादिति । 25

दर्शनम् । ननु ज्ञानमपि तदन्वयव्यतिरेकानुविधायि प्रायेण दृश्यते भूतेष्वन्नपानाद्युपयोगपुष्टेषु पट्वी चेतना भवति तद्विपर्यये विपर्ययः । ब्राह्मीघृताद्युपयोगसंस्कृते च कुमारशरीरे पटुप्रज्ञता जायते, वर्षासु च स्वेदादिना नातिदवीयसैव कालेन दध्याद्यवयवा एव चलन्तः पूतनादिक्रिमिरूपा उपलभ्यन्ते । 5 चैतन्यगुरुलाघवव्यवहारोऽपि भूतातिशयसदसत्त्वकृतो भविष्यतीति भूतचैतन्यवादपक्ष एव युक्तियुक्तो लक्ष्यते ।

नैतच्चारु । 'चेष्टेन्द्रियार्थाश्रयः शरीरम्' वक्ष्यते । तत्र तदनुग्रहादिन्द्रियानुग्रहे सति पटुकरणत्वाद् विषयग्रहणपाटवम् । न हि विषयग्रहणादन्यच्चैतन्यं नाम । एतेन ब्राह्मीघृतोपयोगोऽपि व्याख्यातः । व्यापकत्वादात्मनः सर्वत्र भावे 10 सति भोगायतनत्वेन कदाचित् केषाञ्चिद् भूतावयवानां समुपादानतः शुक्रशोणितादिवद् दध्यवयवान् विकृतानुपादास्यते । तथा च स्वेदजादिभेदे बहुभेदो भूतसर्गः प्रवर्तते विचित्रकर्मपरिपाकापेक्षयेति यत्किञ्चिदेतत् । तस्मान्न सर्वथा भूतानां चैतन्यमिति सिद्धम् ।

**इन्द्रियचैतन्यवादस्तन्निरसनञ्च—**

15 नापीन्द्रियाणि यथोक्तस्य ज्ञानादेः कार्यस्याश्रयतां प्रतिपद्यन्ते दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् । यमर्थमद्राक्षं चक्षुषा तमेवैतर्हि स्पर्शनेन स्पृशामि, यमस्प्राक्षं स्पर्शनेन तमधुना चक्षुषा पश्यामीति कतरदिन्द्रियमेवमनुसन्दधीत । न चक्षुः स्पर्शाविषयत्वात्, न त्वगिन्द्रियं रूपाविषयत्वात् । तस्मादुभयविषयग्रहणसमर्थः कश्चिदनुसन्धातास्तीति स इन्द्रियव्यतिरिक्तो गम्यते ।

20 अमुनैव प्रसङ्गेन रूपादिव्यतिरेकिणः ।
वक्तव्या गुणिनः सिद्धिरेतद्बुद्धिनिबन्धना ॥
रूपादिषु स्वतन्त्रेषु न ह्येष प्रत्ययो भवेत् ।
न रूपमस्य विषयो न स्पर्शो न च तद् द्वयम् ॥

अतश्च न गुणाव्यतिरिक्तो गुणी भेदेनाग्रहणादित्यसिद्धः परोक्तो हेतुः, 25 भेदग्रहणस्य दर्शितत्वात् । वृत्तविकल्पादीनान्तु प्रतिसमाधानं सामान्यसमर्थ-

---

चैतन्यगुरुलाघवेति । गुरुलाघवव्यवहारस्तीव्रमन्दताव्यवहारः ।

नावसरे कथितमवयविसिद्धौ वक्ष्यते चेत्यलमवान्तरचिन्तया । इतश्च नेन्द्रियाणां चैतन्यं करणत्वाद् वास्यादिवत् । भौतिकानि चेन्द्रियाणि वर्णयिष्यामः । तेन य एष भूतचैतन्यनिराकरणे न्यायो वर्णितः स तेष्वपि योजनीयः । अतश्चैवम् 'इन्द्रियान्तरविकारात्' ।

आम्रे हि चक्षुषा दृष्टे रसनिष्यन्दसुन्दरे ।
रसनस्य विकारः स्यान्नुदन्तोदकविप्लवः ॥ 5
बहूनामिन्द्रियाणाञ्च भिन्नाभिप्रायता भवेत् ।
तेनैकत्रैव सन्ताने नानाचेतनता भवेत् ॥

अतितुच्छश्चायमिन्द्रियचैतन्यपक्ष इति किमत्र बहु लिख्यते ।

### मनसश्चेतनत्ववादनिरसनम् 10

ननु मनस्तर्हीच्छादेरधिष्ठानं भविष्यति, तद्धि नित्यमेकं सर्वविषयमभौतिकमिति न प्राक्तनदोषैः स्पृश्यते ? उच्यते । मनसोऽपि तदाश्रयत्वमनुपपन्नम् । कुतः ? 'ज्ञातुर्ज्ञानसाधनोपपत्तेः, संज्ञाभेदमात्रम्' मनसो हीच्छाद्याश्रयत्वे ज्ञानादौ कर्तृत्वात् तस्यापि बाह्यगन्धादिविषयज्ञानायौगपद्यानुपपत्तेस्तद्ग्रहणे घ्राणाद्यधिष्ठानपटुना केनचिदान्तरसुखदुःखादिविषयग्राहिणा स्मृत्यादिक्रिया- 15 कारिणा च करणेन भवितव्यमिति तत्रात्मसंज्ञा भवेदात्मनि च कर्तरि मनःसंज्ञेति ।

न चास्य बाह्यकरणैः सिध्यन्ति सकलाः क्रियाः ।
न च स्मृतिसुखेच्छादौ शक्ताः स्युश्चक्षुरादयः ॥

### ज्ञानाश्रयत्वेन सिद्ध आत्मा 20

तेनेच्छासुखकृतिदुःखवेदनानामाधारो न खलु मनो न चेन्द्रियाणि ।
देहोऽपि व्रजति न तत्समाश्रयत्वं तेनान्यं पुरुषमतः प्रकल्पयामः ॥

दिक्प्रदर्शनमिदं कृतमिच्छाद्वेषयत्नसुखदुःखमतीनाम् ।
लिङ्गताकथनमात्मनि तत्र त्वस्ति हेतुनिवहो बहुरन्यः ॥

---

दिक्प्रदर्शनमिदं कृतमिति सूत्रकारेणेति शेषः । बहुरन्य इति कोऽसावित्याह 25

कर्तृप्रयोज्यता खलु दृष्टा दात्रादिकरणजातस्य ।
त्वक्श्रोत्राद्यपि करणं तथैव कर्त्रा प्रयुज्यते ।।
हिताहितप्राप्तिविमर्शयोग्या चेष्टा न दृष्टा नियता शरीरे ।
तच्चेतनाधिष्ठिततामुष्य गन्त्र्यारथादेरिव कल्पयामः ।।
5 प्राणादिमारुतानामन्तश्चलतां चलाचलगतीनाम् ।
सहजनिजकर्मविकृतौ कारणमनुमीयते किञ्चित् ।।
इदञ्च देहादितरत्र दुर्लभं निरीक्ष्य वृद्धिक्षतभग्नरोहणम् ।
ध्रुवं ग्रहस्येव गतिं प्रकल्पते निजाश्रमक्षेमपरायणो नरः ।।
युक्तञ्च नैवं मनसा ह्यनधिष्ठितानां स्वार्थप्रमाकरणकौशलमिन्द्रियाणाम् ।
10 स्यात् कश्चिदिष्टविषयानुगुणप्रयत्नो यत्प्रेरितं सदधितिष्ठति तानि चेतः ।।
ज्ञानप्रयत्नादिमतोऽथ कस्य दृष्टान्तता स्यात् करणादिलिङ्गे ।
कार्ये च नः पर्यनुयोग एष सामान्यमात्रस्य तवापि सिद्धेः ।।
प्रत्यक्षादिप्रमाणैर्यो व्यवहारः स चात्मना ।
विना नित्येन नेत्येवं ततस्तस्य प्रकल्पनम् ।।
15 यत्प्रत्यक्षं प्रत्यभिज्ञास्वभावं ज्ञात्रन्यच्चेत्तस्य न ह्यात्मलाभः ।
ग्राह्यस्यैक्यं यद्वदर्थस्य तस्मात् सिद्ध्यत्येवं ग्राहकस्यापि पुंसः ।।
अविनाभावग्रहणं लिङ्गज्ञानं तदन्वयस्मरणम् ।
लिङ्गिप्रमितिरितीदं न बोद्धृभेदेऽनुमानं स्यात् ।।

---

**कर्तृप्रयोज्यता खलु दृष्टेति ।** **चेष्टा न दृष्टा नियता,** अपि तु कादाचित्की गन्त्र्याः रथादेश्च
20 यथा । **सहजनिजकर्मविकृतौ ।** सहजं यन्निजं कर्म तिर्यग्गतिलक्षणं तस्य विकृतिः ऊर्ध्वम्
अधश्च गतिः । **वृद्धिक्षतभग्नरोहणमिति ।** क्षतं मांसस्य भङ्गः, अस्थ्नोच्छेदो रोहणम् ।
वृद्धिश्च क्षतभग्नरोहणञ्च तत् । **चेतो** मनः । **ज्ञानप्रयत्नादिमत** इति । करणं धर्मि
ज्ञानप्रयत्नादिमदधिष्ठितकरणत्वाद् वास्यादिवदित्यत्र वास्यादौ किमधिष्ठातृ विवक्षितम्,
शरीरमन्यद्वा ? शरीरस्याधिष्ठातृत्वे साध्यविकलत्वं साध्यविपरीतसाधनाद् विरुद्धश्च हेतुः;
25 तदन्यस्त्वसिद्ध एवेति । **सामान्यमात्रस्य तवापि सिद्धेः ।** प्रयत्नादिमन्मात्राधिष्ठितत्वं
भवताप्यभ्युपगतमेवेति । एवञ्च विशेषविरुद्धोद्भावने सकलानुमानोच्छेदप्रसङ्ग
इत्यसकृदुक्तम् ।

ज्ञाते वनेचरमुखादतिदेशवाक्ये दृष्टे मृगे विपिनवर्तिनि गोसदृक्षे ।
तत्संज्ञतामितिफलं लभते प्रमातृभेदे न चेदमुपमानमितिप्रतिष्ठम् ।।

वर्णानां श्रवणं क्रमेण समयस्मृत्या पदार्थग्रह-
स्तत्संस्कारजमन्त्यवर्णकलनाकाले तदालोचनम् ।
आकाङ्क्षादिनिबन्धनान्वयकृतं वाक्यार्थसम्पिण्डनं　　5
ज्ञात्रैकेन विनातिदुर्घटमतो नित्यात्मसिद्धिर्ध्रुवम् ।।

मयेदं पूर्वेद्युर्विहितमिदमन्येद्युरपरम् ।
विधातव्यञ्चेति श्रुतिकृषिवणिज्यादिषु जनाः ।।
यदेवं चेष्टन्ते निपुणमनुसन्धाय तदमी ।
ध्रुवं सर्वावस्थानुगतमवगच्छन्ति पुरुषम् ।।　　10

इत्यादि लक्षणमवादि तदेतदिच्छाद्वेषप्रयत्नसुखदुःखसमाश्रयत्वम् ।
तत्सङ्गिनं तदिह हेयतया व्यवस्येत् तद्विप्रयुक्तमधिगम्यतया मुमुक्षुः ।।

## अनित्यज्ञानानतिरिक्तात्मवादिबौद्धमतम्

अथो तथागताः प्राहुः किं पुंसा कल्पितेन वा ।
ज्ञानमात्रेण पूर्वोक्तो व्यवहारोऽवकल्पते ।।　　15
ज्ञानं किमात्मवन्नित्यं सौगतैरुपगम्यते ।
प्राग्दर्शितानुसन्धानस्मरणादिक्रियाक्षमम् ।।
ज्ञानं बौद्धगृहे तावत् कुतो नित्यं भविष्यति ।
अन्येऽपि सर्वे संस्काराः क्षणिका इति गृह्यताम् ।।
क्षणिकञ्चेष्यते कार्यं न क्वचित् किञ्चिदाश्रितम् ।　　20
स्वतन्त्रं ज्ञानमेवातो नान्यस्तेनानुमीयते ।।
ज्ञानस्यैव प्रभेदोऽयमिच्छाद्वेषसुखादिकः ।
न वस्त्वन्तरमित्येवं न ततोऽप्यन्यकल्पनम् ।।

---

**तत्संज्ञितामिति फलम्** । अयं स गवय इति या संज्ञितामितिः संज्ञासंज्ञिसम्बन्ध-　　25
प्रतिपत्तिः सैव फलम् ।

**सर्वे संस्काराः** । सर्वे ते सम्भूय हेतुभिः क्रियन्त इति संस्काराश्च ते । **न क्वचित्**

गुणत्वमपि नास्त्यस्य यतोऽधिष्ठानकल्पना ।
न गुणव्यतिरिक्तश्च गुणी नामास्ति कश्चन ॥
निराश्रयेषु विज्ञानस्कन्धेषु क्षणभङ्गिषु ।
कथं स्मृत्यादि कार्यं वा परलोकोऽपि वा कथम् ॥

5 सत्यपि वा परलोके कथमकृताभ्यागमकृतविप्रणाशौ पराक्रियेते, येन हि ज्ञानेन चैत्यवन्दनादि कर्म कृतं तस्य विनाशान्न तत्फलोपभोगः, यस्य च फलोपभोगस्तेन न तत्कर्म कृतमिति । नैष दोषः । कार्यकारणभावस्य नियामकत्वादनादिप्रबन्धप्रवृत्तो हि ज्ञानानां हेतुफलभावप्रवाहः । एष एव च सन्तान इत्युच्यते। तत्कृतश्चायमनुसन्धानादिकार्यनियमः। सन्तानानादित्वादविच्छेदाच्च 10 परलोकोऽपि न क्लिष्टकल्पनः। यद्यपि च सन्तत्यन्तरपतितज्ञानजन्यमपि सन्तत्यन्तरे ज्ञानं दृश्यते, तथापि न तादृशकार्यकारणभावेन सन्तानव्यवहारः, प्रतिसन्धानादिकार्यनिर्वाहो वा; किन्तूपादानरूपतद्विशेषणनिबन्धन एवैष निर्वहति नियमः । तस्मिन्नेव सति स्वरूपसन्तानविभागोऽवकल्पते ।

स्मृतिवत् परिहर्तव्यौ कृतमाशाकृतागमौ ।
15 तत्सन्तानोपसङ्क्रान्त्या कुसुमे बीजरागवत् ॥

आह च,

यस्मिन्नेव च सन्तान आहिता कर्मवासना ।
फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ॥

---

**किञ्चिदाश्रितम्** । क्षणिकत्वे सति आश्रयाश्रयिभावादिति भावः । **यतोऽधिष्ठानकल्पना** । 20 गुणस्य निरधिष्ठानस्यानुपलम्भादिति । **निराश्रयेष्विति** । विज्ञानान्येव कार्यकारणभावेन स्थितानि राशीक्रियमाणानि विज्ञानस्कन्ध इत्युच्यते ।

**यद्यपि च सन्तत्यन्तरेति** । तथाहि—समीहादिनाऽनुमीयमाना सन्तानान्तरबुद्धिरनुमेयज्ञानस्यालम्बनकारणतां प्रतिपद्यते; उपाध्यायज्ञानस्य च शिष्यज्ञानोत्पत्तौ कारणत्वदर्शनात् । **न तादृशकार्यकारणभावेनेति** । अत्र सहकारित्वेनोपाध्यायादिज्ञानं 25 जनकं नोपादानत्वेनेति भावः ।

**तत्सन्तानोपसङ्क्रान्त्येति** । व्यवस्थितायां सन्ततौ विज्ञाने **आहिता कर्मवासना**

नित्यस्त्वात्माभ्युपगम्यमानो यदि सुखादिजन्मना विकृतिमनुभवति तदयं नित्य एव धर्मादिवदुक्तः स्यात्, निर्विकारत्वे तु सतासता वा सुख-दुःखादिना कर्मफलेन कस्तस्य विशेष इति कर्मवैफल्यमेव । तदुक्तम्,

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् ।
चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्समः ।। इति ।　　5

तस्मादुत्सृज्यतामेष मूर्धाभिषिक्तः प्रथमो मोह आत्मग्रहो नाम । तन्निवृत्त्या चात्मीयग्रहोऽपि विरंस्यति अहमेव न किं ममेति । तदिदमहङ्कार-ममकारग्रन्थिप्रहाणेन नैरात्म्यदर्शनमेव निर्वाणद्वारमालम्ब्यताम् । तस्य स मार्गः क्षणिकपदार्थनिश्चयः । क्षणिकेषु हि सर्वभावेषु निराश्रयेषु ज्ञानस्या-प्याश्रयविरहात् कुतस्त्यमात्मकल्पनमिति ।　　01

---

कर्मजनितः संस्कारः, सा पुनः कालान्तरे सहकारिसन्निधानाद् लब्धपरिपाकवती तत्रैव सन्ताने फलं समुत्पादयति, न सन्तानान्तरे । यथा कस्याञ्चित् कर्पाससन्ततौ बीजावस्था-यामाहिता रक्तता मध्ये विच्छिन्नापि कुतश्चिद्देशकालाद्यनुग्रहात् तत्कुसुमे आविर्भवति, नान्यत्र । एवं हेतुफलभावेन व्यवस्थितेषु क्षणेषु येन ज्ञानेनानुभूतं वस्तु तेनोत्तरज्ञाने शक्तिराहिता; तेनाप्यन्यत्र यावत् प्रणिधानादिवशात् प्रबोधे सति स्मृतिर्भवति तत्रैव, न सन्तानान्तरे । पूर्वानुभवजनितो हि संस्कारः संस्कारान्तरजननद्वारेण स्मृतिजनकं क्षण-मुपस्कारसहितं जनयति तत्रैव सन्ताने वाचोयुक्तिः ।　　15

**वर्षातपाभ्यां किं व्योम्नः** । नैव ताभ्यां व्योम्नः किञ्चित् कर्तुं शक्यत इत्यर्थः ।

**उत्सृज्यतामेष** इति । यदुक्तम्—

सर्वासां दोषजातीनां जातिः सत्कायदर्शनात् ।　　20
साऽविद्या तत्र तत्स्नेहस्तस्माद् द्वेषादिसम्भवः ॥
आत्मात्मीय-ध्रुवोच्छेद-नास्ति-हीनोच्चदृष्टयः ।
अहेत्वमार्ग-तद्दृष्टिरेता हि पञ्च दृष्टयः ॥

इत्यादि । **अहङ्कारममकारग्रन्थिप्रहाणेति** । अहङ्कारममकाराविव दुर्मोचत्वाद् ग्रन्थी ।　　25

**प्रसङ्गात् क्षणिकपदार्थवादः**

कथं पुनरेष सकलप्रमातीतः क्षणिकपदार्थवादः शक्यते शाक्यैरभ्युपगन्तुम् ?

न खलु क्षणभङ्गित्वे भावानामक्षजा मतिः ।
5 न भूमिरनुमानस्य विकल्पनियतस्थितेः ।।
स्मरणप्रत्यभिज्ञाने प्रत्युत स्थैर्यसाधके ।
एवञ्च वञ्चनामात्रमाशुनाशित्वदेशना ।।

उच्यते । प्रत्यक्षगम्यं क्षणिकत्वं भवति न भवत्येष करिष्यते विचारः । अनुमानन्तु सम्प्रत्येवमभिधीयते । सत्त्वात् क्षणिकाः पदार्था इति । सत्त्वं 10 तावदर्थक्रियाकारित्वमुच्यते । यथार्थमर्थक्रियासमर्थं यत् तदेव परमार्थसदिति । सत्प्रत्ययगम्यत्वे हि सत्त्वे केशोण्डुकादेरपि सत्त्वप्रसङ्गः । सत्तासम्बन्धे सत्त्वे सामान्यादीनां तदसम्बन्धादसत्त्वं स्यात् । अर्थक्रियासामर्थ्यसत्त्वानुवर्त्ती च लौकिको व्यवहारः । सत्यपि पुत्रे तत्कार्यादर्शनादपुत्रा वयमिति व्यपदिशन्ति लौकिकाः, । पुत्रादन्यस्मिन्नपि तत्कार्यकारिणि सति सपुत्रा 15 वयमिति च ब्रुवते । तस्मादर्थक्रियाकारित्वमेव सत्त्वम् । भवत्वेवम् । तस्य तु कुत्र कथं वा क्षणिकत्वेन व्याप्तिग्रहणम् ? कुत्रेति यत् पृच्छसि यत्र रोचते महाभागाय घटे पटे वा गृह्यतां व्याप्तिः, किं साध्यधर्मिण्येव व्याप्तिग्रहणमुपपद्यते ? धीमन् ! कोऽत्र प्रमादः ? न हि दैवनिर्मितः कश्चित् साध्यधर्मी नाम ग्रहीतुं शक्यते चेद् व्याप्तिर्यत्र तत्र सा गृह्यतामिति । तदुच्यते । 20 भावानां हि सत्त्वं क्षण (क्रम) यौगपद्याभ्यां व्याप्तम् ।

नित्येषु च पदार्थेषु व्यापकानुपलम्भनात् ।
तद्व्याप्तमपि सत्त्वं हि बलात्तेभ्यो निवर्तते ।।
न च राशिस्तृतीयोऽस्ति तेन गत्यन्तरक्षयात् ।
क्षणिकानेव तान् भावान् सत्त्वं समवलम्बते ।।

---

25 न भूमिरनुमानस्येति, यत्र धूमस्तत्राग्निरिति तदपि नाभावात्मके विकल्पे नियता प्रतिबद्धा स्थितिर्यस्य ।

तच्च स्वग्राहकाद्बोधादसन्दिग्धं प्रतीयते ।
ज्ञानोत्पत्त्यैव तद्धेतोरसामर्थ्ये पराकृते ॥
असमर्थात् समुत्पादो दृश्यते न हि कस्यचित् ।
शक्ताशक्तप्रसक्तत्वे तत्र बोधोऽस्ति संशयः ॥
अत एव च तज्ज्ञानं प्रमाणं जगदुः स्वतः ।
स्वरूपे शक्तिजत्वे तु संशयादेरसम्भवात् ॥

किमिदं रजतमुत शुक्तिकेति विशेषांशे संशेरतां नाम प्रमातारः, न तु सामर्थ्यं प्रति दोला काचित् सम्भवति, किमिदं ज्ञानं समर्थेन जनितमुत तदितरेणेत्यसमर्थस्य जनकत्वानुपपत्तेः, व्यापकानुपलम्भस्यापि व्याप्तिग्राहिणः स्वतःप्रामाण्यम्, संशयविपर्ययोस्तत्राप्यभावात् ।

कथं पुनर्नित्येषु पदार्थेषु सत्त्वव्यापकयोः क्रमयौगपद्ययोरनुपलम्भः ? उच्यते । नित्यो हि भावः क्रमेण वा कार्यं कुर्याद् यौगपद्येन वा, परस्परविरहस्थितात्मनां तृतीयप्रकारानुपपत्तेः ।

---

**तच्च स्वग्राहकाद् बोधादिति** । य एव पदार्थस्य ग्राहको बोधः स एव तत्सत्त्वनिश्चायकः । **प्रमाणं जगदुः स्वतः** इति । यदाहुः,

विषयाकारभेदाच्च धियोऽधिगमभेदतः ।
भावादेवास्य तद्भावे स्वरूपस्य स्वतो गतिः ॥

**विशेषांशे संशेरतां नाम** जनाः, न पुनः सत्त्वे संशेरते, असतो ज्ञानजनकत्वाभावात् । **संशयविपर्ययोस्तत्राप्यभावादिति** । यथा वृक्षत्वस्य व्यापकस्यानुपलम्भाद् व्याप्यस्य शिंशपात्वस्याभावे न सन्देहस्तथा क्रमयौगपद्यलक्षणस्य व्यापकस्याक्षणिकेऽनुपलम्भात् तद्व्याप्तस्य सत्त्वस्याभावो निःसंदेहः, अतः सत्त्वं तेभ्यो निवर्तमानं क्षणिकेष्वेवावतिष्ठत इति व्यापकानुपलम्भेन सत्त्वक्षणिकत्वयोर्व्याप्तिग्रहः ।

**परस्परव्यवच्छेदव्यवस्थितात्मनां तृतीयप्रकारानुपपत्तेरिति**, यथा नित्यानित्यादयः सदसदादयश्च परस्परपरिहारव्यवस्थितात्मानस्तथा क्रमोऽप्यक्रमव्यवच्छेदेनैव व्यवस्थितः । क्रमव्यवस्थापकेन प्रमाणेन ततोऽन्योऽक्रमत्वेन व्यवस्थाप्यते । अक्रमश्च यौगपद्यम् । सोऽपि प्रमाणादवगम्यमानः क्रमव्यवच्छेदेनैव गम्यते नीलमिवानीलव्यवच्छेदेन । यदा तु तृतीयो राशिः क्रमाक्रमरूपोऽभ्युपेयते तदैकस्य विरुद्धरूपद्वययोगिता युगपदिति ।

न तावत् क्रमेण, स हि समर्थो वा असमर्थो वा ? समर्थश्चेत् क्रमेण कथम् ? समर्थस्य क्षेपायोगात् । असमर्थस्त्वसमर्थत्वादेव न करोति किञ्चिदिति तस्यापि किं क्रमेण ? सहकार्यपेक्षया करोतीति चेत्, न, असमर्थस्य सहकारिणापि सामर्थ्याधानानुपपत्तेः, समर्थस्य स्वत एव सामर्थ्ये सति सहकारित्व-
5 वैयर्थ्यात् । सहकारिसन्निधानेऽपि चास्य स्वरूपेण वा कर्तृत्वं स्यात् पररूपेण वा ? स्वरूपस्य च प्रागपि भावात् तस्य च कारकत्वात् किं सहकारिणा ? पररूपेण कर्तृत्वे पूर्वरूपपरित्यागात् तद्रूपान्तरापत्तेश्च क्षणिकत्वमुपपद्यते । एवं सहकार्यपि समर्थासमर्थतया विकल्पनीयः । स्वतोऽपि सामर्थ्ये किं परोपकरणदैन्येन ? असमर्थस्य तु सचिवः किमागत्यापि सर्वत्र कार्ये साचिव्यमुप-
10 गच्छेत् ?

किञ्चित्करश्चेत्, वक्तव्यं किं करोतीति । उपकारमिति चेत्, स उपक्रियमाणाद्भिन्नोऽभिन्नो वा ? अभिन्नश्चेत्, स एव कृतः स्यात्; भेदे तस्य किमायातम्, यदसौ न पूर्ववदास्ते । कार्यादपि भेदाभेदाभ्यां चिन्त्य उपकारः । न कार्याद्भिन्नोऽनुपलम्भाद् द्वयकारणभावाच्च । कार्यादव्यतिरिक्ते तूपकारे
15 सहकारिणा क्रियमाणे कार्यमेव तेन कृतं स्यादिति मूलकारणानर्थक्यम् ।

ननु चैक एव भावः कारकः, स एव हि समर्थस्तदितरपदार्थसन्निधानन्तु स्वहेतुवशादुपनतमिति नोपालम्भमर्हति । नैतद्युक्तम् । एकस्य कदाचिदपि कारकत्वानुपलब्धेस्तत्सामर्थ्यस्य दुरधिगमत्वात् । एवं ह्यसौ समर्थ उच्यते यद्येकः कदाचित् कार्यमुत्पादयन् दृश्येत न तु विस्मृत्यापि
20 दृश्यते । अथ कार्यस्यायं स्वभावो यदेकस्मान्नोत्पद्यते कारणन्तु शक्तमेवेति ।

तदप्ययुक्तम् । कार्यस्वभावपराधीनत्वेन कारणस्य सामर्थ्यविरहप्रङ्गात् । एवं ह्यसौ समर्थः कथ्येत यदि कार्यस्वभावमनादृत्य स्वतन्त्र एक एव प्रसह्य कार्यं जनयेत्, न चैवं दृश्यत इति यत्किञ्चिदेतत् ।

25 अथ समर्थमेव कारणं तस्य त्वयं स्वभावो यत् सहसैव कार्यं न करोति,

कार्यादपि भेदाभेदाभ्यामिति । किं कार्यमेवोपकार उत तदन्य इत्यर्थः ।

कतिपयक्षणव्यवधाने तु करोतीति । यद्येवं न कदाचित् कार्योत्पादः स्यात्, कार्योत्पादसमयेऽपि कतिपयक्षणव्यवहितकार्यजननस्वभावानपायात्, पुनः कतिपयक्षणाद्यवेक्षणं स्यात्, तेष्वपि कतिपयेषु क्षणेष्वतिक्रान्तेषु स एवास्य स्वभावस्तदवस्थ इति पुनरप्येवं भवेदिति कदा नाम कार्यं जनयेत् ? तदेवमादिदोषोपहतत्वान्न क्रमेण भावानामर्थक्रियासामर्थ्यम् । 5

नापि युगपत्, लोके तथा व्यवहारादर्शनात् । युगपत् कृतकस्यापि स्थिरस्य पुनरकरणे हेत्वभावः, पुनश्च कुर्वन्नपि भावः कार्यं न तदेव कुर्यात्, कृतस्य करणायोगात्, कार्यान्तरकरणे तु स एवायं पुनः क्रमपक्ष आपतेदित्येवं क्रमयौगपद्ये नित्येभ्यः पदार्थेभ्यो निवर्तेते, ते च निवर्तमाने सत्त्वस्य व्यापके इति सत्त्वं तेभ्य आदायैव निवर्तेते, तेभ्यः प्रच्युतं सत्त्वं गत्यन्तर- 10 विरहात् क्षणिकेष्वेव निविशते । अतो यद्यपि कार्ये हेतौ धूमाग्न्योरिव स्वभाव- हेतावपि वा क्वचिद् वृक्षत्वशिंशपात्वयोरिव पूर्वमिह साध्यसाधनधर्मयोर्ग्रहणं धर्म्यन्तरे न वृत्तं तथापि साध्यधर्मिण्येव व्याप्तिग्रहणमुपपत्स्यते विपक्ष- व्यावृत्तेः सुपरिनिश्चितत्वात् । यैव च विपक्षाद् व्यावृत्तिः स एव चास्य हेतोः स्वसाध्येनान्वयः । न ह्येवं सम्भवति नित्येभ्यश्च व्यावृत्तं सत्त्वं क्षणिकेषु 15 च न निष्ठमिति, तृतीयराश्यभावान्निराश्रयत्वानुपपत्तेश्च । तदेवं क्वचिद्धर्मिणि व्याप्तौ गृहीतायां यदि स एव कदाचित् परं प्रति दृष्टान्तोक्रियते, तदैवं नाम भवतु, को दोष इति ?

ननु व्यापकानुपलब्धेरनुमानमनुमानेन चानुमानस्य व्याप्तिग्रहणे- ऽनवस्था ? नानवस्था, तावत्येव पर्यवसानात् । न हि व्यापकानुपलब्धेरनु- 20 मानान्तराद् व्याप्तिनिश्चयः, किन्तु प्रत्यक्षविकल्पादेव । तदनया व्याप्तिनिश्चयात्

---

**लोके तथा व्यवहारादर्शनादिति ।** स्नान-भोजन-शयनादीनां युगपत् क्रियाया अदृष्टेरित्यर्थः । **तृतीयराश्यभावादिति ।** क्षणिकाक्षणिकापराया अभावात् ।

**ननु व्यापकानुपलब्धेरनुमानमिति ।** तथाहि यथा सत्त्वं क्षणिकत्वसाधने व्याप्तिग्रहणमपेक्षते, अगृहीतव्याप्तिकस्य हेतोरगमकत्वात्; एवं व्यापकानुपलब्धे- 25 रप्यनुमानत्वाद् व्याप्तिग्रहणमवश्यापेक्षणीयम्, अनपेक्षणे वा क्षणिकत्वानुमानस्यापि न स्यादपेक्षणम्, अनुमानत्वाविशेषात् । **अनुमानान्तराद् व्याप्तिनिश्चय इति ।** ययोर्धर्मयोर-

सिद्धमेतद् यत् सत् तत् क्षणिकमिति ।

अन्ये तु नीत्यन्तरेण व्याप्तिनिश्चयमाचक्षते । विरुद्धयोरेकपरिच्छेदेऽन्यतरनिवृत्तिरवश्यम्भाविनी विरुद्धत्वादेव, विरुद्धे च सत्त्वनित्यत्वे पूर्वोक्तयैव नीत्या । सत्त्वञ्च विस्पष्टमुपलभ्यते भावानामिति तदुपलम्भान्नित्यत्वनिवृत्तिः, 5 नित्यत्वनिवृत्तेरेव क्षणिकत्वनिश्चयः, प्रकारान्तराभावात् ।

ननु शीतोष्णयोः पृथगुपलम्भाद् विरोधनिश्चये युक्त एकग्रहणे द्वितीयव्युदासः, इह तु सत्त्वमेवोपलभ्यते न नित्यत्वमिति कथं तद्विरोधादितरव्यावृत्तिः ? नैष दोषः । पृथगुभयानुपलम्भेऽपि सत्त्वबुद्धयैव नित्यत्वनिराससिद्धेः कथमन्यविषयबुद्धिरन्यमुदस्यति ? उच्यते,

10 द्विचन्द्रदर्शनस्यैकशशभृद् बिम्बवेदिनी ।
धीरतद्विषयत्वेऽपि तद्व्यवच्छेदकारिणी ॥
सत्त्वं नानास्वभावत्वं स्थैर्यमेकस्वभावता ।
तयोर्विरोधो युक्त्यापि वक्तुं न हि न शक्यते ॥

तस्मात् सत्त्वप्रतीतेरेव नित्यत्वनिवृत्तिः, सैव च क्षणिकत्वव्याप्तिरिति 15 सिद्धं सत्त्वात् क्षणिकत्वम् ।

अपि च सर्वदा कार्यानुत्पादात् कारकावस्था नूनमेकक्षणस्थायिनी भावा-

---

विनाभावग्रहणाद् व्यापकानुपलब्धिः प्रवर्तते तयोर्नानुमानादविनाभावनिश्चयः, अपि तु प्रत्यक्षात् । तथाहि, येनैव दर्शनपृष्ठभाविना निश्चयेन 'इदमस्मादत्र' इति निश्चीयते तेनैव तदपि व्यवस्थाप्यते 'जनकस्य जन्यं प्रत्युत्पत्तौ सामर्थ्यं क्रमेण यौगपद्येन वा' इति ।

20 नित्यत्वनिवृत्तिरेव स्थिरत्वनिवृत्तिरेव ।

न नित्यत्वमिति । भवद्दर्शनेऽक्षणिकस्य सत्त्वेन दर्शनाभावात् ।

अतद्विषयत्वेऽपि द्विचन्द्राविषयत्वेऽपि । सत्त्वं नानास्वभावत्वम् अर्थक्रियाभेदादेव, अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य भेदसिद्धेः । तस्यार्थक्रियाकारित्वस्य स्वभावस्याभेदे वा क्रियाणामभेदप्रसङ्गात् । तयोर्विरोधो युक्त्याप्यनुमानेनापि । विरुद्धे सत्त्वस्थिरत्वे 25 धर्मिणी सह न भवत इति साध्यम्, विरुद्धत्वाच्छीतोष्णादिवत् ।

नामुपगन्तव्या व्यापारावेशवशेन वा श्रोत्रियादिपक्षे, सहकार्यादिसन्निधानापादनेन वा नैयायिकादिपक्षे। कारकत्वं नाम वस्तुनो रूपमेकक्षणवृत्त्येव कार्योत्पत्त्यैव तत्कल्पनात्। ततः पूर्वमुत्तरकालं वा कारकायोगात्। कारकत्वमेव च परमार्थसत् अकारकस्य ज्ञानजनकत्वाभावादस्तित्वमपि दुर्वचम्। अतश्च सर्ववादिभिरेव प्रायेण क्षणिकत्वमिदमभ्युपगतमिति यश एव केवलं सौगताः पीतवन्तः। तस्मात् सिद्धं यत् कारकं यच्च सत्तत्क्षणिकमिति।

अतश्च क्षणभङ्गिनो भावाः प्रलयं प्रति हेतुनिरपेक्षत्वात्। भावो हि स्वतो नश्वरात्मा भवेत्तद्विपरीतो वा,

विनश्वरस्वभावेऽस्मिन् कृतं प्रलयहेतुभिः।
अनश्वरस्वभावेऽपि कृतं प्रलयहेतुभिः॥

क्व तर्हि मुद्गरादीनां व्यापारः? विजातीयसन्ततिजन्मनीति ब्रूमः। अभावस्तु तज्जन्यो न सम्भवत्येव प्रमाणविरुद्धत्वात्। भावो हि स्वरूपेण न भवति न त्वभावोऽपि भवतीति। स्वरूपं भावात्मकञ्चेत् सर्वदैव भवेदेव, न न भवेत्। अभावात्मकन्तु तदेव न भवेत् परापेक्षाया अभावात्। न हि मुद्गरादिकारणान्तरसापेक्षः कुम्भादेर्विनाशो भवितुमर्हत्युत्पत्ताविव नाशेऽपि समर्थासमर्थभिन्नाभिन्नोपकारिसहकार्यादिविकल्पकलापानपायात्।

अथ कतिपयक्षणव्यवहितविनाशस्वभावो भाव इष्यते तर्हि प्राक्तननयेन कदाचिदपि न विनश्येत्। विनाशसमयेऽपि तत्स्वभावानपायेन पुनः कतिपयक्षणापेक्षणप्रसङ्गात्। अपि च यदापि तेन नष्टव्यं तदाप्यस्य न स्वरूपादतिरिक्तः कश्चन विनाशहेतुरवतरति। तच्च स्वरूपाद्यपेक्षणे तस्य तादृशमेवेति तदैव वा नश्येन्न कदाचिद्वा।

अथ मृत्योरपक्रान्तस्तस्य चेत् प्रथमः क्षणः।
अविनाशिस्वभावत्वादास्तां युगशतान्यपि॥

---

व्यापारावेशवशेन वेति। स्वरूपाविशेषेऽपि कदाचित् कार्यजननात्, प्राक् कार्योत्पत्तेर्व्यापारावेशः पदार्थस्यानुमानतो निश्चेय इति प्रागेव निर्णीतम्।

न चैवमभ्युपगम्यते । तस्मादात्मलाभाविनाभावो भावानां विनाश इति सिद्धः क्षणभङ्गः ।

**प्रत्यभिज्ञा न क्षणिकपदार्थवादविरोधिनी**

यदपि क्षणभङ्गसाधनस्य पदार्थस्थैर्यावसायि प्रत्यभिज्ञानमनुमानस्य
5 बाधकमभिधीयते, तदपि न पेशलम्, अशिथिलप्रतिबन्धहेतौ बाधकस्य निरवकाशत्वात् । उक्तं हि, 'बाधाविनाभावयोर्विरोधान्नैकत्र समावेशः' इति । अनुष्णस्तेजोऽवयवी कृतकत्वादित्यत्रापि प्रतिबन्धवैधुर्यमेव साध्यसिद्धिं विरुणद्धि नाध्यक्षबाध्यत्वम् । अथ वा किमनेन निर्बन्धनेन ?

अग्निशैत्यानुमानादौ युक्तं प्रत्यक्षबाधनम् ।
10 तस्य ह्यनन्यथासिद्धेरिह त्वेवं न युज्यते ।।

प्रत्यभिज्ञायाः क्षणभङ्गपक्षेऽपि सदृशपरापरक्षणगणप्रसवप्रतारितमतीनामुपलभ्यमानत्वात् । एवञ्च सति,

यदि हि व्याप्तिशैथिल्यं सिद्धं किं प्रत्यभिज्ञया ।
अथ न व्याप्तिशैथिल्यं सिद्धं किं प्रत्यभिज्ञया ।।

15 न च प्रत्यभिज्ञैव व्याप्तिविप्लवकारणमितरेतराश्रयप्रसङ्गात् । व्याप्तिविप्लवेनानुमाने न्यग्भूते प्रत्यभिज्ञा प्रमाणं भवति । तस्याञ्च प्रमाणीभूतायां व्याप्तिवैधुर्यादनुमानाप्रामाण्यम् । अनुमानप्रामाण्येऽपि समानो दोष इति चेन्न, तस्य प्रतिबन्धमहिम्नैव प्रामाण्यसिद्धेः । न हि तस्य प्रतिभिज्ञादौर्बल्यनिबन्धनं प्रामाण्यम् ।

20 **प्रत्यभिज्ञास्वरूपविचारः**

अपि च केयं प्रत्यभिज्ञा नामेति नैपुण्येन निरूपयितुमर्हन्त्यत्रभवन्तः । किं स एवायं कुम्भ इत्येकं ज्ञानमुत द्वे एते स्मृत्यनुभवज्ञाने ? यद्येकं तदस्य कारणं वाच्यं यत उत्पद्यते ? नेन्द्रियं स इत्यस्मिन्नंशे तस्यासामर्थ्यात्, न संस्कारस्तस्याप्ययमित्यंशे कौशलाभावात् ।

25 उभाभ्यां न च सम्भूय तज्ज्ञानमुपजन्यते ।
पृथक् पृथक् स्वकार्ये हि निर्ज्ञातं कौशलं तयोः ।।

संस्कारस्य स्मृतिरेव कार्यमिन्द्रियस्यानुभव एव । सम्भूय न ताभ्यामेकं कार्यमारभ्यते । न हि मृत्पिण्डतन्तुनिर्वर्त्यमेकं घटपटरूपं कार्यमुपलब्धम् । न चेन्द्रियं केवलमीदृशि कार्ये समर्थम् । यथासन्निहिताकारमात्रग्राह्ये विचारक-मिन्द्रियं प्रत्यभिज्ञानमातनोतीति विस्मयः ! तस्माद् द्वे एते ज्ञाने, स इति स्मरणमयमित्यनुभवः । 5

स्मृतिः स्मर्तव्यविषया ग्रहणं ग्राह्यगोचरम् ।
न तदैक्यपरामर्शि दृश्यते प्रत्ययान्तरम् ॥
यथा निरन्तरोत्पन्ने घटज्ञानपटस्मृती ।
न तुल्यविषये तद्वदेते अपि भविष्यतः ॥
यद्वा भवतु नामेदमेकमेव हि वेदनम् । 10
तथापि कीदृशं वस्तु स्पृशतीति परीक्ष्यताम् ॥
अतीतकालयुक्तञ्चेत् स्मरणान्न विशिष्यते ।
अनागतविशिष्टञ्चेत् सङ्कल्पप्रायमेव तत् ॥
वर्तमानैकनिष्ठञ्चेत् स्थिरत्वं तर्हि सुस्थितम् ।
कालत्रयपरीतञ्चेद्विरोधात्तत्तु दुर्लभम् ॥ 15
परस्परपरित्यागव्यवस्थितनिजात्मनाम् ।
एकत्र न समावेशः कथञ्चिदुपपद्यते ॥

यथा हि,

नीलाभावाविनाभूतलौहिताद्यपसारणम् ।
कुर्वता नीलबोधेन नीलं भवति निश्चितम् ॥ 20

---

**अविचारकमिति** । अर्थसन्निधिमात्रेण ज्ञानस्योत्पत्तेरविचारकत्वम् । तदुक्तम् "सन्निहितविषयबलोत्पत्तेरविचारकत्वम्" इति ।

**सङ्कल्पप्रायमेव तदिति** । सङ्कल्पस्यानागतविषयत्वेन दर्शनात् तत्प्रायता । **स्थिरत्वं तर्हि सुस्थितम्** । एतदेव क्षणिकत्वं यतः ।

**यथाहि नीलाभावेति** । नीलपरिच्छेदकं हि प्रमाणं तद्विरुद्धस्य नीलाभावस्येव 25

तद्वदिहापि,

तदभावाविनाभूतस्वस्वकालाद्यपोहनम् ।
वेदयद् वर्तमानार्थज्ञानं तद्ग्राहिता भवेत् ।।

एतेन पूर्वज्ञानविशिष्टार्थग्राहित्वं प्रत्यभिज्ञायाः प्रत्युक्तम् । पूर्वज्ञानस्येदानीमसत्त्वेन विशेषणत्वानुपपत्तेः, अगृहीतविशेषणायाश्च विशिष्टबुद्धेरभावात्, अर्थोपजननापायरहितवस्तुस्वरूपग्राहिणी प्रत्यभिज्ञेत्युच्यते ।

तदप्ययुक्तम्, वर्तमानैकनिष्ठतायाः प्रदर्शितत्वात् । भावानाञ्च विनाशजन्मनोर्वर्तमानो वा कालः स्यादन्यो वा ? तदन्यस्तावद् ग्रहीतुमशक्य इत्युक्तम् । वर्तमाने तु तदुत्पादविनाशकाले कथ्यमाने तद्ग्रहणात्तदविनाभूतौ भावानामुत्पादविनाशावपि गृहीतौ स्याताम् ।

सेयं तपस्विनी स्थैर्यं प्रसाधयितुमागता ।
प्रत्यभिज्ञा विनाशित्वं प्रतिष्ठाप्य गमिष्यति ।।

अपि च लूनपुनर्जातकेशनखादिषु सादृश्यदृश्यमानप्रत्यभिज्ञा स्तम्भादिष्वपि तद्वदेव न स्थिरतामुपपादयेत् । तत्र बाधकयोगादिति चेदिहाप्युक्त एव बाधकः परस्परविरोधिभूतादिकालसमावेशस्यैकत्र दुर्घटत्वादिति । तस्मात् प्रत्यभिज्ञाप्रत्ययस्य बाधकस्याभावात् सिद्धमानुमानिकं भावानां क्षणिकत्वम् ।

**मतान्तरेण पदार्थानां क्षणिकत्वं प्रत्यक्षसिद्धम्**

अपरे पुनः प्रत्यक्षगम्यमेव क्षणिकत्वमाचक्षते ।

नातीतानागतौ कालौ विचारयति चाक्षुषम् ।
वर्तमानक्षणश्चैक इति तन्निष्ठमेव तत् ।।

यदि वर्तमानातिरिक्तग्राहि प्रत्यक्षमिष्यते, तद्वक्तव्यं किं पूर्वं विज्ञान-

---

तदविनाभूतानां पीतादीनामपि व्यवच्छेदं करोत्येव । **तदभावाविनाभूतेति** । वर्तमानाभावाविनाभूता ये भूतादय इति ।

**वर्तमानैकनिष्ठतायाः पूर्वं प्रदर्शितत्वादिति** । अतीतविषयत्वे स्मृतितुल्यता, अनागतविषयत्वे सङ्कल्पप्रायतेत्यादि वदद्भिर्वर्तमानैकनिष्ठता प्रदर्शिता ।

मनागतकालावच्छिन्नपदार्थग्रहणनिपुणम् । अथोत्तरज्ञानमतीतकाललिङ्गित-भावाकलनकुशलमिति ? तत्राद्यज्ञानसमुपजननसमये तत्तत्क्षणातिरिक्त-भाविकालासन्निधानान्न तेन तद्ग्रहणम्, अनागतग्रहणे वा कथमागामिजन्म-ग्रहणं न स्यादुत्तरज्ञानप्रसवसमयेऽपि भूतकालस्य भूतत्वादेव न सन्निधानम-सन्निहितभूतकालग्रहणे वा पूर्वजन्मग्रहणप्रसङ्गः । 5

अथ वर्तमानानुप्रवेशेन भूतभाविनोः कालयोर्ग्रहणं मन्यसे तत्र वर्तमाना-नुप्रवेशाद् वर्तमान एव गृहीतः स्यात्, न भूतो भावी वा । अथ न कश्चिदेव कालः क्वचिद् गृह्यते, अर्थ एव प्रकाश्यः केवल इति ।

तदयुक्तम्, तदवच्छिन्नभावप्रतिभासस्य भवद्भिरेवाभ्युपगमात् ।

ननु कोऽयं कालो नाम शाक्यानाम् ? न कश्चिद् वास्तवः । किं काल्प- 10
निक एव व्यवहारः ?

सर्वथेन्द्रियजं ज्ञानं वर्तमानैकगोचरम् ।
पूर्वापरदशास्पर्शकौशलं नावलम्बते ॥
वर्तमानः कियान् काल एक एव क्षणस्ततः ।
पूर्वः क्षणोऽतीततां स्पृशत्युत्तरस्त्वनागतताम् ॥ 15

ननु पचति पठतीति वर्तमानोऽपि वितत एव कालः प्रतीयते ।

---

**अथ वर्तमानानुप्रवेशेनेति** । अननुप्रवेशेऽसन्निधानाद् यदि अग्रहणं तर्हि अनुप्रवेशो-ऽस्त्वित्यभिप्रायः । **अर्थ एव केवलः प्रकाशत** इति । अर्थश्चानेकविषय एकोऽर्थ इत्यव-तिष्ठते, न 'पूर्वंप्रतिभात, इदानीं च प्रतिभासते' इति कालविशिष्टत्वेन । न च प्रतिपत्ति-भेदेनैकत्वाभिमतस्य चन्द्रमसोऽनेकत्वमनेकदर्शनविषयत्वेऽप्यस्तीत्याशयः । 20

**न कश्चिद् वास्तव** इति । वास्तवत्वे हि वस्तुस्वलक्षणवन्निर्विकल्पकेन प्रतीयेत । न च प्रतीयते । अतो निर्विकल्पोत्तरकालभाविसामान्यादिविकल्पवत् तद्विकल्पोत्पत्तेर-वस्तुत्वम् । काल्पनिकेनापि च तेन व्यवहारः सिद्ध्यत्येव सन्तानादिनेव ।

**एक एव क्षणस्तत** इति । एकस्मात् क्षणात् ।

**पूर्ववितत एककालः प्रतीयत** इति । बहूनां क्षणानामस्मिन् प्रत्यये विश्रयणादीनां 25

नैतत् सारम् ।

न ह्यस्ति कालावयवी नानाक्षणगणात्मकः ।
वर्तमानक्षणो दीर्घं इति बालिशभाषितम् ।।

क्षणसमुदायात्मकत्वन्तु नानारूपत्वमेव तस्य भवेत्, अतीतानागतक्षणात्
5 पूर्वमूर्ध्वं वा तदस्तित्वान्नास्तित्वमपि न गृहीतमेवेति कथं क्षणिकत्वम् ?
क एवमाह न गृहीतं नास्तित्वमनुपलब्ध एव नास्तित्वव्यवहारात् । उपलम्भो
हि भवेत् सत्ताऽनुपलम्भाच्च नास्तित्वम् । दर्शनादर्शने एव सदसत्त्वयो-
र्लक्षणम् । तस्मात् क्षणान्तरं तदनुपलम्भाद् नास्तित्वमेवेत्येव क्षणिकत्वग्राहि
प्रत्यक्षमिति स्थितम् ।

10 ननु च प्रत्यभिज्ञातो दीर्घकालत्वनिश्चयः ।
किमद्यापि न मुक्तोऽसि तत्प्रामाण्यकुतृष्णया ।।

परीक्षितं हि तस्याः स्वरूपं कार्यं कारणञ्च ।

न शक्नोतीव सा स्थैर्यमुपपादयितुं निजम् ।।
न पूर्वा नोत्तरं ज्ञानं ग्राहि कालान्तरस्थितेः ।
15 तदिदं बोध्यमानोऽपि रागान्धो नावबुद्ध्यते ।।

पूर्वं हि ज्ञानं तत्कालमेव उत्तरमपि स्वकालमेव वस्तु गृह्णाति, मध्ये
तु नास्त्येव । ग्रहणमग्रहणमेव मध्यमाहुः ।

---

क्रियारूपाणां प्रतिभासनात् । **नैतत् सारमिति** । तत्र हि एकफलोत्पादकत्वेन वर्तमान-
क्षणसहचरिताः पूर्वापरभाविनः क्षणा वर्तमानतया व्यपदिश्यन्ते साक्षादवर्तमाना
20 अपि ।

**क्षणो दीर्घ इति** । क्षणो हि परमापकृष्टा कालमात्रा भण्यते । स कथं दीर्घः ?
दीर्घश्चेत् क्षणः कथमिति ।

**उपलम्भ एव भावानां सत्त्वमिति** । यस्मिन् हि सति सदिति प्रत्ययस्तदेव
सत्त्वम् । स च प्रत्ययः सदित्युपलम्भे सति भवति, अत उपलम्भ एव सत्त्वम् । एवमनुप-
25 लम्भोऽप्यसत्त्वमिति ।

नन्वविच्छिन्नदृष्टीनां न हि त्रुटयदवस्थितिः ।
स्तम्भादिरवभातीति कथमेतस्य भङ्गिता ॥

नैतदेवम् । तत्राप्येकक्षणवृत्तित्वाज्ज्ञानस्य, क्षणान्तरे तु ज्ञानमेव नास्ति । कस्य विच्छिन्नसत्ता, कस्यात्रुटितसत्ता, कस्य वा बोधकम् ?

नन्वस्त्येव क्षणान्तरे तु ज्ञानमविच्छिन्नत्वाद् दृष्टेरिति चेत् । मैवम्, बुद्धेरदीर्घकालत्वाज्ज्ञानान्तरोत्पादन एवासावित्यवधारयत्वायुष्मान् । 5

तस्माद्यथैव सन्तानवृत्त्या ज्ञानक्षणोदयः ।
तथैवोत्पाद्यतामेष स्तम्भक्षणपरम्परा ॥

सोऽयमविच्छिन्नदृष्टीनामत्रुटितपदार्थसत्ताग्रहणाभिमान इत्थमुत्थितः ।

स्थिरेणापि न बोधेन दीर्घग्राहस्थितिग्रहः । 10
न ह्यसन्निहितग्राहि प्रत्यक्षमिति वर्णितम् ॥
तत्काले सन्निधिर्नास्ति क्षणयोर्भूतभाविनोः ।
वर्तमानक्षणश्चैको न दीर्घत्वं प्रपद्यते ॥
तेन बुद्धिस्थिरत्वेऽपि स्थैर्यमर्थस्य दुर्वचम् ।
न त्वनन्तरया नीत्या तस्या अपि चिरं स्थितिः ॥ 15

सापि हि स्वसंवेद्यत्वादेकक्षणपरीतैव प्रकाशत इति तस्मात् क्षणिकग्राहि प्रत्यक्षमिति सिद्धम् ।

**पदार्थानां क्षणिकत्वेऽनुमानमबाधकम्**

ननु स्थैर्यं पदार्थानामनुमानात् प्रतीयते । 20
अन्वयव्यतिरेकाभ्यां मुद्गरादिर्विनाशकः ॥

---

**बुद्धेरदीर्घकालत्वात्** । भवद्भिरप्याशुतरविनाशित्वाभ्युपगमाद् बुद्धेः ।

**स्थिरेणापि न बोधेनेति** । तेनापि वर्तमानकालस्थितिरिव शक्या ग्रहीतुं न कालान्तरस्थितिः । कालान्तरस्थितिर्हि तेन गृह्यमाणा तदनुप्रवेशेनान्यथा वा गृह्येत । तदनुप्रवेशेन ग्रहणे एकक्षणग्रहणमेव । अननुप्रविष्टक्षणस्थितेर्न क्षणान्तरस्थितिः प्रतिभातीति नैकताग्रहः । न हि सकृदनेकक्षणस्थायिताग्रह इति । 25

निश्चीयते घटादीनां तेन पूर्वं तदागमात् ।
विनाशरहितत्वेन सिद्ध्यत्येषामवस्थितिः ॥

नानुपलम्भव्यतिरिक्तस्य हेतुमतो विनाशस्यानुपपत्तेरुपलम्भ एवास्तित्वम्, भावानामनुपलम्भाच्च नास्तित्वम् । न च घटानुपलब्धिर्मुद्गरादिकार्या, ततः 5 प्रागपि भावात् ।

ननु दृशानुपलब्धेरसत्त्वनिश्चयः, स च कपालकाल एव घटस्यावकल्पते मध्ये तु दर्शनमन्यथापि स्यादिति नादर्शनमात्रमेव नास्तित्वम् ? मैवम् । त्वदभिमते मध्येऽपि दृश्यस्यैव घटस्यानुपलम्भनम्, तद्वा कपालकालेऽपि न सर्वेषामिति का प्रमा ? यदहं न वेद्मि, तत्परोऽपि नैवं वेत्ति चेत्, तर्हि 10 मध्येऽपि घटं सर्वं एव पश्येयुरिति नास्त्येवासौ, कपालीभूतघटवत् । अपि च,

यदि यत्त्वं न जानासि तदन्योऽपि न गम्यते ।
स्वजायाजघनस्पर्शसुखमप्यधिगच्छतु ॥

तदलं ते परगृहवृत्तान्तचिन्तया । यत्पश्यसि तदस्तीति जानीहि, यन्न 15 पश्यसि तन्नास्तीति विद्धि । एवमनुलम्भ एव भावानां विनाश इति न तस्य मुद्गरादिकार्यत्वम् । अतोऽनुमानमपि न स्थैर्यसाधकम् । तस्माद्यथोक्तक्रमेण प्रत्यक्षमेव क्षणिकपदार्थपरिच्छेत्रिति स्थितम् ।

स्मरणप्रत्यभिज्ञानस्वकर्मफलभोक्तृता ।
क्षणिकत्वेऽपि कथिता कार्यकारणभावतः ॥
20 तदेवमुपपन्नेयं गृह्यतां क्षणभङ्गिता ।
त्यज्यतां दीर्घसंसारकारिणः स्थिरताग्रहः ॥

---

**त्वदभिमते मध्येऽपीति** । यत्र त्वं न पश्यसि । **न सर्वेषाम षाम्**, तवैव तु केवलस्य ।[1] **एष मा ग्रहीदिति** । एषोऽन्यः ।

**स्मरणप्रत्यभिज्ञेति** । तुल्येऽपि भेदे कार्यकारणभावेन नियतत्वात् तत्रैव सन्ताने 25 स्मरणादिकार्यं न सन्तानान्तर इति । **दीर्घसंसारकारणम्**, आस्थानिवृत्त्यभावात् ।

---

१. अस्य प्रतीकस्य मूलं न लभ्यते ।

**भावानां क्षणभङ्गित्वखण्डनम्**

अत्राभिधीयते नैव प्रमाणद्वयमप्यदः ।
भावानां क्षणभङ्गित्वमुपपादयितुं क्षमम् ॥
अर्थक्रियासमर्थत्वं सत्त्वं यत्तावदुच्यते ।
तदसत्कूटहेमादि व्यभिचारावधारणात् ॥ 5
किन्त्वबाधितसद्बुद्धिगम्यता सत्त्वमिष्यते ।
सदसद्व्यपदेशस्तु पुत्रादावौपचारिकः ॥
एवञ्च बाधकाभावपर्येषणपरायणम् ।
न सत्त्वग्राहकं ज्ञा(मा)नं स्वतः प्रामाण्यमर्हति ॥
सत्त्वे च संशयोऽप्यस्ति सकलप्राणिसाक्षिकः । 10
उपलब्धिव्यवस्थात इत्येवं वर्णयिष्यते ॥
अर्थक्रियासमर्थस्य त्वदुक्तं सत्त्वमस्तु वा ।
तदपि व्याप्तिशून्यत्वान्न हेतुर्गन्धवत्त्ववत् ॥
क्षणिकस्यापि भावस्य सत्त्वं नास्त्येवसोऽपि हि ।
क्रमेण युगपद्वापि न कार्यंकरणे क्षमः ॥ 15
क्षणिकस्य क्रमः कीदृग्युगपत्करणेषु नः ।
एकवस्तुक्रमस्यापि रूपभेदः प्रसज्यते ॥
कार्याण्येकेन रूपेण भिन्नानि जनयेत् कथम् ।
रूपभेदविरोधात्तु वस्तुनो नास्तिता भवेत् ॥
स्थिते च वस्तुसद्भावे क्षणिकत्वं परीक्ष्यते । 20
तदसत्त्वे तु तच्चिन्ता व्योम्नि रोमन्थकेलिवत् ॥

---

**उपलब्ध्यव्यवस्थात** इति । सदप्युपलभ्यते असदप्युपलभ्यत इति । **न हेतुर्गन्धवत्त्ववत्** । यथा गन्धवत्त्वं नित्यत्वेऽनित्यत्वे वा न हेतुः, तेन सहान्यत्रादृष्टेः, एवं सर्वस्य साध्यत्वात् सत्त्वस्य क्षणिकत्वेन सहान्यत्रादृष्टेः । **एकवस्तुक्षणस्यापि** एको यो वस्तुक्षणः । **रूपभेदविरोधाच्चेति** । न ह्येकमनेकरूपं भवति, अनेकरूपत्वे एकत्वविरोधाद् वस्तुनः 25 काल्पनिकत्वं प्रसज्यते, विरुद्धस्वभावयोगेऽप्येकत्वे विश्वस्यैकताप्रसङ्गात् । घटादीनामपरमार्थसत्त्वान्मा भूत पारमार्थिकं बाह्यं वस्तु, ज्ञानमेव परमार्थसत्, तत्र क्षणिकत्व-

ज्ञाने क्षणिकचिन्ता चेत् किं तस्यापि पराकृतौ ।
वदन्त्येतानि शास्त्राणि ज्ञेयाभावे च तत्कुतः ॥

अपि च क्षणिकत्वपक्षे किमेकस्मादेकोत्पादः, उत बहुभ्य एकोत्पत्तिः । अथैकस्मादनेकनिष्पत्तिराहो बहुभ्यो बहुसम्भव इति परीक्षणीयम् । न तावदेकस्मादेकोत्पत्तिरलौकिकत्वात्, एकस्मादप्यग्नेर्भस्मधूमेन्धनविकाराद्यनेककार्योत्पाददर्शनात् कार्यसिद्धये च सर्वसहकारिसन्निधापनप्रयत्नदर्शनात् 'नैकं किञ्चिदेकं जनकम्'इति ग्रन्थविरोधाच्च । एतेन तृतीयः पक्षो निरस्तः । एकस्मादनेकनिष्पत्तिरिति, एकश्च नैकं जनयन् क्रमेण जनयेद युगपद्वा ? न क्रमेण, स्थैर्यप्रङ्गात्; न युगपद् अदृष्टत्वात् । एकस्य चानेककार्यकरणशक्तियोगे तद्भेदान्नानात्वप्रसङ्गः ।

विरुद्धधर्मयोगेऽपि यदि चैकत्वमिष्यते ।
अनेकक्षणयोगेऽपि भाव एकोऽभ्युपेयताम् ॥

अथ बहुभ्य एकोत्पादनमिति पक्ष आश्रीयते, तद् वक्तव्यं किमेतदेकं कार्यं कैर्वा बहुभिरुत्पाद्यत इति ? न ह्यस्माकमिव भवतामनेकावयवनिवहनिर्मितमवयविस्वरूपं कार्यमस्ति, सञ्चितैः सञ्चिता एव जन्यन्त इत्यभ्युपगमात्, यदि चानेककार्यमेकमुच्यते तदस्य कारणभेदोपनतस्वभावनानात्वयोगादेकत्वमेव तावद्विरुध्यते, अन्यथात्वे हि न कारणाधीनं भावानां रूपमित्याकस्मिकत्वप्रसङ्गः । कारणभेदोपपादितनानात्वस्यापि यदि वैकत्वं तदस्य नानाकालयोगिनोऽप्येकत्वं स्यात् । असत्त्वं भिन्नस्वभावस्य वस्तुन

---

मित्याह ज्ञाने क्षणिकचिन्तेति ।

**न क्रमेण स्थैर्यप्रसङ्गात्** । द्वितीयकार्यकालेऽपि भावात् स्थैर्यप्रसङ्गः ।

**सञ्चिता एव जन्यन्त इत्यभ्युपगमादिति** । तदुक्तम्,

अर्थान्तराभिसम्बन्धाज्जायन्ते येऽणवोऽपरे ॥
उक्तास्ते सञ्चितास्ते हि निमित्तं ज्ञानजन्मनः ॥ इति।

**अन्यथा हि** इति । कारणायत्तः कार्यस्वभाव इत्यनभ्युपगमे । **नानाकालयोगिनोऽप्येकत्वं स्यात्** । ततश्च स्थिरतापत्तिः ।

इति पूर्ववद्वक्तव्यम्, लोचनालोकमनस्कारादिकारणभेदात् । कार्यमप्येकरूपं ज्ञानमिति चेत्, न, तस्य भवन्मते विषयाकारग्राहकत्वस्वसंवेदनरूपभेदात् । निराकारज्ञानवादिनो हि बौद्धस्य प्रतिकर्मव्यवस्थानमिष्यते जनकस्य कर्मणः प्रतिभासे स्थैर्यप्रसङ्गादेकसामग्र्यधीनत्वपक्षस्यासम्भवात्, सम्भवेऽपि ग्राह्य-निमित्तत्वाभावादिति । 5

अथोच्यते । किमनभ्युपगतपक्षोपमर्दनेन बहुभ्यो बहुसम्भव इत्येष एव नः पक्षः, सन्तानवृत्त्या वर्तमानपूर्वसामग्रीसारूप्यमुत्तरसामग्रीमारभते विजातीयकरणानुप्रवेशे तु विरूपमिति ।

अथ केयं सामग्री नाम ? न समग्रेभ्यो भिन्नात् पृथगनुपलम्भाद् अव्यति-रेके तु समग्र एव सामग्री । तत्र पूर्वसमुदायेनोत्तरसमुदायारम्भे तदन्तर्गतं 10 समुदायिनमेकमेव एक उत्पादयेदेकं वा सम्भूयेति । तत्राद्ये पक्षे सैवेयमेकस्मा-देकोत्पत्तिरुक्ता स्यात्, सा च प्रतिषिद्धा ।

अथैकैकफलसमुदायिनिष्पत्तौ सर्वसमुदायिनं व्यापारयेत्, क्रमेण वा यौगपद्येन वा ? तत्र क्रमपक्षे क्षणिकत्वहानिः, ये हि तत्र पञ्चदश समुदायिनः क्षणं तत्र वर्तन्ते, ते तत एकं तमुत्पाद्य पुनरपरमारभेरन् पुनरन्यमिति 15 तावत्कालप्रतीक्षणादक्षणिकत्वम् ।

अथ युगपदेव सर्वनिष्पत्तौ सर्वे व्याप्रियन्ते, तर्हि निकुरुम्बरूपादेव कारणादुत्पन्नमिति कारणविवेकनियमाभावाद्रूपरसादिप्रविभागो न स्यात् ।

---

**विषयाकारग्राहकेति** । विषयाकारो ग्राह्याकारः । 20
ग्राह्याकारग्राहकं प्रमाणम् । स्वसंवेदनं फलम् । निराकारत्वाद् विज्ञानस्य नास्ति विषया-कार इति चेत् तत्राह **निराकारज्ञानेति** । अथ नीलेन जनितत्वाद् नीलस्येदमिति प्रति-कर्मव्यवस्था सेत्स्यति । नेत्याह **जनकस्य कर्मण** इति । **एकसामग्र्यधीनपक्षस्य च सम्भवेऽपीति** । न सम्भवति स पक्षः, क्षणिकत्वाभावादर्थक्षणस्य तदानीमुत्पत्त्यभावात् पूर्वोत्पन्नस्यैव ज्ञानेन विषयीकरणात् । सम्भवाभ्युपगमे तु द्वयोरेकसामग्र्युत्पन्नत्वेऽर्थ 25 एव ग्राह्यो न बोध इति नियमो नोपपद्येत इत्यतोऽवश्यं साकारत्वमभ्युपेयमिति रूपभेद आयातः ।

**विजातीयप्रकारेणेति** । विजातीयो मुद्गरादिः । **विरूपाम्**, कपालरूपाम् ।

इदं रूपमेष रस इति कथं निश्चीयते । चित्रमुत्पादितमिति सर्वं रूपं स्यात् सर्वो रसः, यद्वा न रूपं न रसोऽन्यदेव किञ्चिद्वस्त्वन्तरं स्यात् ।

अथोच्यते । यद्यपि रूपरसादिसामग्री तत्सामग्र्या एव जनिका तथापि क्वचित्किञ्चिदुपादानकारणमिति तत्सहकारिकारणम्, तत्र रूपक्षणनिष्पत्तौ 5 रूपस्योपादानकारणत्वादितरेषाञ्च सहकारिकारणत्वान्न पदार्थसङ्कर इति । एतदयुक्तं सर्वथा कारणत्वानपायात् । अपि च येन रूपेण रूपस्य रूपं प्रत्युपादानकारणता तेनैव यदि रसं प्रति सहकारिकारणता तदा पुनरपि रूपरसयोरविशेषः ।

अथान्येन रूपेण रूपस्य रूपोपादानता अन्येन च रससहकारितेति, तर्हि 10 स्वभावभेदान्नानात्वम्, नानात्वे त्वस्थैर्यमसत्त्वं वेत्युक्तम् ।

अथ नास्त्येतयोः किञ्चिद्विरुद्धत्वं स्वभावयोः ।
कथं बौद्धगृहे जातस्त्वमेवमतिभाषसे ॥

भावानां परस्परपरिहारव्यवस्थितरूपत्वमस्त्येवैषां लाक्षणिको विरोधः । अपि च क्षणिकत्वे पदार्थानामिदमत्रोपादानकारणमिदं सहकारिकारणमिति 15 विशेषोऽपि दुरवगमः । तथा हि किमिदमुपादानं नाम ? किं स्वसन्तान-विनाशेन बीजादिवत्कार्यजननमुपादानमुत स्वविशेषसमर्पणेनोत्पादकमिति । यदि पूर्वः पक्षः, परलोकचर्चा चार्वाकवदुपेक्षिता स्यात्, ज्ञानसन्तानविनाशेन

---

**नानात्वे त्वस्थैर्यमसत्त्वं चेति ।** नानास्वभावत्वेऽपि यथा दर्शनेनात्रैकत्वेन ग्रहणं न विरुध्यते तथा तदतत्स्वभावत्वेऽप्यक्षणिकानामेकत्वेन ग्रहणं न विरोत्स्यत इति स्थैर्या-20 पत्तिर्वस्तुनो वा विरुद्धस्वभावयोगात् काल्पनिकत्वम् ।

**अस्त्येवैषां लाक्षणिको विरोध** इति । लक्षणमिति स्वरूपम्, तद्व्यवस्थापको लाक्षणिकः परस्परपरिहारस्थिततालक्षणः । तौ हि द्वौ स्वभावौ परस्पररूपपरिहारेण स्थितौ नीलपीताविव, अन्यथा तयोर्भेद एव न स्यादिति । पदार्थो हि स्वप्रकृत्या विरुध्यते । न हि नीलञ्च नीलाभावश्च युगपद् भवतः । यथा नीलानीलप्रकृत्योर्युगपद-25 सम्भवाद् विरोधस्तथानीलप्रकृत्यविनाभूतैः पीतादिभिरपि विरोध एव । स्वप्रकृत्या यद् विरुध्यते वस्तुनो रूपं तत् तदविनाभूतेन स्वभावान्तरेणापि । तस्य विरोधः केन वार्यते भवन्मते । तदेवं वस्तुव्यवस्थापको विरोधो भवद्भिः सर्वत्राभ्युपेय इति । **परलोकचर्चा चार्वाकवदुपेक्षिता स्यादिति ।** 'यस्मिन्नेव हि सन्ताने आहिता कर्मवासना' इत्यस्य पक्षस्य

ज्ञानान्तरारम्भप्रसङ्गात् । स्वविशेषार्पणपक्षेऽपि सर्वविशेषार्पणं स्यात् कतिपयविशेषार्पणं वा ? सर्वविशेषार्पणे निर्विकल्पकस्य नोपादानकारणं स्यात्,

लिङ्गदर्शनजन्या च प्रतिबन्धस्मृतिः कथम् ।
कथं वा रसविज्ञानं रूपज्ञानादनन्तरम् ॥

सन्तानभूयस्त्वाद् भविष्यतीति चेन्न, एकप्रमात्रधीनप्रतिसन्धानोपनिबन्धनव्यवहारप्रतिबन्धविप्लवप्रसङ्गात् । नित्यमेकमात्मानमन्तरेण सन्तानैकतायामपि तावदसौ व्यवहारो नावकल्पते, किमुतैकत्रैव देवदत्ते सन्तानभूयस्त्वे सतीति, कतिपयविशेषार्पणेन तु यद्युपादानता, तदानीं रूपमपि ज्ञानोपादानकारणतां प्रतिपद्यते । तस्मान्नोपादानं नाम किञ्चित्, तन्निरासे च तद्वैलक्षण्यलक्ष्यमाणस्वरूपस्य सहकारिणोऽपि व्युदासो वेदितव्यः । अपि च,

प्रतिक्षिपसि तत्पक्षे सर्वथा सहकारिणम् ।
भिन्नाभिन्नोपकारादिविकल्पास्त्वत्प्रकल्पिताः ॥
सहकारिप्रतिक्षेपकारिणः क्वाधुना गताः ।
आं ज्ञातं युक्तिशक्त्यैव युष्माभिरुपकल्पितः ॥
दोषो न बाधते युष्मान् मन्त्रोत्थापितसर्पवत् ॥

अथवा तिष्ठतु तावदुपादानसहकारिकारणभाव एव भदन्तसिद्धान्ते

---

परित्यागात् । येन हि ज्ञानक्षणेन कृतं कर्म तस्य विनाशेऽपि कार्यकारणभावेन ज्ञानप्रवाहस्य सन्तानरूपस्याभ्युपगमेन जन्मान्तरोपपत्तिलक्षणास्य परलोकसिद्धिरुपपादिता; सैवं त्रुट्यति । सन्तानस्य ह्यात्मकल्पस्याविच्छेदे जन्मान्तरसम्भव आत्मन इव आत्मवादिना न पुनस्तद्विनाशे । यथैकस्मिन् शरीरे कार्यकारणभावेनावस्थानवशाद् भिन्नानामपि क्षणानामभेदेनाध्यवसानं क्षणान्तरकृतस्य च कर्मणः क्षणान्तरोपभोगेऽपि नान्येन भुक्तमिति प्रत्ययः, न च सन्तानान्तरेण तत्फलोपभोगः, तद्वत् सन्तानानाशे जन्मान्तरभाविक्षणेष्वपि भवति, नान्यथेति भावः । **निर्विकल्पज्ञानं वेति** । तद् वस्तुसाक्षात्कारि, सविकल्पकं न तथा । तथा प्रतिबन्धस्मृतिरपि, स्मृतेर्वस्तुसंस्पर्शाभावात् ।

**सन्तानभूयस्त्वादिति** । रसज्ञानरूपज्ञानस्मरणादिसन्तानानां भेदाभ्युपगमपक्षे । **रूपमपि ज्ञानोपादानकारणत्वं प्रतिपद्यते** तदाकारस्योत्पादाद् ज्ञानस्य ।

दुरुपपादः । परोत्पत्तावव्याप्रियमाणमेव यदि कारणमुच्यते सर्वं सर्वस्य कारणं स्यात् ।

न चालब्धात्मनस्तस्य व्यापारः परजन्मनि ।
लब्धात्मनस्तु व्यापारे स्थितिः सिद्धा क्षणान्तरे ॥

5 अथ ब्रूयादिदंप्रतीत्येदं प्रतीयते इतीदं प्रत्ययतामात्रमेव कार्यकारणभाव इति, तथापि लब्धात्मनः क्षणस्य प्रतीतिरिति द्वितीयक्षणावस्थानमपरिहार्यमेव ।

न चानन्तर्यमात्रेण कार्यकारणताग्रहः ।
अहेतुफलभावेऽपि तथानन्तर्यदर्शनात् ॥
10 व्यापारस्तु परोत्पत्तौ नास्त्येव क्षणभङ्गिनः ।
न वर्तमानकालस्य न भूतस्य न भाविनः ॥

अथ मन्येथा यथा तुलान्तयोर्नामोन्नामौ भवतः एवं पूर्वोत्तरयोः क्षणयोर्नाशोत्पादावित्येवं पूर्वक्षणविनाशेनोत्तरक्षणनिर्वृत्तेरियतैव कार्यकारणभावमश्नुवीयातामिति ।

15 तदप्यमनोरमम् । न ह्ययमायुष्मतामस्त्यवधृतस्तुलान्तदृष्टान्तः ।

तत्रान्यदेव हेमादि नामोन्नामनिबन्धनम् ।
तन्नामो न तु नामैव तेन वा स विधीयते ॥

इहापि न पूर्वेण क्षणेन नापि तद्विशेषेणोत्तरः क्षण उत्पद्यते, न च हेमस्थानीयमिहान्यदस्तीत्यनुत्पत्तिरेवावशिष्यते ।

20 सर्वथा परनिष्पत्तौ निर्व्यापारं न कारणम् ।
सव्यापारस्य कर्तृत्वे क्षणिकत्वन्तु दुर्घटम् ॥

---

**इदं प्रतीत्येति** । इदं प्रतीत्य ज्ञात्वा समनन्तरमेवेदं प्रतीयत इत्येतावन्मात्रं पूर्वोत्तरभावित्वं कार्यकारणत्वहेतुः, न पुनर्व्यापारात् कारणत्वमिति । इदं पूर्वमिदमुत्तरमित्येवंरूप इदंप्रत्ययो ययोः कार्यकारणयोस्ताविदंप्रत्ययौ, तयोर्भाव **इदंप्रत्ययता** ।
25 **तथापि लब्धात्मन इति** । न ह्यनुत्पन्नस्य प्रतीतिः सम्भवति । सर्वस्य सुखदुःखादि यत्

इत्थञ्च सत्त्वं व्यावृत्तं क्षणिकेभ्यो विशेषतः ।
तेनासाधारणत्वेन यायात् संशयहेतुताम् ॥

अथवा लब्धात्मनः पदार्थस्य परोत्पत्तौ व्याप्रियमाणत्वेन कारणत्वावधारणाद् द्वित्रिक्षणस्थायित्वमवश्यमनन्तरनीत्या भवेदिति । प्रत्युत सत्त्वादक्षणिकत्वसिद्धेर्विरुद्धोऽयं हेतुः । अतश्चैवं नित्यानामेवार्थक्रियाकारित्वोपपत्तेः, समवाय्यसमवायिनिमित्तभेदेन त्रिविधा कारणसामग्री परस्परसंसर्गमागत्य यथासन्निधानं कार्यं प्रसूत इति कृतं क्रमयौगपद्यविकल्पैस्तावकैः । यदैवाविकलसामग्री तदैव कार्योत्पत्तिः ।

अत एव च कार्याणां युगपन्न समुद्भवः ।
न चापि कृत्वा करणं सामग्री हि न सर्वदा ॥
प्राणिकर्मविपाकोऽपि सामग्र्यन्तर्गतो नवः ।
सर्वत्र सुखदुःखादिहेतुस्त्वत्रोपपाद्यते ॥

न च समग्रव्यतिरेकाव्यतिरेकविकल्पोऽस्मत्पक्षे सामग्रीं बाधते समग्रधर्मत्वात्सामग्र्याः समग्रापेक्षया च सामग्र्येव तमबर्थातिशययोगात् कारणमिति प्रमाणसामान्यलक्षणे निर्णीतम् ।

समर्थत्वासमर्थत्वविकल्पेऽपि प्रसङ्गतः ।
सामग्र्या एव सामर्थ्यं ततः कार्यस्य दर्शनात् ॥

तदन्तर्गतस्य तु कारकजातस्य शकटाद्यङ्गस्येव सामर्थ्यं यावत्तावदभ्युपगतमेव तदपेक्षस्य सामग्र्या साधकतमत्वस्य निर्वहणम् । न हि भवति कृष्णाच्छुक्ल इति, अविकलपन्तु सामग्र्या एव सामर्थ्यं यदनन्तरं कार्यनिष्पत्तिरिति कार्यनिष्पत्तिदर्शनादेवावगम्यते ।

यदप्येकक्षणस्थायि कारकं स्यादित्युद्घोषितं परैः, तदप्यसत् । कार्यनिष्पत्तिपर्यन्तत्वादवस्थानस्य, एकेन क्षणेन तेषामेककार्यनिष्पत्तेरघटमान-

---

तद्धेतुत्वेन प्राणिकर्मविपाकस्य धर्माधर्मलक्षणस्योपपादनात् ।

न हि भवति कृष्णाच्छुक्लतर इति । अपि तु शुक्लात् शुक्लतरः, एवं साधकतम इति ।

त्वात् । कार्यसम्पत्तेरूर्ध्वन्तु सामग्री विप्लवते न समग्राणि तेषामेकैकशः क्वचित्क्वचिदुपलम्भाच्चक्रसूत्रदण्डादीनाम् । इत्थं स्थिराणामेव पदार्थानामर्थ-क्रियासामर्थ्यं समर्थितमिति न ततः क्षणभङ्गसिद्धिः ।

एवञ्च सत्त्वनित्यत्वयोर्विरोधात् सत्त्वप्रतीत्यैव एकचन्द्रबुद्धिवत्तदितर-
5 निराकरणमित्यादि यत्प्रलपितं तत्प्रतिक्षिप्तं भवति । यदप्यभाणि नाशं प्रत्यनपेक्षत्वात् क्षणिकाः पदार्था इति, तदपि यत्किञ्चिद् दण्डादिव्यापारान्वय-व्यतिरेकानुविधायिनस्तत्कार्यस्य घटाद्यभावस्य विस्तरतः प्रमाणचिन्तावसरे प्रसाधितत्वात् । प्रध्वंसाभावश्च विनाश इत्युच्यते ।

नश्वरानश्वरत्वादिविकल्पास्तु न साधवः ।
10 सामग्र्यधीनः प्रध्वंसो भावानामात्मलाभवत् ॥

मुद्गरादिसामग्र्या घटस्य किं क्रियते ? मृत्पिण्डदण्डसामग्र्या किमस्य क्रियते ? आत्मलाभ इति चेत्, अनयाप्यात्महानं करिष्यते ।

ननु नश्वरत्वे तत्कारणमफलमनश्वरत्वे त्वशक्तमिति । उत्पत्तावपि तुल्योऽयं प्रलापः । भवनस्वभावश्चेद् घटः स्वतः एव भवति, किं दण्डादि-
15 सामग्र्या ? अभवनस्वभावस्तु कर्तुमशक्यः खरविषाणवदिति । कारकव्यापार-कार्यत्वदर्शनादपर्यनुयोग एष इति चेद्विनाशेऽपि समः समाधिः, उत्पत्ति-वद्विनाशस्यापि कारकान्वयव्यतिरेकानुविधायित्वम्,

तस्मादुत्पन्नमात्रस्य विनाशो नास्ति वस्तुनः ।
आविनाशकसद्भावादवस्थानमिति स्थितम् ॥

20 **कदाचिद् घटस्य विनाशहेतोरनुपस्थितौ तस्य नित्यत्वमिति शङ्कानिरासः**

ननु सापेक्षाणां भावानां नावश्यम्भाविता भवेदिति घटस्य विनाश-हेतुर्नोपनिपतेदपि कदाचिदित्येवमसौ किं नित्य एव भवत्विति, अहो महान् प्रमाद उत्सन्नाः प्रजाः पतितो महान् वज्राशनिर्दुष्प्रतरोऽयं दोष उत्थितः । यदिह घटो नित्यो भवेत्तदिह कालाग्निरुद्र इव त्रिभुवनमपि भस्मीकुर्यात् ।

---

25 **अहो महान् प्रमाद** इति । अनेन 'यदि नित्योऽपि कदाचित् स्यात् तत् कस्य क्षतिः' इत्याह । पुनरनेनैवाभिप्रायेण **सोत्प्रासमुत्सन्नाः प्रजा** इत्यादि ।

अपि च मूढ ! सावयवस्याश्रितस्य कार्यस्य च नूनमवयवविभागादाश्रयविनाशाद्वा यदा कदाचिद्भवितव्यमेव विनाशेनेति कस्तन्नित्यत्वशङ्कावसरः । तथा हि न रामाभिषेककलशमद्य यावदनुवर्तमानमीश्वरवेश्मस्वपि पश्यति लोक इत्यवश्यंभावी तस्य विनाशे हेतुः, तस्मात् सहेतुको विनाश इति न स्वत एव नश्वरो भावः । 5

**प्रत्यभिज्ञायां न क्षणिकत्वविरोधित्वमित्यस्य निरसनोपक्रमः**

अपि च प्रत्यभिज्ञा स्वतेजोविभवविधूतबौद्धसिद्धान्तध्वान्तसिद्धनिर्भङ्गुरमेव भावनिवहमनिशमुपदर्शयन्ती दिनेशदीधितिदशशतविभागवती सर्वतो जाज्वलीतीति कस्तस्यां सत्यां क्षणभङ्गिनो भावानभिदध्यात् ? यत् किञ्चन तस्य समभाषितं तत् सर्वमसमञ्जसम् । 10

यत् तावदिदं कल्पितं स एवायमिति किमेकं विज्ञानमुत द्वे इति, तत्रोच्यते । सामानाधिकरण्येन नैकविषयावद्योतनप्रवणैकप्रतीतिसंवेनदात् केयं द्वित्वाशङ्का योऽयं समः यः समोऽयमित्येकत्वावमर्शिनी, स्वतस्तु या अनेकप्रतीतिरनुभूयते घटोऽयं पटोऽयमिति तत्र निरन्तरोत्पन्नघटज्ञानपटस्मरणवद्भिन्नविषयं बुद्धिद्वयमिति । यत्तु किमेकप्रतीतिजन्मनि कारणमिति, 15

कार्यञ्चेदवगम्येत किं कारणपरीक्षया ।
कार्यञ्चेन्नावगम्येत किं कारणपरीक्षया ॥

न च कार्यमकारणं भवितुमर्हति कार्यत्वस्यानुपपत्तेरिति भवितव्यमेव तत्र कारणेन । अस्ति च संस्कारसहितमिन्द्रियमस्याः प्रतीतेः करणं पृथक्कार्यतापि तयोर्दर्शनादेवाभ्युपगतम्, इदन्तु दृष्टत्वाद् दुरपलपम् । क्वचित्तु 20 केवलेन्द्रियव्यापारकार्यदर्शनान्न सर्वस्य तथाविधस्यैव तस्य कार्यकारित्वम्, सहकार्यपेक्षणेन कार्यान्तरजननात् ।

**स्वमते प्रत्यभिज्ञास्वरूपम्**

यत् तूक्तं कीदृशोऽर्थः प्रत्यभिज्ञायामवभातीति, तत्रैते वादिनः शतकृत्वो दत्तोत्तरा अपि यत् पुनरस्माननुयुञ्जते तेन बलवदुद्विग्नाः स्मः । उक्तमत्र 25

प्रमितयः प्रष्टव्या न तु वादिन इति । अतीतकालविशिष्टो वर्तमानकालावच्छिन्नश्चार्थं एतस्यामवभासते,

ननु पूर्वापरौ कालौ परस्परविरोधिनौ ।
नैकत्र विशतस्तेन तद्भेदाद् वस्तु भिद्यते ॥

5 नैतदेवम्, केयूरकिरीटकटककुण्डलादिभेदेऽपि देवदत्तस्याभेदात्, अवयवी अस्ति नास्तीति परीक्षणं वादान्तरगमनम् । अपवर्गाह्निके च विस्तरेण अवयवी साधयिष्यत इत्यास्तामेतत् । कुण्डलादीनामविरोधादिति चेन्न, लाक्षणिकविरोधाभ्युपगमात् परस्परव्यवहारव्यवस्थितात्मानो हि सर्वे भावा इति वदद्भिर्भवद्भिरभ्युपेत एषां विरोधः ।

10 ननु केयूरादीनां विरोधेऽपि तदवस्थानादेकदेवदत्तसम्बन्धित्वमभ्युपपद्येतापि, भूतवर्तमानयोस्तु युगपदसन्निधानात् तद्विशिष्टता स्तम्भादेरुच्यते प्रतीयते च, द्वौ कालौ न च सन्निहिताविति चित्रम् । किं भूतोऽपि काल इदानीमस्ति ? मैवम् । नासावस्तीत्युच्यते अपि त्वासीत्, अस्तीत्युच्यमानं वर्त्तमान एव न भूतः । हन्त तर्हि भूतो भूतत्वादेव नेदानीमस्तीति कथं
15 प्रतिभासते ? भूतत्वेनैवेति ब्रूमः । भूतः कालो भूततया गृह्यते वर्तमानो वर्तमानतयैव, अर्थस्तूभयानुगत एक एव तथा ग्रहणात् ।

ननु भूतकालस्येदानीमभावात् तद्विषयं ज्ञानमनर्थजं स्यात् ? न धर्मिणस्तदवच्छिन्नस्य ज्ञानजनकस्य भावात् । भूतः कथमवच्छेदक इति चेत्, तथा प्रतिभासात्, प्रतीतिमवमृषतु भवान् स एवायमिति यः पूर्वमासीत् स इदानी-
20 मप्यस्तीति सोऽयमतीतकालविशिष्टोऽर्थ एतस्यां बुद्धाववभासते ।

नन्वसता भूतकालेन विशेषितमर्थं कथमिन्द्रियजप्रतीतिरालम्बनीकुर्य्यात् ? उच्यते,

अन्त्यसंख्येयसंवित्तिकाले प्रागवलोकिताः ।
यथा शतादिज्ञानानि जनयन्ति घटादयः ॥
25 अतीतकालसंसर्गो भवन्नेव विशेषणम् ।
स्तम्भादिप्रत्यभिज्ञायाः कारणत्वं प्रपत्स्यते ॥

संख्येयाः घटादयः सन्त्यतीतकालो नास्तीति चेत्, कपित्थेषु भक्ष्यमाणेषु किं वक्ष्यति देवानां प्रियः ? शतं कपित्थानां भक्षितवान् वाहीक इति प्रतीतिदर्शनात् ? न च नवनवतावनुपयुक्तेषु कपित्थेष्वत्रैव शततमे शतमिति भवति, यथा तत्रातिक्रान्तान्यपि नवनवतिः कपित्थानि शतप्रतीतिहेतुतामुपयान्ति प्रतिभासोपारूढत्वात्, एवमतीतकालयोगोऽपि प्रतिभासमानः प्रत्यभिज्ञामाधास्यतीति ।

विकल्पमात्रं शतप्रत्यय इति चेत्, भो महात्मन् ! किं वा न विकल्पमात्रम् ? किन्तु जीवन्त्यमी सविकल्पकप्रामाण्यवादिनः ।

> यश्च सामान्यसंसिद्धौ प्रकारः प्राक् प्रदर्शितः ।
> योज्यः स एव द्वित्वादिसंख्यासद्भावसिद्धये ।।

इत्यलं कथाक्षेपेण ।

नन्वतिक्रान्तग्राहि च प्रत्यभिज्ञाविज्ञानमिन्द्रियार्थसन्निकर्षजञ्चेति नः कौतुकमिदं कियत् कौतुकम् ? अर्थस्तावदस्य पुरोऽवस्थितोऽस्त्येव जनकः स्तम्भादिः । नन्वस्ति स तु वर्तमानकाल एव । न केवलं वर्तमानकालयोगिनार्थेन तत् प्रत्ययजननात् तस्य वर्तमान इवातीतोऽपि कालोऽवच्छेदकतां प्रतिपद्यते स च तदवच्छिन्नोऽर्थ इदं ज्ञानमादधातीत्यर्थजमेतदिन्द्रियजमपि भवति तद्भावाभावानुविधानात् ।

नन्वतीतेऽर्थे कथमिन्द्रियं प्रवर्त्तते ? कस्यैष पर्यनुयोगः ? नेन्द्रियस्याचेतनत्वात् । पुरुषस्त्वविस्फारिताक्षो नेदृशीं प्रतिपत्तिं लभते विस्फारिताक्षस्तु लभत इति सोऽपि नानुयोज्यः ।

नन्वतीतग्राहित्वाद् वरमप्रामाण्यं कल्पयितुं युक्तमस्या बुद्धेरिन्द्रियस्यातीतेऽपि सामर्थ्यमदृष्टमिति, अप्रामाण्यं नाम बाधकात् प्रत्ययात् कल्प्यते न चासावस्ति प्रत्यभिज्ञायाम्, अनुमानन्तु तावकं प्रतिक्षिप्तम् ।

ननु कारणदोषादवकल्पते एवाप्रामाण्यम्, आयुष्मन् ! सोऽप्युच्यताम् । उक्त एवेन्द्रियस्यातीतविषयग्रहणे सामर्थ्यविरहः । वत्स ! सम्यगुक्तवानसि नायमिन्द्रियस्य तिमिरादिरिव दोषः, अतीते काले स्वतन्त्रे तस्य सामर्थ्यम्, न

तद्ग्राह्यवर्तमानवस्तुविशेषणीभूते, संस्कारसचिवस्य चास्य सामर्थ्यं न केवल-स्येत्युक्तम् । तस्मादतिक्रान्तकालविशेषितपूर्ववर्त्तिस्तम्भादिपदार्थविषयमिन्द्रि-यादिसन्निकर्षोत्पन्नमेवेदं प्रत्यभिज्ञाज्ञानमिति सिद्धम् ।

अथ वा पूर्वाभिज्ञानविशिष्टग्राह्यमाणमिष्यतां प्रत्यभिज्ञानं गन्धवत्कुन्द-बुद्धिवद्, यथा हि लोचनगोचरेऽपि कुन्दकुसुमे तदविषयगन्धविशेषिते बाह्येन्द्रिय-द्वारकग्रहणमघटमानमिति मानसमेव सुरभिकुसुममिति ज्ञानम्, एवं पूर्वज्ञान-विशेषितस्य स्तम्भादेर्विशेषणमतीतक्षणविषय इति मानसी प्रत्यभिज्ञा । पूर्व-प्रवृत्तबाह्येन्द्रियोपजनितज्ञानविशिष्टबाह्यविषयग्राहिणि चान्तःकरणेऽभ्युपगम्य-माने सति नान्धाद्यभावप्रसङ्ग इति बहुशः कथितम् ।

ननु कुन्दादेर्विशेषणं वर्त्तमानमस्ति सौरभम्, इह त्वतीतं पूर्वविज्ञान-मिति कथं विशेषणमत्र ? किं तेन सता करिष्यसि शतादिबुद्धिष्वतिक्रान्त-स्यापि कपित्थादेः कारणत्वदर्शनादिति । तदेवमन्तःकरणजन्मनापि प्रत्य-भिज्ञानेन स्थैर्यमवस्थाप्यत एव भावानाम् ।

या तु मुण्डितकेशादिप्रत्यभिज्ञानतुल्यता ।
स्तम्भादिप्रत्यभिज्ञायाः कथ्यते साप्यसङ्गता ।।

तत्रान्तराले मुण्डितशिरोदर्शनमेव बाधकमिह तु न किंचिदस्ति, अत एव शब्दे सदैव स्फुरन्त्या विनाशबुद्धया वैधुर्यमुपनीता प्रत्यभिज्ञा तु न तामवस्थापयितुं समर्थेत्युक्तम्, ज्वालादावपि तैलवर्त्तिक्षयानुमानबाधितत्वाद् भ्रान्ता प्रत्यभिज्ञा, न तु तथा स्तम्भादावनुमानमपि बाधकमस्ति, सत्त्वानु-मानन्तु निरस्तमेव । यद्यपि च नैष नियमः प्रत्यक्षानुमानयोर्विरोधे प्रत्यक्षं बलीय इति, त्वरिततरपरिभ्रमितचक्रीभवदलातग्राहिणः प्रत्यक्षस्यानुमान-बाधितत्वदर्शनादिति । तथा प्रकृतं क्षणिकत्वानुमानमन्यथासिद्धमनन्यथासिद्धन्तु

---

**तैलवर्त्तिक्षयाद्यनुमानबाधितत्वादिति ।** तैलवर्त्तिरूपस्य क्षयदर्शनात् कारणभेदः पूर्वकालाद् उत्तरकालानां गम्यते । न हि यदेव तैलवर्त्तिरूपपूर्वकालायाः कारणं तदेवो-त्तरासामिति वक्तुं शक्यम् । प्रत्यक्षेण पूर्वकालाकारणस्य तैलवर्त्तिरूपस्य क्षयदर्शनादेत-त्कारणभेदस्तावदिति । ततश्च काला धर्मिण्यः परस्परभिन्ना इति साध्यम्, भिन्नकारण-जन्यत्वाद् घटपदादिवदित्यनुमानप्रवृत्तिः । **प्रत्यक्षस्याप्यनुमानबाधितत्वदर्शनादि ।** चक्रं

प्रत्यक्षमिति प्रत्यक्षमेव क्षणिकत्वानुमानस्य बाधकम्, न चेतरेतराश्रयत्व-मनुमानमिथ्यात्वनिबन्धनं प्रत्यभिज्ञाप्रत्यक्षप्रामाण्यानभ्युपगमात्, स्वहेतुबल-वत्तयैव प्रत्यभिज्ञा प्रत्यक्षं न तस्येदं दैन्यं यदनुमानमिथ्यात्वे सति तत्प्रमाणी-भविष्यतीति ।

आस्तां वा प्रत्यभिज्ञानं य एष प्रथमक्षणः । 5
स्तम्भादिबोधस्तेनापि बाध्यते क्षणभङ्गिता ॥

तुल्यसामग्र्यधीनत्वनिराकृतत्वात् साकारस्य निराकरिष्यमाणत्वादन्वय-व्यतिरेकोपकृतमानसप्रत्यक्षनिश्चितजनकस्य चार्थस्यावभास्यत्वनिश्चया-दुत्पन्नोऽर्थो ज्ञानं जनयति, जातेन च ज्ञानेन गृह्यत इति बलाद् द्वित्रक्षणा-वस्थायित्वमस्योपलभ्यत इति कुतः क्षणिकत्वम् । 10

यदि लब्धस्वरूपोऽपि न नष्टः प्रथमे क्षणे ।
हेत्वन्तराद् विनाशोऽस्य न स्वरूपनिबन्धनः ॥
विचित्रा च पदार्थानां प्रतीतिरिह दृश्यते ।
चिरन्तनमतिः काचित् काचित् तत्कालजातधीः ॥
सलिलाहरणव्यग्रकुम्भावगतिरन्यथा । 15
तदैव कन्दुकाकृष्टकुम्भावगतिरन्यथा ॥
एतेन रविगुप्तोऽपि परिम्लानमुखीकृतः ।
क्षणिकत्वक्षमादित्वसमुत्प्रेक्षणपण्डितः ॥

तथा हि वर्तमानवस्तुविग्रहग्राहि विज्ञानमनन्तरोक्तनयेन जनकार्थ-प्रतिभासनाद् द्वित्रक्षणस्थायितामर्थस्य गमयतीत्युक्तम् । आद्यञ्च किञ्चिद् 20 विज्ञानमनागतकालस्पर्शि भवति, यथाह भट्टः 'रजतं गृह्यमाणं हि चिरस्थायीति

---

हि परिमण्डलाकारत्वाद् सर्वदिग्भिर्युगपत् सम्बध्यते, तथारूपत्वं च अलातस्य नास्ति, अतोऽनुमानेन बाधः। तथाहि अलातधर्मी युगपत् सर्वाभिर्दिग्भिर्न सम्बध्यत इति साध्यम्, अलातत्वात्, भूमिस्थितालातवदित्यनुमानम् । क्षणिकत्वानुमानमन्यथासिद्धम् । क्षणिकत्वपरिहारेणैव सत्त्वस्य प्राङ्नीत्या सम्भवात् । 25

गृह्यते' इति । उत्तरमपि प्रत्यभिज्ञानं प्रतीतकालावच्छिन्नमर्थमवद्योतयतीति दर्शितम् ।

न चातीतानागतजन्मग्रहणमाशङ्कनीयमिति कारणसामर्थ्यनियमात्, न ह्यतीतानागतजन्मग्रहणमशक्यक्रियमिति यावदपि दृश्यमानं ग्रहणं तदप्यपह्नोतुं युक्तम् । न चैतावतातीतानागतकालावच्छिन्नवर्तमानवस्तुग्रहणमात्रेण सामान्यतो दृष्टेनादृष्टमप्यतीतानागतज्ञानं कल्प्यम्, यथादर्शनं हि वस्तूनि व्यवस्थाप्यन्ते न किञ्चिद् दृष्ट्वा, अन्यदपि कल्प्यते दृष्टमपि वा निह्नूयत इति ।

**उत्पत्त्यनन्तरमेव विनाशे न प्रत्यक्षं सम्भवति**

अपि च निमेषदृष्टेरत्रुटितसत्ताकस्तम्भादिपदार्थग्राहि प्रत्यक्षमुत्पद्यते, तत् कथं क्षणिकग्राहि कथ्यते ।

यच्च तत्र विकल्पितम्, अतीतानागतक्षणयोरसन्निहितत्वेन प्रत्यक्षग्राह्यतानुपपत्तेर्वर्तमानक्षणस्य चातिसूक्ष्मत्वात् तत्कालग्राहिणा प्रत्यक्षेण क्षणिकत्वं गृहीतं भवतीति, तदनुपपन्नम् । मा नाम भूदतीतानागतकालग्रहणं वर्तमान एव तत्रानिमेषदर्शनस्य कियान् काल इति चिन्त्यताम् । निमेषकृतस्यापि दर्शनविच्छेदस्यानवकाशाद् यावद्धि दर्शनं न विच्छिन्नं तावान् वर्तमानः काल इति तद्ग्रहणे स्थैर्यं गृहीतं भवति न क्षणिकत्वम् ।

ननु तावानसौ कालः स क्षणसमुदायो भवति न क्षणः । क्षणश्चैक एव वर्तमानो भवति, न ततः पूर्वापरौ क्षणावतीतानागतौ भवतः, तयोश्च न ग्रहणमित्युक्तम्, सिद्धे क्षणिकत्वे एवं शक्यते वक्तुं न तु तत्साधनावसरे । कालो ह्येको नित्यो विभुरिति साधितोऽनुमानपरीक्षायाम् । न तु क्षणसमुदायात्मा कालः । कालस्य तु भेदाः क्रियोपजनविनाशाद्युपनिबन्धनाः कल्प्यन्त

---

**निमेषकृतस्यापीति ।** अनिमेषदृष्टिमङ्गीकृत्य कथनात् तत्कृतो दर्शनविच्छेदोऽनवकाशोऽसम्भवीति । **तद्ग्रहणे** यावति दर्शनं न विच्छिन्नं तावद्वर्तमानकालविशिष्टवस्तुग्रहणे ।

**ननु तावानसौ काल इति ।** क्षणसमुदायो वर्तमानादिक्षणसमुदायः, न वर्तमान एक एवेत्यर्थः । **कालस्य तु भेदाः क्रियोपजनेति ।** यदा क्रियोपजायते तदा वर्तमानता, उपरतायामतीतता, अनागतायां भविष्यत्तेति ।

इत्यपि तत्रैव परीक्षितम् । तदयमनिमेषदृष्टेर्दर्शनविच्छेदानुपग्रहात् तावानेकः स वर्त्तमान एव भवतु ।

ननु कालो नाम न कश्चित् पारमार्थिकः पदार्थ एव परिदृश्यमानो वर्त्तमानादिव्यवहारहेतुः, स च न चिरमनुभूयत इति क्षणिक उच्यते । भिक्षो ! अलमवान्तरगमनेन, मा भूत् कालः पदार्थस्त्वनिमेषदृष्टिना दृष्टय-विच्छेदादविच्छिन्नसत्ताक एव दृश्यत इति न क्षणिकग्राहि प्रत्यक्षम् ।

ननु भवद्भिरपि न स्थिरं ज्ञानमिष्यते क्षीणे च ज्ञाने सोऽर्थो द्वितीय-क्षणे केन गृह्यते, ज्ञानान्तरेण तु गृह्यमाणः स एवेत्यत्र को निश्चयः ? अनिमेषदृष्टेर्ज्ञानं न क्षीयत एवेत्येके ।

अथवा किं न एतेन, न हि विषयप्रतिभासकाले ज्ञानमवभासत इत्य-सकृदुक्तम्, वक्ष्यते च तत्र तत् कीदृशमिति कुतो वयं विद्मः ? अर्थस्त्वविच्छिन्न-सत्ताक एव गृह्यते ज्ञानन्तु वर्त्तमानकालमप्यतीतानागतकालग्राहि भवति स्मरणमिव प्रातिभमिव भूतभविष्यद्वृष्टयनुमानमिव ।

नन्विन्द्रियव्यापारो न क्षणान्तरस्थायीति तस्मिन् असति कुतोऽस्य विततकालग्रहणम्, तदलं भवतु श्रान्तोऽसि मज्जस्वैवं ब्रुवाणः । निमेषकृतो-ऽपि विच्छेदोऽस्य नास्ति, अथ च न स्थिर इन्द्रियव्यापार इति साहसिकता-मात्रम् । सन्निकर्षश्चास्य विषयग्रहणे व्यापारः स च स्थिर एव । तस्माद् विततकालस्य वस्तुनः प्रत्यक्षेण ग्रहणमिति स्थितम्, एवञ्च स्थिते न स्वरूप-मात्रमेव भावानां विनाशकारणं कारणानाञ्च नित्यत्वमेव दण्डादीनामिति सिद्धम् ।

यत् पुनरभाणि दर्शनादर्शने एव सत्त्वासत्त्वे भावानामिति, तदपि व्यामूढ-भाषितम्, दर्शनादर्शनाभ्यामेव भावाभावयोः परिच्छेदो न पुनर्दर्शनादर्शने

---

**पदार्थ एव परिदृश्यमानो वर्तमानादिव्यवहारहेतुः**, यथा सामान्यादिव्यवहारो न व्यक्तिव्यतिरिक्तालम्बनोऽपि त्वेकार्थक्रियाकारित्वाद्युपाधिनिबन्धनोऽसौ तत्र, तथा दृश्यमानत्वोपाधिनिबन्धनं पदार्थेषु वर्तमानताव्यवहार इति ।

**तत् कीदृशमिति कुतो विद्मः** । कीदृशं क्षीयते न वेति ।

एव भावाभावावभासश्च विस्तरतः प्राक् साधितः, स च सहेतुक इति न स्वत एव विशरारवो भावाः । एवन्तु निष्प्रमाणे पदार्थस्थैर्यपक्षे ज्ञानन्तु जनकस्य नियतस्य वस्तुनो दर्शनम्, दर्शनविषयीकृतस्य प्रवृत्तिः, प्रवृत्तिविषयीकृतस्य प्राप्तिरिति व्यवहारो न स्यादर्थक्षणनानात्वात्, बाध्यबाधकभावश्च क्वचिद् ज्ञानानां दृष्टः स च न स्यात् । पूर्वाविगतरजतादिविषयभावग्राहिणो ज्ञानस्य गृहीतमुद्गरदलितघटाभावज्ञानवद् बाधकत्वानुपपत्तेः । पूर्वदृष्टस्य स्मरणम्, स्मृतस्य, कस्यचित् प्रत्यभिज्ञानम् । प्रत्यभिज्ञातस्य गृहादेरर्धकृतस्य समापनमित्यादयश्च व्यवहारा विप्रलुप्येरन् ।

अथ सन्तानमाश्रित्य क्रियते तत्समर्थनम् ।
न तस्य भिन्नाभिन्नत्वविकल्पानुपपत्तितः ॥
अभेदपक्षे क्षणवद् व्यवहारो न सिध्यति ।
व्यतिरेके तु चिन्त्योऽसौ वास्तवोऽवास्तवोऽपि वा ॥
अवास्तवत्वे पूर्वोक्तं कार्यं विघटते पुनः ।
वास्तवत्वे स्थिरो वा स्यात् क्षणिको वेति चिन्त्यताम् ॥
सन्तानिनिर्विशेषः स्तात्सन्तानः क्षणभङ्गुरः ।
न सिध्येत् पुनरप्येष व्यवहारः पुरोदितः ॥

अथापि नित्यं परमार्थसन्तं सन्ताननामानमुपैषि भावम् ।
उत्तिष्ठ भिक्षो ! फलितास्तवाशाः सोऽयं समाप्तः क्षणभङ्गवादः ॥

तदेवं सति सन्तानच्छद्मनो विनिवारणात् ।
लोकयात्रा स्थिरैरेव पदार्थैरुपपद्यताम् ॥
एवमन्तरनिगदितदूषणनिकुरुम्बविनिहतप्रसरम् ।
नाध्यक्षं क्षणिकत्वे न चानुमानप्रमाणं तत् ॥
क्षणभङ्गे निरस्ते च कार्यमाधारवद् ध्रुवम् ।
अतो ज्ञानादिकार्येण युक्तमाश्रयकल्पनम् ॥

---

**मुद्गरदलितेति** । यथा मुद्गरभग्नघटाभावज्ञानं न पूर्वस्य घटसत्ताकालभाविघटज्ञानस्य बाधकं तथा नेदं रजतमित्यपि न स्यात् पूर्वानुभूतस्यानष्टत्वात् ।

**सन्तानच्छद्मनो विनिवारणात्** । सन्तान एव छद्म; अङ्गीक्रियते लोकयात्रा अथ च

सुखादेरपि कार्यस्य विज्ञानाद् व्यतिरिक्तता ।
प्रागुक्तेति तदप्यन्यद् भवत्यस्यानुमापकम् ॥

**क्षणिकज्ञानात्मवादस्वीकारे कर्त्तुः कर्मफलसम्बन्धाभावः**

किञ्च नाङ्गीकरोषि त्वमात्मानं पारलौकिकम् ।
उपैषि परलोकञ्च किमिदन्ते वकव्रतम् ॥ 5
कर्म सन्तानिनान्येन यत्कृतं चैत्यवन्दनम् ।
ततोऽद्य फलमन्येन भुज्यतेऽकृतकर्मणा ॥
न वा निर्वृतिरप्येति चैत्यवन्दनकर्मणा ।
ज्ञानक्षणेन नैकेन किञ्चित् कर्म समाप्यते ॥
कार्यकारणभावश्च यस्त्वदुक्तः स दूषितः ॥ 10
कार्यकारणभावे हि न ह्यन्तत्वं निवर्तते ।
अनैकान्तिकता चास्य सन्तानान्तरबुद्धिभिः ॥
उपादानत्वरूपोऽपि विशेषः प्राङ् निराकृतः ॥
कार्पासरागसङ्क्रान्तिदृष्टान्तो यश्च वर्णितः ।
सोऽप्ययुक्तः स्वरूपेण तत्र तस्यैव दर्शनात् ॥ 15
य एव रागः कार्पासे बीजे समुपकल्पितः ।
स एव दृश्यते पुष्पे न तु तस्मात् फलान्तरम् ॥
एवं कर्मानुवृत्तिः स्यात् फलभोगस्तु दुर्घटः ।
कर्मानुवृत्तिरप्येषा न चैकस्यास्ति कस्यचित् ॥
कार्यकारणयोर्भेदात् कार्पासकुसुमादिवत् । 20
अन्यत्रैव हि कर्म स्यादन्यत्रैव च तत्फलम् ॥
न च सन्तानभोगाय कश्चित् कर्मानुतिष्ठति ।
फलमस्मान्ममैव स्यादिति सर्वः प्रवर्तते ॥

---

सन्तानच्छद्मना, न साक्षात् स्थिरपदार्थाश्रयणेन । **सन्तानान्तरबुद्धिभिरिति ।** उपाध्यायबुद्धि-शिष्यबुद्ध्योः कार्यकारणभावेऽप्यन्यत्वस्य स्फुटतया दर्शनात् । **फलभोगस्तु दुर्घट इति ।** 25

सर्वथा शाक्यभिक्षूणां परलोको विसंष्ठुलः ।
न तत्प्रसाधने तेषां काचिद् गमनिकास्ति वा ।।

**क्षणिकज्ञानात्मवादे दोषप्रदर्शनम्**

गर्भादौ प्रथमं ज्ञानं विज्ञानान्तरपूर्वकम् ।
5 ज्ञानत्वादित्ययं हेतुरप्रयोजक इष्यते ।।
मूर्छाद्यनन्तरोद्भूतज्ञानैश्च व्यभिचार्ययम् ।
मूर्च्छितस्यापि विज्ञानमस्तीत्येतत्तु कौतुकम् ।।
न ह्यर्थावगतेरन्यद् रूपं ज्ञानस्य किञ्चन ।
मूर्च्छादिषु कुतस्तत् स्यात् कुतो वा कललादिषु ।।
10 कललादिदशायां वा यदि विज्ञानमिष्यते ।
मातापितृस्थयोरस्ति शुक्रशोणितयोरपि ।।
ततश्चैकत्र सन्ताने चैतन्यद्वयमापतेत् ।
चेतनानां बहुत्वं वा दम्पत्योर्बहुपुत्रयोः ।।
न चैष नियमो लोके सदृशात् सदृशोद्भवः ।
15 वृश्चिकादेः समुत्पादो गोमयादपि दृश्यते ।।
शरीरान्तरसंचारचातुर्यञ्च धियां कथम् ।
ज्वालादिवन्न मूर्तत्वं न च व्यापकतात्मवत् ।।
आतिवाहिकदेहेन नीयन्ते चेद् भवान्तरम् ।
नन्वातिवाहिकेऽप्यासां कथं संचारसम्भवः ।।

---

20 अकृताभ्यागमदोषस्य तदवस्थत्वात् । **न चैष नियमो लोक** इति । अस्मिन् हि नियमे सिद्धे सति गर्भशरीरज्ञानस्य वैसादृश्यादुत्पत्त्यसम्भवात् मुमूर्षुशरीरस्तु न तस्योपादानत्वे कल्पते, ततश्च न परलोकसिद्धिः । **आतिवाहिकदेहेनेति** । अतिवाहो मुमूर्षुशरीराद् गर्भशरीरसञ्चरणं ज्ञानस्य, तत् प्रयोजनं यस्य तदातिवाहिकम् अन्तराभवशरीरम् । तदुक्तम्,

25 नात्मास्ति स्कन्धमात्रं तु क्लेशकर्माभिसंस्कृतम् ।
अन्तराभवसन्तत्या याति कुक्षिं प्रदीपवत् ।। इति ।

आस्तामिवैष वा जीवद्देहेऽपि पथि गच्छताम् ।
प्रदेशान्तरसञ्चारो ज्ञानानां भवतः कथम् ॥
न ह्येषां भूतधर्मत्वं न स्वतो गतिशक्तिता ।
न च जात्यादिवद् वृत्तिर्न च व्यापकतात्मवत् ॥
एवं यदैव निष्क्रान्तो विहारकुहराद् भवान् । 5
तदा कष्टी भवद्देहो ज्ञानसंक्रान्तिसम्भवात् ॥
तदयं संक्षेपार्थस्त्यक्तव्यो वा निरस्य कुरुकुर्वीम् ।
सुरगुरुवत् परलोके नित्यो वात्माभ्युपेतव्यः ॥

**ज्ञानातिरिक्तात्मबोधे दोषोद्धारः**

यत्त्वस्य चर्मगगनोपमतां विकल्प्य 10
नाशित्वमुक्तमथ वा विफलत्वमेव ।
तन्नैव साधु सुखदुःखदृशोपभोग-
योगेऽपि नाशमधिगच्छति नायमात्मा ॥
विकृतिश्च तस्य सुखदुःखजन्मनो
न हि तादृशी भवति लुप्यते यथा । 15
सहकारिकारणवशात्तु जायते
तदमुष्य येन समुपैति भोक्तृताम् ॥
अथ वोपजनव्ययस्वभावः
स्वदशाभेदसमन्वये हि पुंसः ।
फणिनः किल कुण्डलाद्यवस्था- 20
नुगतस्येव न भिन्नतेति केचित् ॥
अवस्था एव ताः प्रसभविलयातङ्कविधुराः
अवस्थाता त्वेकः स्फुरति निरपायस्थिरवपुः ।
असत्यस्मिन् पूर्वावगतिविषयानुस्मृतिभुवां
न सिद्धः कार्याणामिति निपुणमावेदितमिदम् ॥ 25

---

कुरुकुचो लोकवञ्चनार्थं क्षान्तिमा धार्यते दम्भरूपा । सुखदुःखजन्मनो न हि तादृशीति ।

ननु विमृशति भोगे कर्म नित्योऽपि नात्मा
न हि नरकनिमग्नो मन्यते कश्चिदेवम् ।
किल यदहमकार्षं प्राग्भवे कर्म पापं
फलमुपनतमस्माद् भुज्यते तन्मयेति ।।

5 कार्योपभोगसमये किमनेन कृत्यं नास्य प्रवृत्तिरधुना न निवृत्तिरस्मात् ।
यस्तु प्रवृत्तिजननौपयिकोऽपमर्शः शास्त्रादसौ भवति शास्त्रविदामवश्यम् ।।

विमर्शोऽयं पश्चादपि भवति दृष्टे तु विषये
मया यूना यत् तत् किमपि सदसद् वा कृतमभूत् ।
ततो वृद्धोऽद्याहं फलमनुभवामीति तदयं
10 पुमानस्ति स्थायी सुकृतफलभोगादिनिपुणः ।।

नास्त्यात्मा फलभोगमात्रमथ च स्वर्गाय चैत्यार्चनं
संस्काराः क्षणिका युगस्थितिभृतश्चैते विहाराः कृताः ।
सर्वं शून्यमिदं वसूनि गुरवे देहीति चादिश्यते
बौद्धानां चरितं किमन्यदियती दम्भस्य भूमिः परा ।।

15 **उद्भटभट्टमते शरीरादूर्ध्वं न प्रमातृतत्त्वं विद्यते**

अत्र सुशिक्षिताश्चार्वाका आहुः, यावच्छरीरमवस्थितमेकं प्रमातृतत्त्वमनुसंधानादिव्यवहारसमर्थमस्तु नाम, कस्तत्र कलहायते, शरीरादूर्ध्वंन्तु तदस्तीति किमत्र प्रमाणम् ? न च पूर्वंशरीरमपहाय शरीरान्तरं सङ्क्रामति प्रमाता, यदि ह्येवं भवेत् तदिह शरीरे शैशवदशानुभूतपदार्थस्मरणवदतीत-
20 जन्मानुभूतपदार्थस्मरणमपि तस्य भवेत्, न हि तस्य नित्यत्वाविशेषे च शरीरभेदाविशेषे च स्मरणविशेषे कारणमुत्पश्यामो यद् इह जन्मन्येवानुभूतं स्मरति

---

सुखदुःखजन्मन इति पञ्चमी। **ननु विमृशति भोग** इति। अतश्च भोगकाले 'एवंरूपं कर्म यन्मया कृतं तस्यैव फलमथवान्यकृतस्य, को विशेषः ?' इति विमृशति नैव कश्चित् कर्मकरणे प्रवर्तते इति। **कार्योपभोगसमय** इति उत्तरकाले। **यस्तु प्रवृत्तिजननौ-**
25 **पयिक** इति। संसारानित्यत्वादिः विमर्शः। **यूना यत्** कृतमीश्वरसेवादि। **स्वकृतफल-भोगादिनियत** इति। स्वकृतानां कर्मणां यत् फलभोगादि तेन नियतो नियम्यमानोऽवश्यंभावी च कृतकर्मफलोपभोग इत्यर्थः।

नान्यजन्मानुभूतमिति । तस्मादूर्ध्वं देहान्नास्त्येव प्रमातेति, नित्यात्मवादमूल-
परलोककथाकुरुकुर्वीमपास्य यथासुखमास्यताम् । यथाह,

यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य शान्तस्य पुनरागमनं कुतः ।। इति ।

**तन्मतखण्डनम्** 5

अत्रोच्यते । न खलु निपुणमिव सुशिक्षितमायुष्मता चार्वाकाचार्य-
चातुर्यम् । यावच्छरीरमेकमनुयायि प्रमातृतत्त्वमस्तीति यदुक्तवानसि तन्न
विस्मर्तुमर्हसि, न चास्तित्वाविनाभावी भावानां विनाशः स्वाभाविकः, किन्तु
हेत्वन्तरनिमित्तक इति सौगतैः सह कलहमतिमात्रमधुनैव कृत्वा समर्थितोऽ-
यमर्थः । 10

न च विनाशहेतुः प्रमातरि चिरमपि विचार्यमाणः कश्चित् कुतश्चिद-
वाप्यते । न चानुपलभ्यमानोऽप्यसौ कल्पयितुं पार्यते । न ह्यात्मा पटादिरिव
सावयव उपलभ्यते, यदवयवविभागादिना नङ्क्ष्यतीति गम्यते । उत्पत्ति-
र्नात्मनो दृष्टा यतस्तदविनाभाविनो निरवयवस्यापि कर्मादेरिव विनाशः
प्रतीयेत । 15

न चैष कस्यचिदात्मा गुणो येनाश्रयविनाशाद् वा विरोधिगुणान्तर-
प्रादुर्भावाद् वा प्रध्वंसमासादयेत् । न चैवं शक्यते वक्तुं किं विनाशहेत्वनुमानेन
प्रत्यक्ष एवास्य विनाशो दृश्यत इति, यतो न शरीरवदसौ दह्यमानः शकुनि-
भिरवलुप्यमानो वा कदाचिदुपलब्ध इति । तस्माद् विनाशादर्शनाद् विनाश-
हेत्वनुमानासम्भवाच्च अस्ति चेदात्मा नित्य एवेत्यवधार्यताम् । 20

तस्माद् भूतचैतन्यमेव चिरन्तनचार्वाकाचार्यवत् परलोकापलापपरितोषा-
लम्बितयत्किञ्चनकारित्वसुलभसुखासिकासक्तहृदयैर्वरमाश्रितव्यम्, आशरीर-
मवस्थिते तु प्रमातृतत्त्वे सति न फलन्त्येते परलोकापलापमनोरथाः ।

---

**चिरन्तनचार्वाकाचार्यवदिति** । चिरन्तनचार्वाकैर्हि भाविविक्तप्रभृतिभिः 'भूतेभ्य-
श्चैतन्यम्' इति सूत्रं भूतेभ्य इति पञ्चम्यन्तपदयोजनया व्याख्यातम्, भूतेभ्य उत्पद्यते 25
चैतन्यमिति । उद्भटेन तु 'भूतेभ्यः' इति पदं चतुर्थ्यन्ततया व्याख्यातम्, भूतेभ्यश्चैतन्यं

भूतचैतन्यपक्षोऽपि च पुरा पराकृत एव । तस्मादस्ति नित्यः परलोके प्रमातेति । नित्यत्वे सति पूर्वदेहसंबन्धो भविष्यद्देहान्तरसम्बन्धश्चास्य न दुरुपपादः । शरीरान्तरसञ्चारस्तस्य नास्तीति यदुक्तं तद्युक्तमेव, व्यापिनः सर्वत्र विद्यमानस्यात्मनः कः सञ्चारार्थः ? व्यापित्व एव किं प्रमाणमिति 5 चेत् सर्वत्र कार्योपलम्भः प्रमाणम् । यतो वाराणसीमपि गतस्य मे भवत्येव स्मरणेच्छादिकार्ययोगः, स चात्मैकप्रभवः ।

आत्मनश्च शरीरस्येव न तत्र गमनम्, अमूर्तत्वात् । न शरीरगुणवत्, तदनाश्रितत्वात्। न प्राणादिवद् अन्तःशरीरवर्त्तित्वाभावात् । अन्तःशरीरवृत्तित्वे हि द्वयी गतिरेकदेशवृत्तित्वं सर्वशरीरमापूर्य वा । तत्र सर्वशरीरापूरकत्वे शरीर-10 परिमाणानुविषयत्वाद् बालशरीरयुवस्थविरशरीरवत् पूर्वनीत्या परिमाणान्यत्वेन तदन्यत्वात् पुनरपि प्रतिसन्धानादिकार्यवैधुर्यप्रसङ्गः । करिमशकशरीरयोगे च कर्मपरिणामोपनते तस्य सङ्कोचविकासौ प्राप्नुतः । तौ च नित्यस्य विरुध्येते । एकदेशवृत्तित्वे तु तदनधिष्ठितानामवयवानामनात्मकत्वान्मृत-शरीरावयववदयथेष्टविनियोज्यता कष्टीभावः स्यात् ।

15 प्रदीपवदेतद्देशवृत्तेरप्यात्मनः सकलशरीराधिष्ठातृत्वमिति चेत्, वर्त्ति-प्रदेशोपचिततेजःपिण्डवदेकत्र शरीरावयवे सविशेषचैतन्यसंवित्तिः स्यात् । अस्त्येव हृदयदेशे तदतिशय इति चेन्न, अनुपलम्भात् । दहनहिमकृपाणादि-स्पर्शे हि न हृदयस्य प्रदेशान्तरस्य वा शरीरवेदनाविशेषं पश्यामः । तस्मान्न हृत्पुण्डरीके यावदवस्थानमात्मनः । अत एव 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष 20 बलाद् यमः' इति व्यासवचनम् अनेवंपरमवगन्तव्यम् ।

---

भूतार्थं चैतन्यं स्वतन्त्रमेव शरीरारम्भकभूतोपकारकमित्यर्थः । **स्मरणेच्छादिकार्ययोग** इति । यथेह स्थितेन मया स्मरणेच्छादिकार्ययोगेनात्मास्तित्वं निश्चितम्, एवं वाराणस्या-मपि तस्य कार्यस्य दर्शनात् तत्राप्यात्मनो भावः कल्प्यः । **अङ्गुष्ठमात्रपुरुषमिति** । सावित्र्युपाख्याने श्लोकस्य पूर्वमर्धम् 'ततः सत्यवतः कायात् पाशबद्धं वशं गतम् ।' इति । 25 काष्ठभङ्गसञ्जातशिरोवेदनातिशयस्य सत्यवतः स्वाङ्के सुप्तस्य हृदयदेशादात्मानं निष्कर्षयन्तं यमं सा सावित्री सतीमाहात्म्याद् ददर्शेति । अत एवं परं सतीमाहात्म्येऽस्य

यदि तु मनोवदेकदेशवृत्तेरणुपरिमाणस्याशु सञ्चरतः शरीराधिष्ठातृत्वमात्मनः कथ्यते, तथापि सहसैव चिरप्रोषितगतागतदयितजनदर्शनोद्गतसकलशरीरव्यापिस्वेदरोमाञ्चादिदर्शनं विरुध्यते, न च द्वयोरण्वोरात्ममनसोः कर्तृकरणव्यवस्थापि निर्वहतीति, तस्मान्नाणुरात्मा ।

न च शरीरपरिमाण इति व्यापक एवावशिष्यते, तदेवं वाराणस्यामप्ययमात्मा विद्यत एवेति तत्र तत्र तत्कार्यदर्शनमवकल्पते नान्येन गमनादिप्रकारेणेति । 5

ननु सर्वत्र सुखदुःखज्ञानादिकार्यदर्शनात् सर्वप्राणिनामेक एवात्मा भवेत्, न सुखदुःखव्यवस्थादर्शनाद् बन्धमुक्तविभागोपपत्तेश्चात्मभेदस्य दर्शयिष्यमाणत्वात् । 10

व्यापिनः कथं कर्तृत्वमिति चेत्, ज्ञानचिकीर्षाप्रयत्नसमवाय एवास्य कर्तृत्वं न व्यापारयोग इति निर्णीतमेतत् ।

ननु व्यापिन्यात्मनि कथं शरीरबहिरण्वपि कार्यं न दृश्यते ? कर्माक्षिप्तशरीरेन्द्रियादिसहकारिसन्निधाननिबन्धनो हि तत्कार्योत्पादः, स कथं बहिर्भवेद् इति ।] 15

तस्मादनन्तरोक्तेन प्रक्रमेणोपपाद्यते ।
नित्यत्वाद् व्यापकत्वाच्च परलोकित्वमात्मनः ।।

## सूत्रकारमते पारलौकिकात्मप्रतिपादनम्

[सूत्रकारस्तु पारलौकिकत्वसिद्धये हेत्वन्तराणि प्रत्यपादयत् । सद्यो जातस्य बालस्य वदनविकासरोदनाद्यनुमितो हर्षशोकादियोगस्तावदस्ति । 20

---

तात्पर्यम् । कर्तृकरणव्यवस्थापीति । व्यापकस्य युगपत् सर्वविषयोपलब्धिप्रसङ्गे सूक्ष्मकरणापेक्षया तदाभावो वक्तुं युज्यते । द्वयोस्तु सूक्ष्मत्वे कर्तृकरणव्यवस्थानां किं नियामकमिति ।

ननु सर्वत्र सुखःदुखज्ञानादीति । सर्वप्राणिनां सर्वत्र सुखदुःखादिकार्यमुपलभ्यते तत्र सर्वव्यापी कल्प्यः, तेन च कल्पितेनैकेनैव कार्यसिद्धे नानात्वकल्पनायां किं प्रमाणमिति । 25

युवशरीरादौ रोदनादि शोकादिकारणकमवगतमिदमाननविकासादि- हर्षहेतुकमेवं शिशोरपि तन्निबन्धनस्तदुत्पादः । तौ च हर्षशोकौ सुखदुःख- साधनाधिगमतदनुस्मरणान्यतरकारणौ भवितुमर्हतस्तथा दृष्टत्वात् । इह चास्य न सुखदुःखसाधनपदार्थानुभवस्तदानीमस्तीति तदनुस्मरणमेव हर्ष- 5 शोकहेतुर्भवेत् । स्मरणमपि तदनुभवप्रभवम्, अनुभवश्चेह जन्मनि सद्यो जातस्य न समस्तीति जन्मान्तरानुभूतसुखदुःखसाधनानुस्मरणनिमित्तिक एवास्य हर्षशोकसमुत्पाद इति जन्मान्तरानुगमाद् नित्य आत्मा ।

**उक्तविषये शङ्कासमाधाने**

नन्वभिनवजीवलोकावलोकाह्लादनिबन्धन एवास्य मुखविकासस्तथा 10 योनिद्वारनिर्गमनोद्गतनिरर्गलक्लेशपीडितस्य रोदनमिति न जन्मान्तरानु- भूतस्मरणं कल्पयितुं युक्तमतिप्रसङ्गात् । मैवम्, सुखदुःखहेतुमीदृशमननुभव- तोऽप्यकस्मादेव हर्षशोकदर्शनात् ।

ननु कमलमुकुलविकासादिवत् स्वाभाविकमेव शिशोर्मुखविकाशादि- कार्यं स्यात् ? स्वाभाविकं नाम किमुच्यते, किमहेतुकम्, अविज्ञातहेतुकम्, 15 अनियतहेतुकं वा ? न तावदहेतुकं कार्यं सम्भवति कार्यत्वहानिप्रसङ्गात् । नाप्यविज्ञातहेतुकं तद्भावयितुं युक्तं कार्यमुपलभ्यत इति तद्धेतुपरिज्ञाने यततां भवान्, किमुदास्ते । न चासौ ज्ञातुमशक्यः, कार्यस्यैव तत्र ज्ञापकत्वात् । नाप्यनियतहेतुकं कार्यं किञ्चिदस्ति कार्योत्पादननियमेनैव हेतुनियमसिद्धेः, अत एव तत्कार्यमुपपादयितुकामास्तन्नियतमेव कारणमुपाददते लौकिकाः ।

20 यत्राप्यनियतो हेतुर्वृश्चिके गोमयादिकः ।
अभियुक्तास्तदत्रापि विशेषं न न मन्वते ॥

---

कल्पयितुं युक्तमतिप्रसङ्गादिति । दृष्टे हेतौ सम्भवति, अदृष्टकल्पनायां हि सर्वत्रैवंप्रसङ्ग इति ।

सुखदुःखमीदृशमिति । यादृशमभिनवजीवलोकावलोकनादिजमुक्तम् ।

25 कार्यत्वहानिप्रसङ्गादिति । कार्यं तदुच्यते यत् केनापि क्रियत इति ।

तदेवं कारणनियमोऽपि कार्यविशेषदर्शनाद् दुरुपह्नव इति मुख-विकासस्य हर्ष एव कारणमवगम्यते, सहस्रकृत्वस्तथा दर्शनात् । अचेतनानां तु तामरसादीनां विकासकारणं तरणिकिरणनिकरपरिष्वङ्गाद्युपलब्धम् इति तदपि न स्वाभाविकम् ।

तस्मान्मुखविकासस्य हर्षो हर्षस्य च स्मृतिः ।
स्मृतेरनुभवो हेतुः स च जन्मान्तरे शिशोः ॥

ननु शिशोर्जन्मान्तरानुभूतस्मरणे सर्वदा सर्वस्मरणप्रसङ्गः ? न । यावत् कार्यं कारणकल्पनान्न सर्वदा सर्वस्मरणं संवेद्यते । न च तत्कल्पनायां कारणमुपलभ्यते । न चैकदर्शनात् सर्वं कल्प्यम्, दृष्टमपि वा निह्नोतव्यमिति परीक्षकाणामुचित एव पन्था इत्यसकृदुक्तम् ।

अपि च पयसस्तृप्तिहेतुत्वमनुस्मरन् बालकः स्तन्याभिलाषेण मातुः स्तनतटे दृष्टिं निदधाति न चाद्य तेन तस्य तत्साधनत्वमवगतमिति जन्मान्तरे सम्बन्धग्रहणमस्य वृत्तमिति मन्यामहे ।

न चायस्कान्तदृष्टान्तसमाश्रयेण स्वाभाविकमेतद् बालकस्य कुचकलश-निमित्तोपसर्पणमिति वक्तुमुचितमनन्तरमेव निरस्तत्वात् ।

ननु च गर्भशय्याशायिनोऽप्यपरितोषदर्शनात् तत्साधनोपादाने तदनु-स्मरणमेव प्राप्नोति ? यदि कार्यमवगम्यते तत्रापि तत्कारणं कल्प्यतां को दोषः, तत्र तु जनयित्रीजठरपतितान्नपानपरिपाकसङ्क्रान्त्या तत्परिपोष-मायुर्वेदविदो वदन्तीति कथं तत्र स्मरणादिकल्पना ? कल्पनायां वा प्रथमं निषेकान्तरमेव कललादिशुक्रशोणितविकारसम्भवात्तद्दशास्वपि स्मरणकल्पना-प्रसङ्गः । न तावत् कल्पनायामपि काचिदस्माकं क्षतिः । अयन्तु स्तन्याभि-लाषेण कुचक्षीरकलशावलोकनोपसर्पणादरो दारकस्य तदनुस्मरणकृत एवेति सर्वथा जन्मान्तरसम्बन्धानुमानान्नित्य आत्मेति । अतश्चैवं 'वीतराग-

---

अनन्तरमेव निरस्तत्वादिति । अयस्यपि क्रियायाः सनिमित्तत्वम्, कार्यस्य निर्हेतुकत्वे कार्यत्वहानिप्रसङ्गादिति ।

"वीतरागजन्मादर्शनात्" इति न्यायसूत्रम् ।

जन्मादर्शनात्' रागादिवासनाभ्यासेन सुदृढप्ररूढेनानादिप्रबन्धप्रवृत्तेन परित्याज्यमानाः सरागा एव जन्तवो जायन्ते। न खलु लोके कश्चन तादृशो दृश्यते प्राणी यो जातो वीतरागश्चेतिं। स एष सरागो जायमानः पूर्वोपचितां रागादिवासनामनुसरतीति सिद्धो जन्मान्तरसम्बन्धः।

5 **जगद्वैचित्र्यमदृष्टकारणजन्यमित्यदृष्टसिद्धिः**

तथा च केचिज्जायन्ते लोभमात्रपरायणाः।
द्रव्यसङ्ग्रहणैकाग्रमनसो मूषिकादयः॥
मनोभवमयाः केचित् सन्ति पारावतादयः।
कूजत्प्रियतमाचञ्चुचुम्बनासक्तचेतसः॥
10 केचित् क्रोधप्रधानाश्च भवन्ति भुजगादयः।
ज्वलद्विषानलज्वालाजालपल्लवितानना:॥
जगतो यच्च वैचित्र्यं सुखदुःखादिभेदतः।
कृषिसेवादिसाम्येऽपि विलक्षणफलोदयः॥
अकस्मान्निधिलाभश्च विद्युत्पातश्च कस्यचित्।
15 क्वचित् फलमयत्नेऽपि यत्नेऽप्यफलता क्वचित्॥
तदेतद् दुर्घटं दृष्टात् कारणाद् व्यभिचारिणः।
तेनादृष्टमुपेतव्यमस्य किञ्चन कारणम्॥
अदृश्यो भूतधर्मस्तु जगद्वैचित्र्यकारणम्।
यदि कश्चिदुपेयेत को दोषः कर्मकल्पने॥
20 संज्ञामात्रे विवादश्च तथा सत्यावयोर्भवेत्।
भूतवद्भूतधर्मस्य न चादृश्यत्वसम्भवः॥
दृष्टश्च साध्वीसुतयोर्यमयोस्तुल्यजन्मनोः।
विशेषो वीर्यविज्ञानसौभाग्यारोग्यसम्पदाम्॥

---

**ज्वालाजालपल्लवितानना** इति। ज्वालाजालेन पल्लवितानि संजातानि पल्लवा-
25 नीवाननानि येषाम्। **अदृश्यो भूतधर्मस्त्वि**ति। यथा उद्भटेन उक्तम्, "शरीरारम्भककारणानामेव भूतानां स कश्चित् तादृशो विचित्रसुखदुःखोपभोगदो धर्मः स्वभावविशेष इत्यर्थः"। **दृष्टश्च साध्वीसुतयो**रिति। अनेनैव स्वमातृगतं वैगुण्यं निरस्यति।

स्वाभाविकत्वं कार्याणामधुनैव निराकृतम् ।
तस्मात् कर्मभ्य एवैष विचित्रजगदुद्भवः ।।
कर्मणां यदि वैचित्र्यं कर्मान्तरकृतं यदि ।
अनिष्टं तत् स्वतः सिद्धं जगत्येव तदिष्यताम् ।।
कर्मणां शास्त्रतो ज्ञाता विचित्रफलशक्तता । 5
दृष्टार्थेषु च वाक्येषु दृष्टा प्रत्यक्षतोऽपि सा ।।
तस्माद् दृष्टस्य कार्यस्य युक्ता कारणकल्पना ।
कारणस्य त्वदृष्टत्वात् किं हेत्वन्तरचिन्तया ।।
हेत्वन्तरनिमित्तेऽपि कर्मवैचित्र्यकल्पने ।
संसारस्य त्वनादित्वान्नानवस्था भयावहा ।। 10
तथा च पुण्यः पुण्येन पापः पापेन कर्मणा ।
जायते जन्तुरित्येवं धर्मशास्त्रेषु पठ्यते ।।

तथा च गौतमः "पुण्यः पुण्येन कर्मणा भवति पापः पापेन" इति ।

तस्मात् कुतर्कमूलेन दृष्टकार्योपघातिना ।
सर्वलोकविरुद्धेन चोद्येन कृतमीदृशा ।। 15
तस्मात् कल्प्यानि कर्माणि दृष्टकार्योपपत्तये ।
एवञ्च क्षणभङ्गित्वात् संस्कारद्वारिका स्थितिः ।।
स कर्मजन्यसंस्कारो धर्माधर्मगिरोच्यते ।
विना च नित्यमात्मानं क्व धर्माधर्मयोः स्थितिः ।।

---

**कर्मणा ननु वैचित्र्यमिति** । प्राणिनां विचित्रसुखदुःखादिकार्यदर्शनाद् यद् एतत् कर्म- 20
वैचित्र्यमनुमीयते तत् किं स्वाभाविकम् आहोस्वित् फलवैचित्र्यवद् हेत्वन्तरजम् ? किं
स्वभावत एव तादृशविचित्रकर्मसम्पादनं तस्य वृत्तमुत कर्मान्तरप्रयुक्तस्येत्यर्थः । स्वाभा-
विकत्वे फलवैचित्र्यमपि स्वाभाविकमस्तु, हेत्वन्तरजत्वेऽनवस्था, तद्धेतूनामपि तथा-
विचित्रकर्मजनकत्वस्य हेत्वन्तरजनितत्वादिति । **कर्मणां शास्त्रतो ज्ञातेति** । अग्निहोत्रा-
दिकर्मणां शास्त्रतः फलशक्तियोगितां ज्ञात्वा फलार्थी तेषु प्रवर्तते, न पुनः कर्मान्तरं 25
तत्प्रवृत्तौ कारणमित्यर्थः । **दृष्टार्थेषु** हरीतकीभक्षणादिषु । **हेत्वन्तरनिमित्तेऽपि** कर्मान्तर-
कृतकर्मवैचित्र्ये । **पुण्यः** पुण्यकर्मकारी ।

नित्यस्तस्माद् भवति पुरुषः स्वप्रणीतानुगच्छद्
धर्माधर्मक्रमपरिणतानन्ततापोपभोगः ।
प्रामाण्यञ्च स्फुटमभिहितं पूर्वमेवागमानां
तेभ्योऽप्यात्मा जननिधनातीततत्त्वः प्रसिद्धः ॥

5 यद्विज्ञानघनादिवेदवचनं तत् पूर्वपक्षे स्थितं
पौर्वापर्यविमर्शशून्यहृदयैः सोऽर्थो गृहीतस्तदा ।
मैत्रेय्या परिचोदितस्तु भगवान् यद् याज्ञवल्क्योऽब्रवी-
दात्मा नैव विनश्यतीति तदिदं सिद्धान्तसारं वचः ॥

तेनात्मनित्यत्वसमर्थनेन सुस्पष्टसिद्धः परलोकमार्गः ।
10 य एव देहान्तरसङ्गमोऽस्य तमेव तज्ज्ञाः परलोकमाहुः ॥

इति कवलने मांस्पाकानां परस्वपरिग्रहे
कितवजनतागोष्ठ्यां वेश्यामुखाम्बुजचुम्बने ।
रतमतिरभूद् धूर्तो मत्वा भवान्तरनास्तितां
तदयमधुना तत्संसिद्धेरहो बत दूयते ॥

15 तस्मान्नित्योऽयमात्मा न च कलुषफलस्तस्य नैसर्गिकोऽयं
रागद्वेषादियोगोऽपि तु सकलगुणापोढमेवास्य रूपम् ।
तेनानादिप्रबन्धोपचितपरिणमत् कर्मपाकोपनीतं
दुःखं सन्त्यज्य निःश्रेयसमखिलभयातीतमाप्तुं यतेत ॥

**इति श्रीभट्टजयन्तकृतौ न्यायमञ्जर्यां**
20 **सप्तममाह्निकम्**

---

**स्वप्रणीतानुगच्छद्धर्माधर्मेति**। स्वप्रणीतौ स्वकृतौ अनुगच्छन्तौ अनुवर्तमानौ यौ धर्माधर्मौ ताभ्यां क्रमेण परिणते अनन्ततापाय ये सुखदुःखे तयोरुपभोगो यस्य। **मैत्रेय्या परिचोदित** इति। मैत्रेय्या भार्ययेति। पूर्वपक्षत्वेन 'विज्ञानघन एवायम्' इत्यागमस्य ग्रहणम्। **आत्मा नैव विनश्यति** इति। "अविनाशी वा अरे अयमात्मा 25 अशीर्यो न हि शीर्यते" इत्याद्युक्तम्। **सिद्धान्तसारं** सिद्धान्ततात्पर्यम्। **इति कवलने मांस्पाकानामिति**। मांसस्य पाकः मांस्पाक इति। "पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानम्' इति अकारलोपः। **कितवजनतागोष्ठ्यां** कितवजनसमूहगोष्ठ्याम्। अस्मिन्नस्मिन् पदार्थे रता मतिर्यस्येति। श्रेयस् ॥

भट्टश्रीशङ्करात्मजचक्रधरकृते न्यायमञ्जरीग्रन्थिभङ्गे सप्तममाह्निकम्

# अष्टमाह्निकम्

## शरीरसामान्यलक्षणम्

आत्मानन्तरं विभागसूत्रे शरीरनिर्देशात् तदनुक्रमेण तत्स्वरूपनिरूपणार्थमाह

**चेष्टेन्द्रियार्थाश्रयः शरीरम् ।**

शरीरस्य यल्लक्षणं येन च रूपेण भाव्यमानस्यापवर्गोपयोगिता तदुभयमपि प्रतिपाद्यते । तत्र शरीरत्वमेव तावत् प्रथमं शरीरस्य लक्षणं तेन हि समानासमानजातीयेभ्यस्तद् व्यवच्छिद्यते, तस्मिन् सत्यपि चेष्टेन्द्रियार्थाश्रयत्वं यदस्य लक्षणमुच्यते तत् तेन रूपेणात्मनो भोगायतनं शरीरमिति ज्ञापयितुम् । चेष्टेन्द्रियार्थाश्रयतया हि शरीरमात्मनो भोगायतनं भवति । मुमुक्षुणा च सुखदुःखोपभोगरहितात्मतत्त्वस्वभावनिःश्रेयसाधिगमविनिहितमनसा तथा भोगाधिष्ठानतया शरीरं भावयता तत्परिहरणे यत्नः कार्य इत्याचार्यश्चेष्टेन्द्रियार्थाश्रयत्वमस्य लक्षणमुक्तवान् ।

## शरीरस्य चेष्टाश्रयत्वे शङ्कासमाधाने

ननु चेष्टा क्रिया, क्रियाश्रयत्वे च सत्यपि न वृक्षादीनां शरीरत्वमित्यतिव्यापकं लक्षणम् ? न । विशिष्टचेष्टाश्रयत्वस्य विशिष्टप्रमेयलक्षणप्रक्रमतोऽवसीयमानत्वात्, हिताहितप्राप्तिपरिहारयोग्यव्यापाराधिकरणं शरीरमुच्यते न चेष्टामात्रस्याधिष्ठानम् । रथादिनापि नातिव्याप्तिर्यथोक्तप्रक्रमवशादेवान्येन प्रेरणायामसत्यामिति विशेषलाभात् । आत्मप्रयत्नातिरिक्तप्रेरकनिरपेक्षहिताहितोपादानपरित्यागोपाधिकचेष्टाविशेषाश्रयः शरीरमित्यर्थः । ननु पाषाणा-

---

**विशिष्टप्रमेयप्रक्रम** इति । चेष्टामात्राश्रयत्वं वृक्षादीनामप्यस्ति । न च तेषां लक्षणमिह प्रस्तुतम्, मुमुक्षोस्तत्परिज्ञाने प्रयोजनाभावात् । **आत्मप्रयत्नातिरिक्तप्रेरकनिरपेक्षेति** । रथादि हि प्रयत्नातिरिक्तेन शरीरादिना प्रेर्यते, इदन्तु आत्मप्रयत्नेनैव ।

न्तर्गतमण्डूकादिशरीरेषु तदाश्रयत्वादर्शनादव्याप्तिः ? न, योग्यतायास्तत्रापि भावात् । सत्यामपि क्रियायोग्यतायां सर्वतो निर्विवरनिचितदृषत्कर्परोपरुद्धावकाशतया चलितुमसौ न प्रभवति भेको वराकः, तथा च स्फुटिते तस्मिन्नेवाश्मनि तत्क्षणमेवासौ चलन् दृश्यत इति निबिडपाशसंयतशरीरवत् तदानीं चेष्टाया अदर्शनेऽपि नाव्याप्तिः ।

### मुमुक्षूणां शरीरमेवात्र लक्ष्यभूतमिति मतनिरसनम्

मुमुक्षुशरीरमेव लक्ष्यमित्येके, तेन न मण्डूकशरीरादिभिरव्याप्तिरलक्षणीयत्वात् तेषामिति, तदयुक्तम् । नियतस्य मुमुक्षूणां शरीरस्याभावात्, तादृंशि च भेकादिशरीराणि नितरां निर्वेदकारीणि भवन्ति । मुमुक्षुरपि च कर्मविपाकमनेकप्रकारमाकलयन् मण्डूकीभावमात्मनोऽपि न शङ्कते । प्रत्यासन्नापवर्गपुरप्रवेशं विपश्चित्तममपश्चिमजन्मानं मुमुक्षुं प्रति लक्षणाद्युपदेश एव क्वोपयुज्यते, इत्यतः पूर्वोक्त एवाव्याप्तिपरिहारः श्रेयान् ।

### शरीरस्येन्द्रियाश्रयत्वे शङ्कासमाधाने

भवत्वेवं चेष्टाश्रयत्वं शरीरलक्षणम्, इन्द्रियाश्रयत्वन्तु कथम् ? भौतिकानि हीन्द्रियाणि स्वावयवसमाश्रितानि, घ्राणनयनस्पर्शनरसनानि, श्रोत्रमनसी तु नित्यद्रव्यत्वादनाश्रित एवेति कथमिन्द्रियाश्रयता शरीरस्येति ।

उच्यते । नात्राधाराधेयभाव आश्रयार्थः, किन्तु तदनुग्राह्यत्वात् तदाश्रितानीन्द्रियाण्युच्यन्ते, देशकालदशानुकूलपथ्यभोजनाभ्यङ्गव्यायाममर्दनाभ्युपचारोपचितशरीरस्य हि पुंसः पटुतराणि स्वविषयपुरन्ध्रिग्रहणे भवन्तीन्द्रियाणि दीर्घाध्वलङ्घनकदशनशुष्कजरत्सचन्द्र(?)सेवनादिक्लिष्टशरीरस्य हि पुंसो मन्दशक्तीनि भवन्तीति तदनुग्राहकत्वादिन्द्रियाणमाश्रयः शरीरम् ।

अर्थानान्तु रूपरसगन्धादीनां केषाञ्चिदाश्रयः शरीरं भवत्येव तत्समवायिनाम्, न तु तावता किञ्चिद् भोगायतनत्वोपयोगि रूपमभिहितं भवति ।

---

नियतस्य मुमुक्षुशरीरस्याभावात् कर्मविपाकवशात् कदाचिद् मण्डूकादिशरीरोऽप्यसौ भवेदित्यर्थः ।

लक्षणमपि तदतिव्यापकम्, रूपरसादिसमवायस्य वृक्षादावपि भावात् । तस्मात् तदर्थाश्रयत्वमीदृशमत्र विवक्षितम्, यदेते वरवनितादिशरीरवर्तिनः, प्रविकच-मुचुकुन्दकुन्दकन्दलकमलादिबाह्यविषयसमवायिनश्च रूपरसादयोऽर्था रमणीय-तामादधाना रागवृद्धिहेतवो भवन्ति भोक्तुरात्मनः शरीरे सति, न शरीर-रहितस्य, इत्यर्थानां भोगसाधनभावादाश्रयः शरीरमतः सूष्ठूक्तं चेष्टेन्द्रियार्था- 5
श्रयः शरीरमिति । तदित्थं भोगायतनत्वेन बन्धहेतुत्वाद्धेयमित्यर्थः ।

**शरीरपरीक्षाप्रयोजनवर्णनम्**

तदिदानीमस्मदादिशरीरं, किं पार्थिवमेव, किं वा नानाभूतनिर्मितमिति परीक्ष्यते । ननु किमनया परीक्षया प्रयोजनम् ?

निःश्रेयसोपयोगो हि यः शरीरस्य दर्शितः । 10
नानैकप्रकृतित्वे हि न स तस्य विशिष्यते ॥

मैवं वोचः,

प्रतिपन्नस्वरूपस्य चिन्त्याकारोपयोगिता ।
कार्यः कार्यार्थिनाप्यादौ यत्नस्तद्रूपनिर्णये ॥

तथा चेन्द्रियाणि भौतिकत्वाहङ्कारिकत्वविवेकेन परीक्षिष्यन्ते । अर्था 15
अपि कति किंगुणा इति । बुद्धिरपि किं प्रधानस्य प्रथमो विकारो महच्छब्द-वाच्य उतात्मन एव धर्मो ज्ञानाख्यः क्षणिक इत्येवं द्रष्टव्यम् ।

**तत्र विप्रतिपत्तयः**

तत्र पार्थिवमेवास्मदादिशरीरमिति केचित्, साधारणो हि धरणिधर्मो गन्धस्तस्मिन्नुपलभ्यत इति । 20

पृथिव्युदककारणमित्यन्ये, क्लेदस्यापि तस्मिन् दर्शनात्, असति हि सलिलसंसर्गे न पार्थिवाः क्लेदमनुभवन्तीति ।

क्षितिजलज्वलनजनितमित्यपरे, गन्धक्लेदवदूष्मणोऽपि तत्रोपलम्भा-दिति ।

वसुमतीसलिलसितेतरसरणिसमीरणरचितमिति चान्ये, रचनाविशेषस्य 25

---

सितेतरसरणिः अग्निः ।

पवनकार्यस्य तत्रावधारणादिति ।

अवनिवनदहनपवनगगनविनिर्मितमिति चापरे, गन्धादिवदवकाशस्याप्याकाशकार्यस्य तत्र दर्शनात् । सुषिरं हि शरीरमुपलभ्यते अवकाशे चाकाशैकदेशेऽप्यवच्छेदाभिप्रायेण श्रोत्रवद् भक्त्या तत्कार्यत्वव्यपदेश
5 इति ।

**पार्थिवमेव शरीरम्**

तदत्र किं तत्त्वम् ? पार्थिवमेवास्मदादिशरीरमिति, विजातीयकार्यस्यावयविनोऽनुपपत्तेः, पार्थिवावयवसमवेतशरीरावयवग्राहिणश्चाभेदप्रत्ययस्य तृणपर्णपाषाणमूलकाद्यभेदप्रत्ययवदपवादासम्भवात् । न च वयमिह भूतान्तराणां
10 कारणभावनिषेधं विद्मः, केवलपार्थिवतया निर्विवादसिद्धेऽपि कुम्भादावम्भःप्रभृतीनां कारणत्वानपायात् तद्व्यतिरेकेण घटादेर्घटयितुमशक्यत्वात् । किन्तु घट इव शरीरेऽपि समवायिकारणतां पृथिव्यवयवानामेवाचक्ष्महे तदाश्रितत्वस्यास्य प्रत्यक्षेण ग्रहात् सहकारिकारणत्वानुप्रविष्टभूतान्तरसम्बन्धनिबन्धनस्ततः सिद्धः क्लेदोष्मव्यूहावकाशसम्प्रत्ययः, तत्पथागमपठितेषु वरुणलोकादौ
15 केवलजलादिजन्येषु सहकारित्वानुप्रविष्टपार्थिवावयवावष्टम्भवशेन स्थैर्याद्युपलम्भ इति । तस्मादस्मदादिशरीरं पार्थिवम् ।

वेदे च तथैव व्यवहारो दृश्यते, अग्नीषोमीयादिपशोः प्रलयकाले, यजमानस्य वा प्रेतस्य पात्रचयनकर्मणि 'सूर्यं चक्षुर्गमयतात्' इत्याद्युपक्रम्य 'पृथिवीं ते शरीरम्' इति पठ्यते, तच्च प्रकृतिगामित्ववचनम्, यद् यतः
20 प्रकृतेरुत्थितं तत् तस्यामेवास्य लीयतामित्यर्थः । तत्र यथा तैजसं चक्षुरिति सूर्याख्ये तेजसि उद्गमनमुपदिष्टमेवं पृथिव्यां शरीरस्येति । तस्मात् पृथिव्यवयवैरयमस्मदादिदेहो निबद्ध इति नात्र सतां विवादः ।

---

**अवच्छेदाभिप्रायेणेति ।** विशिष्टरचनावच्छिन्न आकाशदेश एवाकाशकार्यत्वेनोपचर्यते ।

25 **तच्च प्रकृतिगामित्ववचनमिति ।** 'सूर्यं ते चक्षुर्गमयतात्' इत्यादिकम् ।

**क्रमप्राप्तमिन्द्रियपरीक्षणम्**

**घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ।**

अत्रेन्द्रियाणां विषयोपलब्धिकारणत्वं सामान्यलक्षणं प्रसिद्धमेव । विभागोऽपि पञ्चबाह्येन्द्रियाणां त्वेष सूत्रित एव । स चानन्तरमेव तीर्थान्तरकथितकर्मेन्द्रियनिषेधात् साधयिष्यते । 5

विशेषलक्षणानि तु पञ्चानां पञ्चसमाख्यानिर्वचनसामर्थ्यात् प्रमाणवदवगन्तव्यानि । जिघ्रत्यनेनेति घ्राणम्, घ्रेयं गृह्णातीति गन्धोपलब्धावसाधारणं करणं घ्राणम् । चक्षुरीक्षणं लोचनं तदुच्यते । स्पृशत्यनेन स्पर्शनम्, स्पर्शं गृह्णातीति स्पर्शोपलब्धावसाधारणं करणं स्पर्शनम् । स्पर्शनमिति वक्तव्ये त्वग्ग्रहणमुपचारात्, मञ्चाः क्रोशन्तीति तदधिष्ठानत्वं दर्शयितुम् । यथा त्रिपुटिकाधिष्ठानं घ्राणम्, जिह्वाधिष्ठानं रसनम्, गोलकाधिष्ठानं चक्षुः, तथा सकलत्वगधिष्ठानं स्पर्शनम्, शिरःप्रभृत्यापादाङ्गुष्ठं स्पर्शोपलम्भात् । त्वगिति च न बाह्यमेव चर्म केवलमुच्यते अपि तु सकलशरीरव्यापि, तुहिनकणशिशिरसलिलपानसमयेऽन्तर्हृदयेऽपि शीतस्पर्शोपलम्भादिति । स्वावयवसमवायित्वे चेन्द्रियाणां त्रिपुटिकाद्याश्रयत्वमाश्रयमात्रापेक्षयोच्यते, न समवायित्वादिति । शृणोत्यनेनेति श्रोत्रम्, शब्दं गृह्णातीति शब्दोपलब्धावसाधारणं करणं श्रोत्रम् । तच्चाकाशैकदेशत्वादनाश्रितमपि कर्णशष्कुल्यधिष्ठानमुच्यते । 10 15

तदेवं विशेषलक्षणानि पञ्च पञ्चानामुक्तानि भवन्ति, तानीमानीन्द्रियाणि स्वविषयग्रहणलक्षणान्यात्मनो भोगसाधनत्वात् संसारकारणानीति हेयतया भावयितव्यानि, तथा भाव्यमानानि निर्वेदोत्पादनादिद्वारेणापवर्गाय कल्पिष्यन्त इति । 20

**इन्द्रियाणां भौतिकत्वम्**

भूतेभ्य इति किमर्थम् ? उक्तं हीन्द्रियाणां स्वविषयग्रहणं भूतप्रकृतित्वे सति निर्वहति नान्यथेति तद्विनिश्चयार्थम्, यथाप्तोपदेशः शब्द इत्याप्तग्रहणम् । विषयोपलब्धिलक्षणत्वं हीन्द्रियाणां भूतप्रकृतित्वे सति निर्वहति नान्यथेति, तानि पुनरिन्द्रियकारणानि पृथिव्यापस्तेजो वायुराकाशमिति भूतानि । भूतेभ्यः 25

पञ्चभ्यो यथासङ्ख्यं घ्राणरसनचक्षुस्त्वक्श्रोत्राणि पञ्चेन्द्रियाणि भवन्ति । भूतप्रकृतित्वमिति भूतस्वभावत्वम्, भूतकारणकत्वन्त्वन्येषु चतुर्ष्वपि तथैव, श्रोत्रे तु कथञ्चित् कर्णशष्कुल्यवच्छिन्ननभोभागाभिप्रायेण व्यवहारतः समर्थनीयम् । एवं भौतिकानीन्द्रियाणि स्वं स्वं विषयमधिगन्तुमुत्सहन्त इति 5 तल्लक्षणत्वमेषां सिध्यतीति । अतो भूतेभ्य इत्युक्तम् ।

**इन्द्रियाणां भौतिकत्वे विषयग्रहणासम्भव इति सांख्यमतम्**

तत्रैतत् परीक्षणीयं वर्तते किं भौतिकानामिन्द्रियाणां स्वविषयग्रहणकरणत्वमुतान्यथेति । एवं हि साङ्ख्याः सम्प्रवदन्ते आहङ्कारिकाणीन्द्रियाण्यर्थं साधयितुमर्हन्ति, नान्यथा । तथा हि कारकं कारकत्वादेव प्राप्यकारि भवति, 10 भौतिकानि चेन्द्रियाणि कथं प्राप्यकारीणि दूरवर्तिनि विषये भवेयुः ? आहङ्कारिकाणान्तु तेषां व्यापकत्वाद् विषयाकारपरिणामात्मिका वृत्तिर्वृत्तिमतो नान्या सती सम्भवत्येवेति सुवचं प्राप्यकारित्वम् । अपि च महदणुग्रहणमाहङ्कारिकत्वे तेषां कल्पते न भौतिकत्वे, भौतिकत्वे हि यत्परिमाणं ग्रहणं तत्परिमाणंग्राह्यं गृह्णीयात् । अस्ति च गोलकादधिकपरिमाणस्य पटपिठरादेर्ग्रहणं 15 हीनपरिमाणस्य च वटधानादेरतोऽपि न भौतिकानीन्द्रियाणि । भौतिकानामपि दीपादीनां परं प्रकाशयतां स्वात्मप्रकाशकत्वमपि दृष्टम् । एवमिन्द्रियाण्यपि पटादिरूपं प्रकाशयन्ति स्वरूपमपि न प्रकाशयन्तीत्यतोऽपि न भौतिकानि ।

---

**कर्णशष्कुल्यवच्छिन्ननभोभागाभिप्रायेणे**ति । श्रोत्रशब्दं यतः प्रयुञ्जते व्यवहर्तारोऽतः श्रोत्रव्यवहारे नभोनिमित्तत्वाच्छ्रोत्रस्यापि भौतिकत्वम् । **व्यवहारतः समर्थनीयम्,** 20 तन्निमित्तत्वाद् व्यवहारस्य व्यवहारद्वारेण समर्थनीयमित्यर्थः ।

**आहङ्कारिकाणीन्द्रियाणी**ति । यथा घटादयो मृद्विशेषाद् एकस्माद् मृत्तत्त्वादुत्पन्ना इति निश्चीयन्ते तथा प्रकाशविशेषाच्चक्षुरादय एकस्मात् प्रकाशविशेषादुत्पद्यन्ते । योऽसौ च प्रकाशविशेषः सोऽहङ्कारः । **तेषां तु व्यापकत्वा**दिति । व्यापकत्वं त्वहङ्कारस्य, तत्कार्याणामिन्द्रियाणां सर्वत्र सद्भावश्च, तेषां तद्वृत्तीनां सर्वत्रापि भावः । इन्द्रियाणा- 25 मव्यापकत्वमिति चेत् तदाह **वृत्तिर्वृत्तिमतो नान्ये**ति । यतोऽनन्यत्वमतो विषयदेशेऽपि तेषां भावात् तदाकारनिर्भासवृत्त्युदयः ।

## भौतिकान्यपीन्द्रियाणि प्राप्यकारीणि

अत्राभिधीयते, यत् तावत् प्राप्यकारित्वं भौतिकत्वपक्षे नावकल्पत इति जल्पितवानसि, तन्मन्ये त्वया गोलकमेव चक्षुरिति चेतसि गृहीतम्, अन्यथा कथमित्थमकथयिष्यः, स चायम् आयुष्मतो महान् भ्रमः। न खलु कृष्णसारं चक्षुस्तदधिकरणन्तु तेजश्चक्षुः, तच्च वेगवद्द्रव्यत्वाद् दूरमपि प्रसरतीति कोऽस्य प्राप्यकारितायां प्रमादः ? 5

ननु च गोलके चिकित्सादिप्रयोगाद् गोलकगुणदोषानुवर्तित्वाच्च विषयोपलब्धेर्गोलकमेव चक्षुः स्यात्, अनुपलभ्यमानञ्च तेजः कथमिन्द्रियमुच्यते, कथञ्च तेजसा वेगवतापि सहसैव विस्फारिते चक्षुषि योजनशतसहस्रव्यवहितसितकरतरणितारकादि ग्रहीतुं शक्येत। कथं वा तदल्पकं वराकं नायनं तेजः समन्ततः प्रसरता सकलभुवनप्रथितप्रभावेण महीयसापि मिहिरमहसा न प्रतिहतगति भवेदभ्यक्षमिति भास्करदर्शनमित्थं न सम्पद्येत ? तेजःपक्षे च काचाभ्रकपटबालस्फटिकान्तरितपदार्थोपलब्धिः कथं समर्थ्येत ? तत्प्रतिबद्धं हि तेजः कथं प्रतिष्ठेतेति। तद्वरं शक्तिविशेषयुक्तं गोलकमेव साधो ! चक्षुरभ्युपगच्छेति। 10 15

उच्यते। न खलु भवदनुशासनेन युक्तिविरुद्धपक्षमभ्युपगच्छामः। प्राप्यकारि हि कारकं दृष्टं कृष्णसारपक्षे च कुतः प्राप्यकारित्वम् ? शक्तिरपि कल्प्यमाना निराश्रया न परिकल्पनीयैवेति तदाश्रयचिन्तायां न गोलकमात्रमाश्रयोक्तेराश्रयो भवेत्।

## न सर्वेषामिन्द्रियाणां प्राप्यकारित्वम् इति शङ्का तत्समाधानञ्च 20

ननु च प्राप्यकारित्वमेव चिन्त्यं वर्तते, तद्धि रसनस्पर्शनयोः केवलमवलोक्यते लोके, चक्षुःश्रोत्रे तु दूरदेशव्यवस्थितविषयग्राहिणी कथं प्राप्यकारिणी स्याताम्। घ्राणे तु त्रिपुटिकानिकटनिहितपदार्थगन्धमपि गृह्णाति दूरतोऽपि च प्रचलदनिलबलवेल्लितफुल्लमल्लिकादिसौरभमुपलभते। त्रिपुटिकोपकण्ठढौकितेनापि द्रव्येण न तस्य सन्निकर्ष इति तदप्यप्राप्यकार्येव। 25

ननु गोलके चिकित्सादिप्रयोगादित्यादि बौद्धः प्रत्यवतिष्ठते।

तस्माच्छक्तिविशेषणमधिष्ठानमेव तत्तदिन्द्रियमिति गृह्यताम्, उत्सृज्यतां प्राप्यकारित्वपक्षः। चक्षुषि च चन्द्रार्कग्रहादिग्राहिणि नतरां प्राप्यकारित्वमित्युक्तमेव।

अत्रोच्यते। न प्राप्यकारित्वमुत्स्रष्टुं शक्नुमः, कारकत्वमेव हि तथा सत्येषामुत्सृजेम, कारकञ्चाप्राप्यकारि चेति चित्रम्। अदृष्टमपि कारणमात्मनो व्यापकत्वात् तद्वृत्ति धर्मादिकं न प्राप्यकारि भवेत्, किमुत दृष्टं चक्षुरादि कारकमिति। अप्राप्यकारित्वे च शक्तेरविशेषात् कुड्यादिव्यवहितमपि वस्तु चक्षुषा दृश्येत। तत्र कार्यानुपलम्भान्न शक्तिः कल्प्यत इति चेत्, किं शक्तिः कल्प्यतां किं तेज इति सम्प्रधारणायां तेजसो द्रव्यत्वाद् व्यवधानाद्यनुगुणममूर्तायास्तु शक्तेर्व्यवधानमबाधकं भवेदिति तेज एवेन्द्रियं कल्पनीयं न शक्तिः शक्तिमदधिष्ठानं वा। प्राप्यकारिता च श्रोत्रस्य तावद् देशसन्तानसदृशशब्दपरम्परारम्भणद्वारेण दर्शिता शब्दाधिकरणे। घ्राणस्यापि समीरणान्दोलितकुन्दलतादिप्रसृततत्परमाणुनिकराधिकरणगन्धग्रहणात् प्राप्यकारिता।

न च परमाणूपसर्पणाद् द्रव्यपरिक्षयाद्याशङ्कनीयम्, भूयस्त्वात् परमाणूनाम्। अत एव गन्धद्वारकतद्द्रव्यसम्पर्कदोषनिर्हरणाय प्रायश्चित्तमशुचिद्रव्यघ्राणे समामनन्ति। चक्षुषस्तेजःप्रसरणात् प्राप्यकारिता, अनुपलभ्यमानं तेज इति चेत्, किं चन्द्रमसः परभाग उपलभ्यते पृथिव्याश्चाधोभागः? न खलु प्रत्यक्षैकशरणाः पदार्थाः, अनुमानादिभिरेषामुपलम्भः सम्भवत्येव। उक्तञ्चानुमानं रूपोपलब्धिकार्येण तैजसमेव चक्षुरनुमीयते, तेजोद्रव्यं हि दीपादि रूपस्य प्रकाशकं दृष्टमिति।

### चक्षुषस्तैजसत्वे प्रत्यक्षत्वापत्तिनिरासः

प्रत्यक्षेण तु नायनं तेजः किमिति नोपलभ्यत इति, तदुच्यते, विचित्रा हि द्रव्यगुणानामुद्भवाभिभवादिवशेन गतयो भवन्ति। तद् यथा, सर्वतः प्रसरता

---

**प्रायश्चित्तमशुचिद्रव्यघ्राण इति। तथा च पठन्ति।**

**अनृतं मद्यगन्धञ्च दिवामैथुनमेव च।**
**भुनक्ति वृषलस्यान्नं बहिःसन्ध्याम् उपासीत॥ इत्यादि।**

धवलबहलेन शीतस्पर्शाश्रयेण द्रव्येण व्याप्तौ हेमन्तशिशिरौ ऋतू भवतः, निराधारस्य शीतस्पर्शगुणस्यानुपपत्तेः ।

अथ सत्यपि तत्र सलिलद्रव्ये तद्गुणस्य शीतस्पर्शस्यैवोपलब्धिर्न शुक्लरूपस्येति । तेजोद्रव्येण च निरर्गलं विजृम्भमाणेन भूयसा ग्रीष्मो भवति । तत्र सत्यपि तेजोद्रव्ये तद्गुणस्योष्णस्पर्शस्यैव ग्रहणं न भास्वररूपस्येति । 5
भास्वरञ्च कार्तस्वरादौ तैजसद्रव्ये रूपमुपलभ्यते नोष्णस्पर्शः । उदकान्तर्गते च तेजसि ज्वलनतप्ते जले ज्वलनगुण उष्णस्पर्शोऽनुभूयते, न भास्वरं रूपमिति । एवमिह नयनरश्मौ तैजसे द्रव्ये द्वावपि रूपस्पर्शौ नोपलभ्येते इति कमुपालभेमहि । उक्तञ्च 'दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः, प्रमाणस्य तत्त्वविषयत्वात्' इति । न च सर्वत्र नयनरश्मेरनुपलम्भः । क्वचिद्धि 10
वृषदंशप्रभृतीनां नक्तञ्चराणां निशि निबिडतमतमःपङ्कपटलावलिप्ते वेश्मनि सञ्चरतां चाक्षुषं तेजोभास्वरं रूपं दूरमपि प्रसरदुपलभ्यत एव । अन्यत्र तु मध्यन्दिनोल्काप्रकाशवदग्रहणमस्मदादिनयनरश्मेः । अयन्तु विशेषः उल्कारूपस्य दिवा दिवाकरकरविभवाभिभूतत्वादग्रहणं नयनरश्मिरूपस्य त्वनुद्भूतत्वादेवेति । 15

**काचादिव्यवहितदर्शित्वेऽपि चक्षुषः प्राप्यकारित्वमेव**

यत्तु काचाभ्रपटलस्फटिकान्तरितपदार्थोपलम्भनम्, तत्र काचादीनां केषाञ्चिदतिस्वच्छत्वात् केषाञ्चिच्च ससुषिरत्वाच्चाक्षुषतेजःप्रसरनिरोधकौशलं नास्तीति प्राप्यकारित्वं चक्षुषस्तावता भवति ।

यत्तु कुतो नयनरश्मेरियती गतिर्गगनमाक्रम्य यद्गभस्तिमालिनं स्पृशति, 20
न प्रतिहन्यते च सावित्रेण वेगवता तेजसेति, उक्तमत्र दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिरिति । कार्यसत्तया हि तथाविधं कारणं कल्प्यते यद् दूरमपि प्रसरति प्रसरदपि परेण न च निरुध्यते । दृष्टश्चानिरोधो भर्जनकपालादौ तेजसः पच्यमानद्रव्यपाकसिद्धेः, कलशे च निषिक्तानामपां बहिः शीतस्पर्श-

---

**दृष्टानुमितानामिति** । एवं भवतेति यो नियोगः, एवं मा भूद इति च यः 25
प्रतिषेधः, तयोरनुपपत्तिः । **तत्त्वविषयत्वाद्** यथाऽस्तिवस्तुविषयत्वात् ।

ग्रहणादनिरोधः, एवं नयनरश्मेरपि भविष्यति, न तु गोलकस्यैव शक्तिकल्पना लघ्वीति वक्तव्यम्, प्राप्यकारित्वव्याघातादिति । अत एव सर्वेन्द्रियाणां प्राप्यकारित्वं पश्यद्भिः शास्त्रज्ञैरिन्द्रियार्थसन्निकर्षः षट्प्रकारो व्याख्यातः । प्राप्यकारिता च न गोलकस्योपपद्यते तदप्राप्तस्य पर्वतादेर्ग्रहणात् तत्प्राप्तस्य च 5 प्रत्युताञ्जनशलाकादेरग्रहणादगोलकं चक्षुः ।

चिकित्सादिप्रयोगस्तु गोलके यः प्रवर्त्तते ।
सोऽयमाधारसंस्कार आधेयस्योपकारकः ।।

अत एव गोलकगुणदोषानुवर्तित्वमपि विषयोपलब्धेर्घटमानम्, आधारद्वारकौ हि तदाधेयस्यैव तौ गुणदोषाविति, तस्मादप्राप्तविषयग्रहणानु-10 पपत्तेर्गोलकचक्षुःपक्षो भिक्षूत्प्रेक्षितः प्रेक्षावतां हृदयेषु न विश्राम्यतीति प्राप्यकारि तेज एव चक्षुरिति स्थितम् ।

**इन्द्रियाणां नाहङ्कारिकत्वम्**

इत्थं भौतिकेन्द्रियवादेऽपि प्राप्यकारित्वसिद्धेर्न कापिलकथितमाहङ्कारिकत्वमिन्द्रियाणामुपपद्यते ।

15 ननु पक्षद्वयेऽपि प्राप्यकारित्वोपपत्तेः कोऽयं भौतिकत्वं प्रत्यभिनिवेशातिशयो भवतामिति, उच्यते, एकप्रकृतित्वे हीन्द्रियाणामेकमेव सर्वविषयप्रकाशनकुशलमिन्द्रियं भवेत् सर्वाणि वा सर्वविषयग्राहीणि भवेयुः, कारकस्याविशेषात् । कारणनियमाधीनो हि कार्यनियमः । अहङ्काराख्यञ्च कारणम्, सकलविषयप्रकाशनशक्तियुक्ते तस्मिन् कथमिन्द्रियान्तराणि विषयान्तरग्राहीणि 20 ततो भवेयुः ? भौतिकत्वे तु भूतानां भेदान्नियतगुणोत्कर्षयोगित्वान्नियतविषयग्राहीन्द्रियप्रकृतित्वम् । तथा च प्रदीपादितेजो रूपरसाद्यनेकविषयसन्निधानेऽपि रूपस्यैव प्रकाशीभवितुमर्हति । एवमिन्द्रियान्तरेष्वपि वक्तव्यम् । तदेष विषयनियमः प्रकृतिनियमकारित इन्द्रियाणामिति भौतिकानीन्द्रियाणि ।

---

नियतगुणोत्कर्षयोगित्वादिति । नियतस्य गन्धादेर्गुणस्य पृथिव्यादीनां य उत्कर्षो 25 भूयस्त्वम् ।

**चक्षुषस्तैजसत्वे द्रव्यादिग्रहणं कथमिति शङ्कानिरासः**

यत्त्वेवं तैजसेन चक्षुषा कथं पार्थिवस्य रूपस्य ग्रहणं पृथिव्या एव वा, आप्येन च रसनेन पार्थिवस्य रसस्य, वायवीयेन स्पर्शनेन्द्रियेण च पृथिव्यादिस्पर्शस्य, तदिदं प्रकृतिनियमेऽपि कथं विषयसाङ्कर्यमिति ? नैष दोषो रूपादिविषयविषयोऽपि ह्येषां नियमो न तदाश्रयविषयः, तैजसं हि प्रदीपादि- 5 द्रव्यं रूपमेव प्रकाशयद् दृश्यते न तेजोवृत्त्येव रूपम् । आप्यमपि द्रव्यं रसमेव व्यनक्ति न तु सलिलस्थमेवेति, घ्राणे तु न कश्चिद्दोषः, तद्ग्राह्यस्य तस्य पृथिव्येकवृत्तित्वादिति, द्रव्यस्यापि दर्शनस्पर्शनग्राह्यत्वमविरुद्धमित्थं भौतिकत्वेऽपीति । यदुक्तं महदणुग्रहणाच्चाभौतिकानीन्द्रियाणीति, तन्न, दूरप्रसारित्वस्य दर्शितत्वात्, ततश्च विततत्वाद् विततग्राहि भवत्येव, विततत्वेनापि 10 नाहङ्कारिकत्वम् ।

यत् पुनरभ्यधायि भौतिकत्वे परगुणवत् स्वगुणस्यापि प्रकाशमिन्द्रियं स्यादिति, तदयुक्तम्, सगुणस्येन्द्रियस्येन्द्रियभावात् । इन्द्रियेण हि सता तेन विषयः परिच्छिद्यते सगुणस्य चास्येन्द्रियत्वं स्वगुणरहितं तदिन्द्रियमेव न स्यात्, अनिन्द्रियञ्च कथं ग्राहकमत इन्द्रियगुणानाम् अन्तःपतितत्वान्न प्रमेय- 15 त्वम् । तस्माद्भौतिकानीन्द्रियाणि स्वं स्वं विषयमुपलभन्त इति सिद्धम् ।

प्रयोगस्तु पार्थिवं घ्राणं द्रव्यत्वे सति रूपादिमध्ये गन्धस्यैव व्यञ्जकत्वाद् गन्धयुक्तद्रव्यवत्, तत्र व्यञ्जकत्वमात्रमनैकान्तिकमिति गन्धस्यैव विशेष्यते । सोऽयमसिद्धो हेतुर्भवेत्, गन्धत्वस्यापि घ्राणव्यङ्ग्यत्वादिति रूपादिमध्य इत्युक्तम् । तथापि सन्निकर्षेण व्यभिचार इति तद्व्युदासाय द्रव्यत्वे 20

---

गन्धयुक्तद्रव्यवदिति । गन्धयुक्तद्रव्याणां कस्तूरिकादीनां गन्धविशेषार्थमुपादानम्, यस्मात् तेषामेव गन्धव्यञ्जकत्वम् । यथाहि क्षितिद्रव्यव्यक्तयः प्रत्येकं सामस्त्येन च गन्धाभिव्यक्त्यर्थमुपादीयन्ते नैवं जलादिव्यक्तय इति पृथिवीद्रव्यव्यक्तीनामेव गन्धाभिव्यञ्जकत्वम् । न च वाच्यं गन्धयुक्तिद्रव्याणि गन्धविशेषस्योत्पादकानि नाभिव्यञ्जकानीति, उत्पादकत्वेऽप्यभिव्यञ्जकत्वाविरोधात् । ग्रहणयोग्यत्वापादकत्वं हि द्रव्यव्यञ्जक- 25

सतीति विशेषणम्, एवं रसनादिष्वपि प्रयोगा रचनीयाः । श्रोत्रं त्वाकाशैक-देश इति शब्दाधिकरणे निर्णीतम् । गन्धादिविषयोपलब्धिनिबन्धनसुखदुःखोप-भोगहेतुभूतधर्माधर्मोपनिबद्धानां चेन्द्रियाणामिन्द्रियत्वमिति । तद्वशाद् यथा नियतविषयग्रहणकारणता घटते, तथा कल्प्यत इति सर्वमनवद्यम् ।

5 **त्वगेवैकमिन्द्रियमिति मतखण्डनम्**

आह, भवन्तु भौतिकानि इन्द्रियाणि, पञ्चेति तु न युक्तमुक्तम्, त्वगेव ह्येकमिन्द्रियं भवितुमर्हति सर्वत्रानपायात् । करतलकपोलकण्ठादिवर्तिनापि त्वगिन्द्रियेण रूपोपलम्भप्रसङ्ग इति चेत्, न, अवयवविशेषशक्तिविशेषनियमात् । न हि पाणिना पादेन वोपस्थकार्यं कर्तुं शक्यते, अस्ति चावयवविशेषस्वभाव-
10 विशेषवैचित्र्यम् ।

तुषारकर्पूरापूर्णवारिण्युत्तरमानसे ।
यथा च वृषणौ स्नातुः स्फुटतो न तथा स्फिचौ ॥
क्लिन्नार्द्रतृणकाष्ठादिधूमेन कटुना यथा ।
मूर्धाक्षिवेदनोदेति न तथावयवान्तरे ॥

15 तस्मादवयवविशेषव्यवस्थितनानाशक्तिखचितं त्वगेवैकमिन्द्रियमिति ।

उच्यते, कुतोऽयमपूर्व एव महाप्राज्ञो वादी सरलमतीनस्मान् वञ्चयितुमागतः, योऽवयवविशेषं चाश्रयन्नप्येकमिन्द्रियं मन्यते शक्तिभेदादा-श्रयभेदाच्च । नानात्वमेवैतदिन्द्रियाणामित्यलं महात्मभिः सह कलहेन ।

मनुष्यैः सह संवादो मादृशानां हि शोभते ।
20 देवास्तु नररूपेण त इमे भान्ति वादिनः ॥
ननु नानात्वपक्षेऽपि पञ्चत्वनियमः कथम् ।
द्वे श्रोत्रे चक्षुषी द्वे च कथं ते एकमिन्द्रियम् ॥

---

त्वम् । तच्चोत्पादकत्वेऽप्यविरुद्धमिति । **एवं रसनादिष्वपि प्रयोगा** इति । आप्यं रसनेन्द्रियम्, द्रव्यत्वे सति रूपादिषु मध्ये रसस्यैव व्यञ्जकत्वात्, घटोदकवत् । तैजसं
25 चक्षुः, द्रव्यत्वे सति रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वात् प्रदीपवत् । वायवीयं स्पर्शने-न्द्रियम्, द्रव्यत्वे सति रूपादिषु मध्ये नियमेन स्पर्शग्राहकत्वाद् व्यजनानिलवत् ।

**सर्वत्रानपायाद्** इति । चक्षुरादावपि त्वचः सम्भवात् । **उत्तरमानसे** सरोविशेषे ।

आह च 'सव्यदृष्टस्येतरेण प्रत्यभिज्ञानाद्' इति । चक्षुष्ट्वजातेरेकत्वादिति चेत्, तर्हीन्द्रियत्वजातेरेकत्वादेकमिन्द्रियं स्यात् ? उच्यते, चक्षुस्तावत् तेज इति निर्णीतम्, ततश्चैकमेव तदधिष्ठानमेकघ्राणवंशव्यवहितमनेकमिवोपलभ्यते, भिन्नं वा तद् भवतु तेजः, तत्कार्यैक्यादाश्रयभेदेऽप्येकमेव । श्रोत्रमपि कर्णच्छिद्रद्वयानुस्यूतमेकमेव नभोदेशप्रायं कार्यैकत्वस्यापि भावात् । 5

तेनाधिष्ठानभेदेऽपि कार्यैकत्वस्य दर्शनात् ।
तत्सामान्यस्य चैकत्वादेकत्वं श्रोत्रचक्षुषोः ॥

न चेन्द्रियजातेरैक्यादेकमिन्द्रियम् । कार्यस्योपलब्धिलक्षणस्य, कारणस्य पृथिव्यादेः, विषयस्य गन्धादेः, अधिष्ठानस्य त्रिपुटकादेर्गतेश्च, घ्राणत्वादेर्जातिशब्दवाच्यस्य, योनेर्वा पृथिव्यादेः पञ्चविधत्वात् पञ्चैवेन्द्रियाणि कल्प्यन्ते । 10 यथा परमाणुसामान्याविशेषेऽपि पृथिव्यादिचतुर्विधकार्यदर्शनाच्चतुर्विधाः परमाणवः कल्प्यन्त इति ।

### कर्मेन्द्रियत्वेन स्वीकृतानामिन्द्रियत्वखण्डनम्

ननु तथापि न पञ्चेन्द्रियाणि, बुद्धीन्द्रियवत् कर्मेन्द्रियाणामपि पञ्चानामुपसंख्येयत्वात् । तदुक्तं वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाण्याहुः । 15 तेषाञ्च वचनादानविहरणोत्सर्गानन्दात्मकपञ्चविधकार्यसाधनादिन्द्रियत्वं तत्कार्यस्यानितरेतरसाध्यत्वादिति ।

अत्राहुः, अत्यल्पमिदमुच्यते पञ्च कर्मेन्द्रियाणीति । अन्यान्यपि खलु न सन्ति कर्मेन्द्रियाणि ? तथा हि कण्ठोऽन्ननिगरणेन, स्तनकलशालिङ्गनादिना वक्षो भारवहनेन चांसद्वयमिन्द्रियमुच्यते न कथम् ? तत्कार्यस्य शरीरावय- 20 वान्तरेऽपि दर्शनादिति चेत्, किन्तु भवानन्नपानं पाणिपादेन निगिरति पायुना वा ? आदानमपि किमास्यादिना वा न कुर्वते तिर्यञ्चो मनुष्या अपि हि क्वचित्, असत्स्वपि भवत्कल्पितेषु कर्मेन्द्रियेषु तत्कार्यं यावत्तावदन्यथापि

---

कार्यस्योपलब्धिलक्षणस्येत्यादिना "न, बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः" इति सूत्रं व्याचष्टे । बुद्धिरेव लक्षणं कार्यभूता । 25

दृश्यते न त्वेवं बुद्धीन्द्रियेषु ।

भवत्युत्पाटिताक्षस्य न मनागपि रूपधीः ।
ईषद्विहारादानादि दृष्टं यन्त्राङ्घ्रिपाणिषु ।।

अपि च विहरणमपि न केवलं चरणयुगलकार्यम् अपि तु जानूरु-
5 जङ्घादिसहितपादसम्पाद्यमानमपि बाहुसहिताभ्यां पाणिभ्यामपि निर्वर्त्यते न
केवलाभ्याम्, वागिन्द्रियन्तु नाभेरूर्ध्वं सर्वमेव स्यादित्याहुः 'वायुर्नाभेरुत्थित
उरसि विस्तीर्णः कण्ठे विवर्तितो मूर्धानमाहत्य परावृत्तो वक्त्रे चरन्
विविधाञ् शब्दानभिव्यनक्ति' इति । अस्ति चेदृगनुभवो जल्पतां विशेषतस्त्व-
खण्डगेयं गायतामिति । एवञ्च कर्मेन्द्रियमयमेव विश्वमिति न च शरीर-
10 मिन्द्रियव्यतिरिक्तं किञ्चिद् भवेत् । अथ शरीरावयवेष्वेव भिन्नकार्य-
कारिषु कर्मेन्द्रियव्यवहारस्तर्हि कण्ठादिभिरतिप्रसङ्ग इत्ययुक्तम्,
उपस्थेन्द्रियञ्च कथमेकं गण्यते तेनानन्दवन्मूत्रोत्सर्गस्यापि साधनात्,
वागिन्द्रियन्तु सुतरामहृदयङ्गमम्, संयोगविभागनिर्वर्त्यो हि बाह्यः शब्द
उपलभ्यते, तद्भेदाश्च विद्यन्ते यादृशो भेरीदण्डसंयोगजः शब्दो न तादृशः
15 कूर्मीकोणसंयोगजः । एवं विचित्रस्थानकरणसंयोगाद् विचित्रो वर्णात्मकः शब्द
उदेतीति न वागिन्द्रियं नाम किञ्चित् । लोकश्च वाक्शब्देन वर्णात्मकं शब्दमेव
व्यपदिशति शब्दश्चेन्द्रियविषयो नेन्द्रियम्, तस्मादनेकविधसुखदुःखोपभोगा-
क्षेपक्षमकर्मपरिणामनिर्मितमेतच्छरीरं तैस्तैरवयवैस्तं तं कर्मफलोपभोगमात्मनः
सम्पादयतीत्यलमेवंविधेन्द्रियकल्पनार्जवेन ।

20 **मनस एवान्तःकरणत्वम्**

अन्तःकरणस्यापि त्रैविध्यमनुपपन्नम्, एकेन मनसैव पर्याप्तेः । बुद्धिस्तु
उपलब्धिस्वभावत्वात् करणकार्या न तु करणम् । अहङ्कारोऽपि ज्ञानविषय एव
न करणम्, एतच्च सविस्तरं बुद्धिलक्षणे वक्ष्यामः । तस्मान्न त्रयोदशविधं
करणमिति सिद्धम् ।

---

25 वागिन्द्रियं त्विति । शब्दोत्पत्तौ करणस्य वागिन्द्रियत्वाभिधानात् ।

न्यूनाधिकत्वशमनादत इन्द्रियाणि
पञ्चैव बाह्यविषयाधिगमक्षमाणि ।
अन्तःसुखादिविषयग्रहणोपयोगि
षष्ठं मनस्तु कथयिष्यति सूत्रकारः ॥

तानि 5

पुंसो भवाब्धिपतितस्य विवेकरत्न-
मानन्ददायि न हरन्ति तथा विधेयम् ॥

——

## अर्थपरीक्षा

**गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः**

तदर्था इत्यत एवापकृष्य वा प्रक्रमाद्वा अर्था इति लक्ष्यपदं दर्शयितव्यम्, 10
तदर्थ इति लक्षणम् । तदिति प्रकृतेन्द्रियपरामर्शः । सामान्यलक्षणन्तु पुनस्त-
दर्था इत्येव योजनीयम् । तदिति घ्राणादीनां विशेषसंख्यानिर्दिष्टानामवमर्शः ।
एवञ्च घ्राणस्य विषयो गन्धः, रसनस्य विषयो रसः, इत्यादि विशेषलक्षण-
मुक्तं भवति । गन्धत्वादीनान्तु घ्राणादिग्राह्यत्वादतिव्याप्तिरिति पृथिव्यादिगुणा
इति विशेषणोपादानम् । ते चामी गन्धादय इन्द्रियार्था भोग्याः सन्तः सक्ति- 15
हेतवः संसारद्राघिमाणमावहन्तीति हेयतया भावयितव्याः ।

नन्वेवं गन्धादिगुणाधिकरणस्यावयविनः प्रथमस्य रागहेतोरसङ्ग्रहः स्यात्?
वक्ष्यति च 'तन्निमित्तं त्ववयव्यभिमानः' इति, संख्यापरिमाणादिगुणान्त-
राणामपि रागहेतुत्वमस्त्येव । यथा बर्हिकलापानुकारिपरिमृदितकुसुमदल-
पटलशबलविलासिनीकेशपाशवृत्ति रूपं हरति हृदयं यूनाम्, तथा तद्गता 20
बहुत्वसंख्यापि । उत्तप्तकनकशिलानिभनितम्बबिम्बरूपवत् तत्परिमाणमपि
हरति च सरभसम् । अवयवसंयोगविभागाद्यपि तथा कन्दुकादिक्रीडासु

---

आनन्ददायीति । आनन्दशब्देन दुःखाभावे वर्तमानेन मोक्षो लक्षितः ।
प्रक्रमाद् वा प्रमेयसूत्रेऽस्मिन्नवसरे तेषां पाठात् ।
तन्निमित्तम्, रागादिनिमित्तम् । अवयव्यभिमानः, अवयविग्रहः । 25

किसलयितविसरसविलासविसरमधरपरिभ्रमणादि कन्दुकान्तम् । तथान्त्यजजात्यादिपरिहारेण स्वानुरूपजातियोगित्वमपीत्यादि सर्वं द्रव्यगुणकर्मादि सक्तिकारणमनुक्तं स्यात् ।

**सूत्रस्थपदविचारः**

5 तत्र केचित् पृथिव्यादिगुणा इति द्वन्द्वसमासं व्याचक्षते पृथिव्यादीनि च गुणाश्चेति । पृथिव्यादिपदेन गुणाधिकरणमवयवि द्रव्यमुक्तमाश्रितत्वविशेषणत्वाभ्यां सर्वे गुणा इति । गुणग्रहणेन च संख्यापरिमाणादिवत् कर्मसामान्याद्यपि सर्वमुक्तमतो नासङ्ग्रह इति ।

तदिदमनुपपन्नम्, गन्धादिग्रहणस्य हि तदानीमानर्थक्यम्, गुणाश्चेत्यनेनैव 10 गतार्थत्वात् । विशेषख्यापनार्थं तदुपादानमिति चेत् तर्हि किं द्वन्द्वसमासवर्णनेन । अयमेवास्तु समाधिः ।

यद्यपि द्रव्यकर्मसामान्यानाम्, अन्येषाञ्च संख्यापरिमाणादिगुणानामस्त्येव सक्तिहेतुता, तथापि प्राधान्येन गन्धादीनामेव सा, दृश्यते हि रूपादिनिरपेक्षस्य द्रव्यस्य संख्यादेः सामान्यस्य वा न सक्तिहेतुत्वं समस्तीति, 15 रूपादय एव मुख्यं रागकारणम्, तत्र झटिति बुद्धेः प्रसरकरणात् । उक्तञ्च,

तथापि नितरां रागवृद्धचै रूपादयो नृणाम् ।
त एव कविभिर्गीताः पञ्चेषोः पञ्च सायकाः ।।

तस्मात् पृथिव्यादीनां गुणा इति षष्ठीसमास एव श्रेयान् । गुणव्यतिरिक्तश्च गुणी पूर्वमेव समर्थितो यमहमद्राक्षं तं स्पृशामीति प्रत्ययप्रामाण्यात् ।

---

20 **आश्रितत्व-विशेषणत्वाभ्यां सर्वे गुणा इति** वैयाकरणपक्षपरिग्रहः । तथा च तेऽत्रोचन्,

संसर्गि भेदकं यद् यत् सव्यापारं प्रतीयते ।
गुणत्वं परतन्त्रत्वात् तस्य शास्त्र उदाहृतम् ।। इति ।

**तर्हि किं द्वन्द्वसमासवर्णनेनेति** । प्राधान्यात् तेषामेवास्तु ग्रहणमित्यभि-25 प्रायेणेदमाह ।

**पृथिव्यादीनां गुणविभागः**

पृथिव्यादिगुणा इति यदुक्तं तदिदानीं विभज्य वर्ण्यते कस्य कति गुणा इति । तत्र

गन्धादयो नियोक्तव्याश्चत्वारः पृथिवीगुणाः ।
अप्तेजोमरुतामेकं पूर्वपूर्वमपोह्य तु ॥ 5

गन्धवर्जं रसरूपस्पर्शा अपाम्, रसवर्जं रूपस्पर्शौ तेजसः, रूपवर्जं स्पर्शाख्यः वायोरिति, आकाशस्य तु गुणः शब्दः ।

**पृथिव्यादीनां गुणनिश्चये शङ्का तत्समाधानञ्च**

ननु नायं गुणविनियोगः साधीयान्, पृथिव्याश्चतुर्गुणत्वे पार्थिवेन घ्राणेन्द्रियेण चतुर्णामपि तद्गुणानां ग्रहणं स्यात्, एवमुत्तरेष्वपि वक्तव्यम् । तस्मादेकैकगुणत्वमेव भूतानामुच्यताम् । नैतदेवं गुणाः स्वेच्छया विप्रलभ्यन्ते, यथोपलभ्यन्ते तथा व्यवस्थाप्यन्ते, प्रतीतिप्रमाणका वयम् । तत्र पार्थिवे द्रव्ये चतुर्णामपि गुणानामुपलम्भः कथमेकगुणां पृथिवीं ब्रूमः ? रूपैकगुणे च तेजसि पृथिव्युदकयोर्वायुवदरूपत्वादप्रत्यक्षत्वं स्यात्, तस्मात् त्रीणि रूपवन्ति द्रव्याणि । 10 15

यद्येवं सर्वेषां सर्वत्रोपलम्भात् सर्वाणि सर्वगुणानि भवन्तु भूतानि, पटपटायते पृथिवी, छलछलायन्ते आपः, धकधकायते तेजः, कथकथायते वायुरिति सर्वेषां गुणः शब्दः स्यात् ? उच्यते, न सर्वे गुणाः सर्वत्रोपलभ्यन्ते निर्गन्धानामपां सर्वत्र दर्शनात्, क्लिन्नरूपादौ तु पार्थिवावयवनिष्क्रान्त्या गन्धः पयस्युपलभ्यते । 20

एवं सुवर्णादौ तैजसे द्रव्ये संयुक्तसमवायाद्रसाद्युपलब्धिः, शब्दस्तु सर्वकालमाकाशवृत्तिरेव प्रतीयते, पृथिव्याद्यवयवसंयोगविभागप्रभवस्त्वसाविति तदाश्रितत्वभ्रममावहति न त्वाकाशाद् विना तस्य ग्रहणमिति आकाशं तत एव शब्द इत्येतच्च प्राङ् निर्णीतं गुणत्वम् ।

यच्च पृथिव्याश्चतुर्गुणत्वे तद्गुणानां चतुर्णामपि पार्थिवघ्राणेन्द्रियग्राह्यत्वं स्यादिति, तन्न, गुणोत्कर्षस्य नियामकत्वात् । सातिशयगन्धगुणाधि- 25

करणे विजातीयद्रव्यावयवसंस्पर्शलेशरहितैः केवलपृथिव्यवयवैरदृष्टसहकारिभि-र्घटितं घ्राणेन्द्रियमिति गन्धस्यैव ग्राहकम् । एतदेव च भूयस्त्वमाचक्षते । यथाह कणव्रतः 'भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवी गन्धज्ञानप्रकृतिः', इहाप्युक्तम् 'तद्व्यवस्थानन्तु भूयस्त्वात्' इति । दृश्यन्ते च केवलपृथिव्यवयवोपादाने-ष्वपि पदार्थेषु व्यवस्थितकार्यनियमाः शक्तयः । यथा,

पार्थिवत्वाविशेषेऽपि विषं मरणकारणम् ।
अगदद्रव्यमन्यत्तु जीविताय प्रकल्पते ॥

तस्मादपर्यनुयोगोऽयं 'पार्थिवेन घ्राणेन गन्धवत् तद्रसादयोऽपि कथं न गृह्यन्ते' इति, सातिशयप्रकृतियोगेऽपि च न स्वगुणग्रहणनैपुणमिन्द्रियाणा-मितीन्द्रियचिन्तायां निर्णीतम् । श्रोत्रेणाकाशगुणस्य शब्दस्य ग्रहणमिति परिशेषानुमानप्रमाणकोऽयमर्थः शब्दपरीक्षायामेव परीक्षित इत्यलमतिप्रसङ्गेन ।

इति निपुणधियामसम्मता सकलगुणैकगुणत्वकल्पना ।
तदयमकलुषोऽभ्युपेयतां गुणविनियोगविधिर्यथोदितः ॥

तेऽमी हेयाः कृतकमधुरं रूपमादर्शयन्त-
स्तिक्ताहाराः परिणतिविपत्कारिणो हीन्द्रियार्थाः ।
त्यक्ताश्चैते व्यपगतमहामोहपङ्केन पुंसा
तीर्णश्चायं भवजलनिधिः क्लेशकल्लोलरौद्रः ॥

## बुद्धिपरीक्षा

**बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥**

ननु पर्यायोच्चारणमेतन्न बुद्धेर्लक्षणमभिधीयते, न । पर्यायप्रयोगस्यैव लक्षणक्षमत्वात् । लक्षणं हि तदुच्यते येन समानेतरजातीयेभ्यो लक्ष्यं व्यव-

---

**गन्धज्ञानप्रकृतिरिति** । गन्धो ज्ञायते येन तद् गन्धज्ञानं घ्राणम्, तत्र प्रकृतिः कारणम् । तद्व्यवस्थानम्, तेषां व्यवस्थानं नियतविषयग्राहकत्वम् ।

**कृतकमधुरमिति** । यत एवेदृशाः विभाव्यन्तेऽत एव तिक्ताहार इव । कथमिति चेत्, तदाह 'परिणतिविपत्कारिणो हि' इति ।

च्छिद्यते, व्यवच्छिद्यते च बुद्धिर्बुद्ध्यादिपर्यायवाच्यतयैव तेभ्य इति नाभिधानमालामात्रमिदम् ।

ननु सामयिकत्वाच्छब्दार्थप्रत्ययस्य, समयस्य च पुरुषेच्छानिर्वर्त्यत्वात् कथमिदं व्यवस्थितं लक्षणं स्यात् ? मैवम् । सर्वजनीनस्य समयस्य विप्लावयितुमशक्यत्वात् तद्वदिष्टस्य तद्वाच्यस्य लक्षणत्वात् । 5

प्रकारान्तरेण लक्षणमस्याः किमिति नोक्तमिति चेत् । शिंशपाचोद्यमिदम्, तस्मिन्नप्युक्तेऽनुयुञ्जीत भवान् इत्थं किमिति नोक्तमिति । अस्ति च प्रयोजनं पर्यायद्वारकलक्षणोपवर्णनस्य यत् साङ्ख्यानां व्यामोहनिरसनम् । एवं हि सांख्याः सङ्गिरन्ते 'बुद्धिरन्या ज्ञानमन्यदुपलब्धिरन्या' इति तद्भ्रमापनयनायैवमुच्यते 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्' । एक एवार्थ इत्यर्थः । इत्थञ्च 10 स्वरूपतो निर्ज्ञाता बुद्धिर्भोगस्वभावात् तत्साधनत्वाच्च संसारहेतुरिति हेयत्वेन भाव्यते ।

### बुद्ध्यादीनां भेदवादिसांख्यमतम्

सुखादिबुद्धिर्भोगः, तत्साधनबुद्धिस्तु भोगसाधनमिति कथं पारमर्षाः प्रवदन्ति 'बुद्धिरन्योपलब्धिरन्या' इति, नित्यां हि बुद्धिं ते मन्वते, तत् किमात्मैवैतैः बुद्धिरिति गृहीतम् ? न, अचेतनाया भोग्यायाः प्रकृतेः प्रथमा विकृतिर्महच्छब्दवाच्या बुद्धिः, पुरुषस्तु चेतनो भोक्ता अन्य एव, ताविमौ प्रकृतिपुरुषौ विवेकेनापश्यतां संसारः, प्रकृतिपुरुषविवेकज्ञानान्मोक्षः । का पुनः प्रकृतिर्नाम ? सत्त्वरजस्तमसां त्रयाणां गुणानां साम्यावस्था प्रकृतिः । प्रधानमव्यक्तं च तदुच्यते यत्साम्यावस्थागतं गुणत्रयमिति । 15 20

---

**शिंशपाचोद्यमिति ।** यथा 'सत्स्वन्येष्वशोकवनिकायां तालतमालप्रभृतिषु रावणेन जानकी किमिति शिंशपाम् एवाधः स्थापिता' इति यदि चोद्येत तदा 'अन्यं वृक्षमधः स्थापिता इति' अस्य चोद्यस्यानिवृत्तिः किमिति, शिंशपाम् अधो न स्थापिता इति । **बुद्धिरन्येति ।** बुद्धिर्महत् तत्त्वम्, तस्या वृत्तिविशेषो ज्ञानम्, उपलब्धिस्त्वात्मनस्तत्प्रतिबिम्बनम् इति । 25

ननु तत्सत्त्वे किं प्रमाणम् ? अनुमानमित्याह । तथा हि चराचरमिदं विश्वं सुखदुःखमोहाविनाभूतमुपलभ्यते । न हि ब्रह्मादौ स्तम्बपर्यन्ते जगति तथाभूतं किमपि भूतमुपलभ्यते यत् सुखदुःखमोहैरविकृतम् । तत्र सुखस्वभावं सत्त्वं दुःखस्वभावं रजो मोहस्वभावं तमः, सर्वत्र प्रीत्यप्रीतिविषादादि-
5 दर्शनात् प्रकाशप्रवृत्तिनियमावगमाच्च सर्वं त्रिगुणात्मकं जगत् । कार्यञ्च तत् परस्परान्वितरूपं तदेकरूपात् कारणादुत्पद्यमानं दृश्यते, मृदन्वितानि हि घटाशरावोदञ्चनप्रभृतीनि कार्याण्येकस्मान्मृदात्मनः कारणादुद्भवन्ति, तदिदं विश्वं सुखदुःखमोहान्वितमिति तदात्मककारणकार्यं भवितुमर्हति । यत् सुख-दुःखमोहात्मकं कारणं सा सत्त्वरजस्तमोरूपा प्रकृतिः । एवमन्वयपुरःसराः
10 परिमाणादिहेतवोऽपि वक्तव्याः, इयत्तया वा, चतुरश्रतादिना वा परिमाणेन,

---

**सर्वत्र च प्रीत्यप्रीतिविषाददर्शनादिति** । शब्दादयो हि कस्यचित् प्रीतिं सुखम-परस्याप्रीतिं दुःखं कस्यचित् तु विषादं दुःखातिशयरूपं जनयन्तो दृश्यन्ते । यथा स्तन-यित्नुशब्दः कर्षकाणां प्रीतिनिमित्तम्, वियोगिनीनान्तु दुःखस्य च विषादस्य च हेतुरिति । **प्रकाशप्रवृत्तिनियमावगमाच्चेति** । यथा बुद्धेः प्रकाशकत्वं सत्त्वधर्मः, अर्थग्रहणं प्रति
15 प्रवृत्तिर्या सा रजोधर्मः, नियतविषयप्रकाशकत्वं तमोधर्म इति । **एवमन्वयपुरःसराः परिमाणादिहेतव** इति । यदुक्तम्,

भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद् वैश्वरूप्यस्य ॥ इति ।

प्रधानसिद्धौ पञ्च वीतहेतवोऽनेनोद्दिष्टाः, तत्र समन्वयोऽमुनैव व्याख्यातः । शिष्टा
20 व्याख्यायन्ते । यथाहि, ये ये परिमिता उत्पद्यन्ते ते ते शक्त्यात्मना संस्पृष्टाः, तद्यथा अङ्कुरादयः परिमिताः कललार्बुदादयश्च, देशप्रमाणकालरूपजातिप्रत्यासत्तिभिरनुक्रमेण चोत्पद्यमाना नूनं व्रीहौ शुक्रे शोणिते च संस्पृष्टाः । उत्पद्यन्ते च कार्यकारणात्मका आध्या-त्मिका भेदाः षोडशसङ्ख्याकाः बाह्याश्च देवमनुष्यतिर्यग्भेदात् त्रिविधाः । तेऽपि क्वचित् संस्पृष्टाः । यद्धि नियतपरिमाणं समुत्पद्यमानं दृष्टं महदादि तदेकत्र संस्पृष्टम् । अन्यथा
25 नियतक्रमेण नियतपरिमाणस्योत्पत्त्यसम्भवात् । तथा चामी आध्यात्मिका बाह्याश्च भेदाः । तस्मात् तेऽप्येकत्र संस्पृष्टा जायन्ते । तेषां यत्र संसर्गोऽभूत् तत् प्रधानमिति । शक्तितः

प्रवृत्तेश्च । इह त्रिकालावस्थितप्रकृत्यनुगताः कार्यकारणात्मका भेदा इति धर्मिनिर्देशः । शक्तिरूपैककारणपूर्वका इति साध्यम् । प्रवृत्तिदर्शनादिति हेतुः । परिनिष्ठितं कार्येण कारणरूपं मृदादि रथादिवत् । मृदादीनां रथादीनाञ्च प्राक् प्रवृत्तेरस्ति प्रवृत्तिशक्तिः । कथमन्यथा घटादिकरणे वाहनादिकरणे च अशक्तत्वात् ते प्रवर्तेरन् ? प्रवृत्तिकाले चैषा-मस्ति प्रवृत्तिशक्तिरन्यथा ते कार्यमनारभेरन् । अतः प्रवृत्तिकाले शक्तेः सद्भावः । एव-मूर्ध्वमपि प्रवृत्तिशक्तिसद्भावः, यतः निवृत्तव्यापारा अपि रथादयः शक्तेरनिवृत्तत्वात् तथाविधकार्यकरणे पुनः प्रवर्तमाना दृश्यन्ते । अन्यथा शक्तेरभावाद् न प्रवर्तेरन् । अत-स्तेषां प्रागभाविनी शक्तिः प्रवृत्तेः कारणम् । तेन ते शक्तिरूपैककारणपूर्वकाः । सन्ति चाध्यात्मिकानां कार्यकारणात्मकानां भेदानां प्रवृत्तयः । तस्मात् तेऽप्यवश्यं शक्तिपूर्वकाः । यत्र चैषां शक्त्यवस्था तत् प्रधानम् । कारणकार्यविभागादिति । इहावस्थितभावपूर्वकाः भेदाः कारणकार्यविभागात् परस्परोपकारकोपकार्यविभागाच्छयनाद्यङ्गवत् । खट्वादीनां ह्यवयवा आरभन्ते उत्तरकार्येण व्यवस्थिताः परस्परोपकारेण च वर्तमाना बुद्धिमदेककर्तृका, दृष्टाः । वर्तन्ते चाध्यात्मिका बाह्याश्च भेदा इतरेतरोपकारेण, तस्मान्न ते यतस्तत आगता, अपि त्वितरेतरौन्मुख्येन, अत एवैकरूपात्मनावस्थितास्ते त्रिगुणात्मके प्रधाने यस्येदं विश्वं प्रेक्षापूर्वमिव कृतमवसीयते । इह पुरुषार्थप्रयुक्ता गुणा परस्परोपकारेण वर्तन्ते । यथा सत्त्वं रजस्तमसोः शब्दादौ कार्ये श्रवणादौ च कारणे प्रवर्तमानयोः कार्यसम्पत्त्यर्थं प्रकाशयति । सत्त्वतमसोः स्वस्वकार्ये प्रवर्तमानयोः रजः प्रवृत्तिं करोति । सत्त्वरज-सोस्तु स्वकार्यप्रवर्तमानयोस्तमो नियमयति । यथा तथाविधकार्यसम्पत्तिरेवं शरीरादि-पृथिव्यादीनां वृत्तिसंग्रहयुक्तिव्यूहावकाशदानैः परस्परार्थंकरणं दृष्टम्, तदेवं पस्स्परोप-कारकोपकार्यभावेनावस्थितं विश्वमवश्यमेककर्तृकमवसीयते । यश्चैकः कर्ता स त्रिगुणा-त्मकं प्रधानमिति । अविभागाद् वैश्वरूप्यस्य । इह विश्वरूपा बाह्याध्यात्मिका भावा अविभागा उत्पद्यन्ते वैश्वरूप्यात्, जलभूम्यविभागपूर्वकस्थावरजङ्गमवैश्वरूप्यवत् । देशादिप्रत्यासत्त्या जलभूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरे दृष्टम् । स्थावराणां जङ्गमेषु, जङ्गमानां स्थावरेषु, स्थावराणां स्थावरेषु, जङ्गमानां जङ्गमेषु इत्येवंजात्य-नुच्छेदेनोपादानकारणानुपदेन सर्वं सर्वात्मकम्, देशकालाकारनिमित्तानुबन्धात् तु खलु न समानकालं सर्वेषामात्मनामभिव्यक्तिरिति । दृश्यते चेदं विश्ववैश्वरूप्यम्, तस्यादविभक्तरूपसुखदुःखमोहरूपजातिपूर्वकमिति परमाविभागावस्थारूपप्रधानसिद्धिः । **इयत्तया चतुरस्रत्वादिना चेति ।** सूत्रगतस्य परिमाणशब्दस्योभयथापि व्याख्याने हेतुत्वेन

तद्वतां कार्याणामेकप्रकृतित्वदर्शनात् विषयवृत्तयश्चैते गुणाः कार्येषु । दृश्यन्ते च क्वचित् सत्त्वमधिकमूने रजस्तमसी, क्वचिद्रजः प्रकृष्टमल्पे सत्त्वतमसी, क्वचित्तमः प्रवृद्धं तुच्छे सत्त्वरजसी इति । तदेषां वैषम्यभेदोपदर्शितविश्वरूपकार्याणां क्वचित् साम्यावस्थया भाव्यम्, सा प्रकृतिरुच्यते । सेयमचेतना भोग्या प्रकृतिः, तस्यास्तु भोक्ता चेतनः पुरुषः । पुरुष इदानीं किमनुमानकः ? उक्तमेव भोग्येन भोक्तुरनुमानम्, न ह्यचेतनस्य भोग्यस्य भोक्तारमन्तरेण भोग्यतोपपद्यते, दृष्टा च सेति भोक्ता कल्प्यते । स च चितिशक्तिस्वभावक एव सर्वप्रकारकर्तृत्वादिव्यवहारनिवहबहिष्कृतस्वरूपः, द्रष्टृत्वमेव पुरुषस्य स्वरूपमाहुः, न यथा भवन्तः एकमात्मानमध्यवसायादिधर्मयोगिनं मन्यन्ते तथासौ भवितुमर्हति अध्यवसायादेर्बुद्धिधर्मत्वात् ।

कर्त्तुं शक्नेति पुरुषस्तृणस्यापि न कुब्जताम् ।
अन्योपनीतमथ तु स पश्यत्येव केवलम् ॥

प्रकृतिरेवैनं भोगापवर्गाभ्यां संयुनक्ति, न च निर्विकारा सती भोगसम्पादनसमर्था असौ भवतीति महदादिविकृतीः प्रतिपद्यते । पङ्ग्वन्धन्यायेन प्रकृतिपुरुषौ संयुज्येते । प्रकृतिरचेतना दृश्या भोग्या द्रष्टारं भोक्तारं पुरुषमपेक्षते, पुरुषोऽपि द्रष्टा भोक्ता दृश्यं भोग्यमपेक्षते इत्येवं तयोः पङ्ग्वन्धवत् संयोगो भवति । दर्शनशक्त्या पङ्गोर्गमनशक्त्या चान्धस्यैकत्र मेलनात् कार्यसिद्धिरेवं प्रकृतिपुरुषसंयोगात् सर्गः प्रवर्तते । तदुक्तम्,

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥

---

सङ्गतिरुपपद्यत एवेति दर्शयितुमुक्तम्, 'चतुरस्रत्वादिना परिमाणेन येऽन्विता घटादयःस्तेऽप्येकेनात्मना मृत्त्वादिना संसृष्टा उपलब्धाः' इति । व्याख्यातञ्च सविस्तरमिदं प्राक् । **विषमप्रवृत्तयश्चेत्यादिना** अविभागाद् वैश्वरूप्यस्येति हेतोस्तात्पर्यं दर्शितम् । **कार्येषु दृश्यन्ते** शरीरादिषु । सत्त्वबहुलानि हि देवशरीराणि, रजोबहुलानि मनुष्यशरीराणि, तमोबहुलानि' तिर्यक्शरीराणि । **अध्यवसायादिकर्मयोगिनमिति** । न हि आत्मा व्यवस्यति निश्चिनोति गौरेवायमित्येवमादि, अपि तु बुद्धिमध्यवस्यन्तीं पश्यत्येव स इति । **निर्विकारा सती** स्तब्धत्वात् ।

यच्चेत्थं प्रधानान्महत्तत्त्वमुत्पद्यते सा बुद्धिरध्यवसायात्मिका धर्मज्ञानैवराग्यैश्वर्यतद्विपर्ययरूपवृत्तियोगिनी महत्तत्त्वमेवोच्यते । बुद्धेरहङ्कार उदेति स चाभिमानस्वभावः । अहङ्कारात् प्राणादीनि, पञ्च बुद्धीन्द्रियाणि, वागादीनि पञ्च कर्मेन्द्रियाणि, सङ्कल्पकमेकादशं मनः, गन्धादितन्मात्राणि च पञ्चेति षोडशको गणः प्रभवति । ततो गन्धादितन्मात्रपञ्चकात् पञ्च पृथिव्यादीनि महाभूतानि जायन्त इति । आह च, 5

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥

तानीमानि पञ्चविंशतितत्त्वानि सञ्चक्षते । प्रधानं प्रकृतिरेव न विकृतिः, महदहङ्कारतन्मात्राणि सप्त पूर्वापेक्षया विकृतय उत्तरोत्तरकार्यापेक्षया प्रकृतयः, एकादशेन्द्रियाणि पञ्च भूतानि विकृतय एव, अप्रकृतिविकृतिरूपस्तु शुद्धः पुरुष इति । तदाह, 10

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥

एवं महदादिविकारवती प्रकृतिरात्मनो भोगं साधयति । कश्चास्य भोगः ? बुद्धिवृत्त्यनुपातित्वम्, विषयाकारपरिणतेन्द्रियवृत्त्यनुरक्तां बुद्धिवृत्तिं ज्ञानात्मिकां पुरुषः पश्यति, दर्शनेऽपि न तस्य किञ्चिच्चान्यत्वम्, किन्तु तदेव दर्शनं यत् तत्र प्रतिबिम्बनमिति । इत्थं तयोर्बुद्धिपुंसोः संयोगे सति पुरुषधर्मश्चेतयितृलक्षणो बुद्धावसन्नपि सन्निव लक्ष्यते । तदाह, 15

---

**सा बुद्धिरध्यवसायात्मिका** वृत्तिवृत्तिमतोरभेदादध्यवसायलक्षणा वृत्तिरात्मा यस्याः । **तद्विपर्ययेति** । अधर्माज्ञानावैराग्यानैश्वर्याणि तद्विपर्ययः । **स चाभिमानस्वभावः** । अभिमानलक्षणं कार्यं यतोऽहङ्कारस्य तेनाभिमानस्वभाव इत्युक्तः । **वागादीनि पञ्च कर्मेन्द्रियाणीति** । ताल्वादिस्थानविकारहेतुत्वात् तेषामिन्द्रियत्वम् । ताल्वादिस्थानविकारभूतो हि शब्दः, तस्य विकारस्य हेतुर्वागिन्द्रियम् । एवमन्येष्वपि बोद्धव्यम् । **गन्धादितन्मात्राणीति** । मालतीकुसुमगन्धादिना विशेषेणानाक्रान्ता गन्धाद्यविशेषावस्था तन्मात्रशब्दवाच्या । 20 25

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥

अपवर्गाय कथमात्मनः प्रकृतिरवकल्पते ? स्वरूपं प्रकाशयतीत्याचक्षते । अनवधृतप्रकृतिस्वरूपः पुमान् प्रकृतिकृतमखिलमात्मकृतमिति मन्यमानस्त-
5 दुपार्जितं भुङ्क्ते, यदा तु पृथग्भूतामेनां मन्यते तदा भवत्वियमायासहेतुरेव ममेति बुद्ध्यमानस्तत्कृतमनुपभुञ्जानः स्वरूपनिष्ठ एवावतिष्ठते । प्रकृतिरपि भवतु दृष्टाहमनेन पृथङ् मामेष मन्यत इति न तदभिमुखीभवितुमुत्सहते । तदाह,

प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।
10 यां दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥

परस्परञ्च भग्नरसयोः प्रकृतिपुरुषयोर्व्यापकत्वात् सत्यपि संयोगे सर्गो न प्रवर्तत एवेत्याह,

दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरमत्येका ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥

15 अपरिम्लानकुतूहलो हि पुमान् वञ्चयितुं शक्यते न दृष्टं तत्त्वमिति मत्वा, सत्यामपि योग्यतायां निवर्तते प्रकृतिर्नटीव रङ्गभूमौ प्रदर्शितनिखिल-निजनृत्तवृत्तान्तनैपुणा तत इत्याह 'रङ्गस्य दर्शयित्वा निवर्तते प्रकृतिः' । तदेवं प्रकृतिरेव संसारे प्रवर्तते प्रकृतिरेव मोक्षमनुभवतीत्याह,

तस्मान्न बध्यतेऽद्धा नापि मुच्यते नापि संसरति कश्चित् ।
20 संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥

किमर्थं पुनरसावेव विशेष्यते प्रकृतिरिति ? किं क्रियते, स्वभाव एवैष दैवहतिकायास्तस्याः ।

---

लिङ्गमिति । प्रधानस्य प्रमितस्य प्रचयावस्था मूर्तिरूपा बुद्ध्यादिकोच्यते । प्रकृतेः सुकुमारतरमिति । यथा कुलाङ्गना सौकुमार्याल्लज्जान्वितत्वेन पुरुषेण च
25 दृष्टा पुनस्तस्य दर्शनपथं नावतरत्येवं प्रकृतिः सर्वतो दृष्टा पुरुषेणेत्यतो निवर्तते, न पुनस्तस्य दर्शनमुपगच्छति ।

नानाविधैरुपायैरुपकारिण्यनुपकारिणः　पुंसः ।
गुणवत्यगुणस्य　सतस्तस्यार्थमपार्थकं　चरति ।।

अचेतनत्वादस्याः कथमेवङ्कारित्वमिति चेदुक्तमत्र,

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ।।　5

ननूत्पन्नतत्त्वज्ञाने भोगानुकूलमहदादिकार्यारम्भपराङ्मुखत्वात् तस्याश्चैकत्वाद् एकस्मिंस्तत्त्वविदि मुक्ते सति सर्वे मुक्ताः स्युः ? नैष दोषः, तत्त्वविदमेव पुमांसं प्रति तस्या औदासीन्यात्, अन्यसाधारणत्वेन तत्कार्यानपायात् । तथा च पतञ्जलिः 'कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्' । नन्वेवं यदैव तत्त्वज्ञानमुत्पन्नं तदैव प्रकृत्युपार्जितकर्मफलोपभोगपरिहानितः　10 पुंसः शरीरपातः स्यात् ? नेत्याह 'तिष्ठति संस्कारवशाच्चक्रभ्रमिवद् धृतशरीरः'; ततः संसारविरतौ सत्याम्,

प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं　कैवल्यमाप्नोति ।। इति ।

अहो नु खलु कपिलकविकथारसाक्षिप्तहृदयैरतिबहु प्रसक्तानुप्रसक्त्या　15 लिखितमस्माभिः । तदियं प्रधानप्रकृतिः प्रथमा महच्छब्दवाच्या सा बुद्धिस्तत्त्वविदं प्रति नष्टाप्यन्यसाधारणत्वादनष्टैवेति नित्या । नित्यत्वाच्च प्रत्यभिज्ञानुसन्धानादिव्यवहारप्रबन्धनिर्वाहणक्षमा बुद्धिः । ज्ञानन्तु तस्या वृत्तिः । उपलब्धिस्तु पुंसो वृत्तिमद्बुद्धिदर्शनमिति नैषां पर्यायशब्दत्वमिति ।

20

**सांख्यमतनिरसनम्**

अत्र प्रतिविधीयते, आत्मन्येव नित्ये व्यापिनि बोद्धरि ज्ञातर्यवसातरि

---

ऐकान्तिकमात्यन्तिकमिति । ऐकान्तिकमवश्यंभावात् आत्यन्तिकमपुनर्विनिवृत्तेः । अभयं जन्मादिभीतिशून्यम् ।

तं प्रति नष्टमप्यनष्टमिति । कृतार्थं सन्नष्टमप्यदर्शनीभूतमपि ।

बोद्धरि विज्ञातर्यध्यवसातरीति । पुनरुक्त्या बुद्धेर्ज्ञानाख्यवृत्तियोगाद् बोद्धृत्वम्,　25

धर्माधर्मादियोगिनि प्रत्यभिज्ञानादिकार्याणां कर्तरि सेयं बुद्धिरज्ञा सांख्यैः कल्पिता, चेतनत्वं ज्ञानादियोगिन्या अपि यत्त्वस्या नाभ्युपगतं सोऽयमतीव तपस्विनां भ्रमः। य एव बुध्यते जानात्यध्यवस्यति स एव पश्यति चेतयते च, न खल्वत्र वस्तुरूपभेदं पश्यामः। तत्र बुद्धिर्बुध्यते जानात्यध्यवस्यति, पुरुषस्तु पश्यति चेतयते चेति वञ्चनायैवमुच्यते मुग्धतया वा।

यच्चेदमुच्यते, 'बुद्ध्याध्यवसितमर्थं पुरुषः पश्यति' इति, तद् व्याख्येयं किमिदं तस्य द्रष्टृत्वमिति ? प्रतिबिम्बनमिति चेत्, किं स्वच्छे पुंसि वृत्तिमती बुद्धिः सङ्क्रामत्युत वृत्तिमत्यां बुद्धौ प्रमातेति। तत्र 'चितिशक्तिरपरिणामिन्यप्रतिसङ्क्रमा' इति न बुद्धौ पुरुषस्य सङ्क्रमणम्। बुद्धौ तु पुंसि सङ्क्रान्तायामपि पुंसः किं वृत्तं येन द्रष्टा ? सम्बन्धो द्रष्टृत्वं स्वभाव एवास्येति चेत्, किं बुद्धिप्रतिबिम्बनेन ? विशिष्टविषयावच्छेद इति चेत्, ततः पूर्वमनालम्बनं द्रष्टृत्वमघटमानमिति न नैसर्गिकं द्रष्टृरूपं पुंसः स्यात्, दर्शनशक्तिः स्वाभाविकीति चेत्, न, तस्य भेदाभेदाभ्यां निरूपयितुमशक्यत्वात्। प्रतिबिम्बपक्षे च परस्परानुरागस्य तुल्यत्वादवियोगाच्च कथमिदं निर्धार्यताममी पुंधर्मा इति। न हि तयोः पार्थगर्थ्येन कदाचित् स्वरूपावधारणं वृत्तम्, अनवधारितकार्यभेदत्वाच्च नानात्वमपि तयोर्दुर्वचम्। चेतनाचेतनत्वाद् भोक्तृभोग्यत्वाच्च विस्पष्टं तयोर्नानात्वमिति चेत्, ज्ञानादियोगित्वञ्च बुद्धेरचेतनत्वञ्चेति चित्रम्।

अपि च कल्पयित्वा भेदधर्मं बुद्धिधर्माः पुंसि पुंधर्माश्च बुद्धावारोपणीया इति किं भेदेन, भेदे च बुद्धेर्ज्ञानादियोगित्वे च चेतनत्वापत्तेः, एकत्र कार्यकारणसङ्घाते चेतनद्वयमनिष्टं प्रसज्यते। नित्यमन्तःकरणमन्तरेण पुंस उपलब्धिर्न

---

अध्यवसायोत्पादकत्वाच्चाध्यवसातृत्वम्।.... .... .... घृतादीनां सम्भवः, घृतादिषु च पुष्टेर्घृताद्युपयोगे हि पुष्टेः सम्भवात्। पुष्टौ च सत्यां रेतआदयः रेतसि च पुत्रादयः। तेषाञ्च प्राप्तकाले मरणाच्छरीरस्य क्वाथः, क्वथितस्य च कृमिभावेन परिणामः, तदेव च क्वथितम्। वृक्षायुर्वेदे वृक्षाणां वृद्धये श्रूयते, 'तथा च सति वृक्षस्यापि तत्र सम्भवः, वृक्षाच्च फलम्, फलाद् रसः, रसाद् बलमिति सर्वं क्षीरेऽस्ति, देशकालाकारापबन्धाद् न समानकालमभिव्यज्यन्ते' इति।

भवेदिति बुद्धेः कल्पना चेत्, अस्त्येव नित्यमन्तःकरणं मनः, तेन करणेन कर्तुरात्मनो विषयोपलब्धिक्रिया निर्वर्त्यते सैव च बुद्धिरित्याख्यायते न त्वन्या नित्या बुद्धिरस्तीति। किञ्च कस्य कृते परिदृश्यमानमात्मनो ज्ञानादि-क्रियाकर्तृत्वमुत्सृज्य बुद्धेरदृश्यमानमुपेयते, कोऽत्राशयः।

### सांख्यमतसिद्धायाः बन्धमोक्षव्यवस्थाया अग्राह्यत्वम् 5

ननु पुरुषस्य स्वातन्त्र्यात्मककर्तृत्वे सति स्वकृतकर्मफलोपभोगानन्त्याद-निर्मोक्षः स्यात्। न हि कर्मणां परिक्षयो जन्मकोटिशतैरपि शक्यक्रियः। यदा तु कर्तारमुदासीनं प्रकृतिर्बध्नाति तदा सैव ज्ञाता सती मोक्ष्यतीति न दूरं मोक्षवर्त्म भविष्यति। अहो बत निखिलमेव मौर्ख्यं सांख्यहृदयेष्वेव प्रतिष्ठितमिति कथमन्यो जन इदानीं मूर्खो भविष्यति? अचेतने हि निरङ्कुशे 10 प्रधाने बन्धरि सुतरामनिर्मोक्षः स्यात्। तत्त्वविदमपि पुमांसं न ब्रध्नाति प्रकृतिरिति कोऽस्या नियन्ता, पङ्ग्वन्धन्यायेन संयोगस्य तदापि तुल्यत्वात्, निवृत्तकुतूहलः पुमानिति चेत्, प्रकृतिरनिर्मुक्तकौतुका अभिनववधूरिव स्थितैव।

अपि च रे मूढ! पूर्वमेव तपस्विना पुंसा किं कृतं यदसौ बद्धोऽभूत्? 15 द्रष्टृत्वन्तु तस्य रूपं तदविनाभूतं कैवल्यदशायामपि तन्न नश्यत्येवेति तदापि तद्बन्धनाय कथं न प्रवर्तते निर्मर्यादा प्रकृतिः। दृष्टास्मीति विरमतीति चेत्, मैवम्। न ह्यसावेकपत्नीव्रतदुर्ग्रहगृहीता, निःसंख्यपुरुषोपभोगसौभाग्या पण्यवनितेव नासौ नियमेन व्यवहर्तुमर्हतीत्यास्तामेतत्।

यच्च 'सत्त्वरजस्तमोभिस्त्रिभिर्गुणैः समावस्थतया प्रधानशब्दव्यपदेशभाग्भिः 20 महन्नाम्नी बुद्धिरुत्पद्यते' इत्यादि प्रक्रियाजालमालपितं तन्महान्धपरम्परान्याय-प्रवृत्तगुरुपाठक्रमोपनतमेव, न प्रमाणमूलम्। कार्याद्धि कारणमल्पपरिमाण-मुपलभ्यते न तु विपर्ययः, स्वावयवाश्रितस्य घटादेस्तथा दर्शनात् तदवयवानां तदपेक्षयाल्पत्वादन्यस्यास्यादो महापरिमाणत्वमप्रयोजकम्।

अपि च बुद्धिर्नाम विषयोपलम्भः। अहंकारोऽप्यहंप्रत्ययरूपोऽभिमानो 25 बुद्धिविशेष एव। तेन बाह्यानीन्द्रियाणि जन्यन्ते गन्धादयश्च गुणाः गुणैश्च

पृथिव्यादीनि भूतानीति महाव्यामोहः । इदञ्च चित्रम्, विषयजन्या हि सुखादयः प्रसिद्धास्ते च सुखादिजन्या विषयाः संवृत्ता इति, नवेयं विश्वा-मित्रस्येव सांख्यमुनेः सृष्टिः । न च प्रधानास्तित्वमपि प्रमाणवत्, अन्वयादि-हेतूनामसाधनत्वात् । चेतनानां हि सम्भवेदपि सुखदुःखमोहान्वितत्वम्,
5 अचेतनानि भूतानि सुखदुःखमोहवन्तीति सुभाषितम्, घटे पटे शकटे च सुखदुःखमोहाः सन्तीति कः प्रतिपद्यते ? प्रकाशप्रवृत्तिनियमा अपि चेतनेष्वेव दृश्यन्ते नाचेतनेष्वित्यसिद्धत्वाद्धेतोर्न प्रधानसिद्धिः ।

अपि च सत्कार्यवादमूल एष तपस्विनां विभ्रमः सर्वः सर्वत्रास्तीति । ततोऽन्वयसिद्धिं बुद्ध्यमानास्ते प्रधानसिद्धावध्यवसिताः । सत्कार्यवादश्च
10 विचार्यमाणो न समस्त्येवेति कुतस्त्या हेतुसिद्धिः ?

**सांख्यमतसिद्धसत्कार्यवादः**

ननु सत्कार्यवादे कार्यकारणभावो भवति भावानां नान्यथा । तथा हि चतुष्टयी गतिरिह स्यात्, घटादिकार्यं मृत्पिण्डादिना कारणेन क्रियमाणमपि क्रियते सद्वा असद्वा सदसद्वा अनुभयं वेति, तत्रासतः करणत्वे खरविषाणादेः
15 करणत्वं स्यात् । असत्त्वे हि घटस्य खरविषाणस्य च को विशेषः ? घटस्यापि च प्राक्प्रध्वंसाभावदशयोरसत्त्वाविशेषात् प्रागभावदशायामिव प्रध्वंसावस्थायामपि करणत्वं भवेत् ? असत्करणे नियतोपादानग्रहणं न प्राप्नोति, तैलार्थी हि तिलसर्षपानुपादत्ते न सिकताः, असत्त्वे च तैलस्य को विशेषः सर्षपाणां सिकताभ्यः, असति कार्ये निरालम्बनः कारकव्यापारो भवेत्, न ह्यसौ मृत्-
20 पिण्डादिविषयो भवितुमर्हति कार्यं चासत्, अपि चाविद्यमाने कारणव्यतिरिक्ते च कार्ये जन्ये कारणस्य मृत्पिण्डादेर्घटादिकार्यं जनितवतः किमिति न स्वरूपमुपलभ्यते ।

अथ स्वविनाशेन कारणं कार्यस्य जनकमिष्यते, तदियमभावाद् भावोत्पत्तिर्भवेत्, तस्याञ्च कुतोऽयं नियमो यदनन्तरवृत्त एव मृत्पिण्डाभावः

---

25 **न ह्यसौ मृत्पिण्डादिविषयो भवितुमर्हति** । यद्धि क्रियते तत्र कारकव्यापारः; न च मृत्पिण्डादि क्रियते, तस्य पूर्वकृतत्वादेवेति ।

कुम्भमभिनिर्वर्तयति न चिरातिक्रान्त इत्यतश्च परुन्मृत्पिण्डे नष्ट एव स कुम्भोत्पादः स्यात् ।

अथ स्वाव्यतिरिक्तमेव कारणेन कार्यं जन्यते ? तर्हि कारणस्य सत्त्वात् तदव्यतिरिक्तं वक्तुं युक्तम्, सदसतोर्विप्रतिषेधेनैकत्र समावेशायोगात् । रूपभेदादविरोध इति चेत्, न, कार्यस्य विचार्यमाणस्यैकत्वात्, ततश्च 5 तेनैव स्वेन कार्येण रूपेणासच्चेन्नासद्भवेदसच्च न सदिति । पररूपेण त्वसत्त्वं समस्तभावानामस्त्येव, अनुभयात्मकन्तु नाम वस्तु नास्त्येवेति, तत् पारिशेष्यात् सदेव कार्यम् । किमिति च नोपलभ्यत इति, अनुमानेनापि यदुपलब्धं तत् किमनुपलब्धं भवति ? प्रत्यक्षेण तु तदानीमनुपलम्भोऽनभिव्यक्तत्वात्, अभिव्यक्तिसम्पादन एव च कारकप्रयत्नसाफल्यम्, कार्यं तु सदेवेति । 10

**तत्खण्डनम्**

अत्राभिधीयते, केन रूपेण तदानीं कार्यं सदिति मन्यते ? यदि कारक-व्यापाराभिनिर्वर्त्येन सलिलाहरणाद्यर्थक्रियासमर्थेन पृथुबुध्नोदराकारतारूपेण चक्रमूर्धनि घटोऽस्ति तदाभिव्यक्तेनापि रूपेण सत्त्वादत्यन्ताय कारकव्यापार-वैफल्यम्, इत्थमपि च कारकप्रवृत्तौ तद्व्यापारानुपरमप्रसङ्गः, किं हि 15 तदोपलभ्य कारकाणि निवर्तेरन्, कार्यस्य प्रागप्युपलब्धत्वात् ।

अथ मृत्पिण्डरूपेण तदानीं घटोऽस्तीति कथ्यते, तत्र न ह्यसौ तदानीं घटोऽस्ति मृत्पिण्ड एवासावदो न स्वरूपमुत्तरकालमपि निवर्तते घटस्तु ततो निवर्तते, यद्येवं यदैवासौ निवर्तते तदैवास्ति न ततः पूर्वमिति ।

अथ पूर्वं शक्त्यात्मना तस्यास्तित्वम् इदानीमभिव्यक्त्यात्मना क्रियत 20 इति, तदप्यनुपपन्नम्, अभिव्यक्तिरपि तत्स्वरूपाद् भिन्ना अभिन्ना वा सत्यसती वेति विकल्प्यमाना न पूर्वोक्तं दोषमतिवर्तते ।

---

**रूपभेदादविरोधः ।** कारणरूपेण सत्त्वम्, स्वरूपेण त्वसत्त्वादिति । वस्तु नास्त्येव । सन्नसन्नप्यसत्, तत् किं वस्तु भवति ? **अनुमानेनापि यदुपलब्धम्** 'असद-करणात्' इत्यादिना । 25

**चक्रमूर्धनि घटोऽस्तीति ।** चक्रमूर्धनि घटसम्पत्तये यदुपात्तो मृत्पिण्डस्तत्र ।

का चेयमभिव्यक्तिः ? किं कार्यात्मनावस्थानम्, अथ संस्थानविशेषः, उत प्रतीतिरिति । यदि कार्यात्मनावस्थानम् ? तत् पूर्वं नाभूत् तदधुना भूतमित्यसत् कार्यम्, पूर्वमपि वा यदि तदासीत् तदा पुनः कारकवैफल्यम् । संस्थानमप्यवयवसन्निवेशविशेषः सन्नेव, ते अवयवास्तु सन्तीति कस्यात्र विवादः ? न खलु परमाणवोऽस्माभिर्नाङ्गीकृताः । प्रतीतिस्तु घटस्य चक्षुरादिकारकसामग्र्यधीनत्वेऽपि मृत्पिण्डदण्डचक्रादिकारकचक्रसाध्येति सा चक्रमूर्धनि घटस्य नास्त्येवेत्यसन् घटः ।

दर्शनादर्शनाधीने सदसत्त्वे हि वस्तुनः ।
दृश्यस्यादर्शनात् तेन चक्रे कुम्भस्य नास्तिता ॥

चक्रमूर्धवत् प्रध्वंसदशायामनुपलम्भाद् घटनास्तित्वमेवेत्यतश्च 'नासतो विद्यते भावो नाभावो विद्यते सतः' इत्यप्रमाणकम्, पूर्वापरान्तयोर्भावस्वरूपादर्शनात् । शक्त्यात्मनापि यदस्तित्वमस्योच्यते तत्रापि चिन्त्यम्, केयं शक्तिर्नामेति ? यदि घटस्वरूपाद् भिन्नासौ तर्हि पररूपेण घटोऽस्तीति स्वरूपेणैव घटास्तित्वमुक्तं भवेत् तच्च प्रत्यक्षविरोधान्निरस्तम् । असत्करणपक्षे च यच्चोदितं 'शशविषाणाद्यपि क्रियेत' इति, तन्न, वचनव्यक्त्यपरिज्ञानात्, यदसत् तत्क्रियते इति नेयं वचनव्यक्तिरपि तु यत् क्रियते तदसदिति ।

स्वरूपसहकार्यादिहेतवो यद्विधायिनः ।
दृश्यन्ते जन्यते तद्धि न व्योमकुसुमादिकम् ॥
प्रागभावदशायाञ्च हेतुव्यापारदर्शनम् ।
न तु प्रध्वंसवेलायामतः कमनुयुञ्ज्महे ॥
उपादानन्तु सर्वस्य यन्न सर्वत्र दृश्यते ।
तन्न कार्यस्य सद्भावादपि त्वेवं निरीक्षणात् ॥

---

नासतो विद्यते भाव इत्यस्योत्तरमर्धम् "उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ।" इति । असतः शशविषाणादेः करणं नास्ति, सतश्च विनाशो नास्ति, भूतपरिणाममात्रं केवलमित्युभयोः सदसतोस्तत्त्वदर्शिभिरन्तः स्वरूपमवधृतमित्यर्थः । पूर्वापरान्तयोः प्रागभावध्वंसाभावयोः ।

अद्यत्वे व्यवहारोऽपि नैवापूर्वः प्रवर्त्यते ।
यथोपलब्धं वृद्धेभ्यः स तथैवानुगम्यते ।।
तैलार्थी सिकताः कश्चिदाददानो न दृश्यते ।
अदृष्ट्वा चाद्य नान्योऽपि तदर्थी तासु धावति ।।
अन्वयव्यतिरेकौ च गृह्येते व्यवहारतः । 5
अनादिश्चैष संसार इति कस्यानुयोज्यता ।।

अथवा शक्तिनियमादेवोपादाननियम उपपत्स्यते ।

शक्तिस्त्वनित्या सूक्ष्मा च नेह काचिदुपेयते ।
तदभ्युपगमे नित्यं कार्योत्पादप्रसक्तितः ।।

किन्तु योग्यतावच्छिन्नस्वरूपसहकारिसन्निधानमेव शक्तिः । सैवेयं द्विविधा 10 शक्तिरुच्यते अवस्थिता आगन्तुका च । सत्त्वाद्यवच्छिन्नं स्वरूपम् अवस्थिता शक्तिः, आगन्तुका तु दण्डचक्रादिसंयोगरूपा । शक्तिद्वयकृता च कार्यनिष्पत्तिर-सकृद् दृष्टेति तदर्थिभिस्तु तदुपादानम् । योग्यतापि नार्थान्तरं किञ्चित्, किन्तु वस्तुविशेष एवेत्येवं सद् विनियमादुपादाननियमसिद्धेर्न सत् कार्यम् । न च शक्तिरेव कार्यमिति वक्तव्यम्, कार्यस्वरूपस्य ततः पृथग्भूतस्य प्रतीत्या 15 व्यवस्थापनात् । शक्तेश्च कार्यत्वे कार्यादेव कार्यस्योत्पादोऽङ्गीकृतः स्यात् । न च घटाद् घट उत्पत्तुमर्हति । शक्तेश्च कार्यमुत्पद्यते इत्यभ्युपगतम्, अतो अन्यत् कार्य-मन्या च शक्तिः, अनुवाद्यवाचकयोर्व्यङ्ग्यव्यञ्जकयोश्च दीपघटयोरुभयाश्रिता शक्तिर्दृष्टेति कार्यकारणयोरपि सा कथमनुभयाधिष्ठाना भवितुमर्हति ? सति च द्वितीये कार्याख्ये तदाश्रये कथमियमुभयाश्रिता स्यादिति, नैतदेवम् । यथादर्शनं 20 शक्तेरभ्युपगमात् । तच्चैकत्र दृष्टरूपमन्यत्रापि मृग्यते । वाच्यवाचकयोर्व्यङ्ग्य-व्यञ्जकयोश्च द्वयोः पृथक्त्वेन दर्शनादुभयाश्रिता शक्तिरङ्गीकृतेति हेतुद्वयस्या-नुपलम्भात् केवलकारणवृत्तिरेव शक्तिस्तत्कृतश्चोपादाननियमविचारो युक्तः ।

उत्पत्तौ खलु सिद्धायामुपादानं विचार्यते ।
सतस्तु सैव नास्तीति किमुपादानचिन्तया ।। 25

---

**न च शक्तिरेव कार्यमिति ।** कारकाणां तत्रैव व्यापारः । कार्यन्तु सदेव शक्तौ कृतायामभिव्यज्यत इति ।

सत्कार्यवादे च सुतरामुपादाननियमो दुर्घटः, सर्वस्य सर्वत्र भावात्, सिकतातिलसरस्तीरकेदारव्युप्तबीजजनिताङ्कुरादिकार्यक्रमोत्पाद्यमानतिलस्वरूपपर्यालोचनया तिलेष्विव सिकतास्वपि तैलसम्भवात् । सर्वस्य सर्वत्र चास्तित्वे नियतपदार्थप्रतिष्ठितहानोपादानादिव्यवहारः सकल एव विप्लवेत । अपि च
5 प्रायश्चित्तमेष तपस्वी तप्तकृच्छ्रमतिकष्टं कथं चरिष्यतीति । महन् ! गतोऽसि कारुण्यम् । अन्नञ्च तावदश्नात्यन्ते च वर्चोऽस्तीति विड्भक्षणात् प्रायश्चित्तीयत एवायमित्यलं सत्कार्यवादप्रमादेन ।

यत्पुनरत्राभाणि, कारणानुपमर्देन कार्यानुत्पादादभावाद्भावोत्पत्तिर्भवेत् तत्र चानन्तरवृत्त्युत्पत्तिनियमो न स्याद् इति, तदप्ययुक्तम्, मूर्तानां समान-
10 देशत्वविरोधात् । कार्यकारणयोरेकदेशत्वं नेष्यते, नैतावता भावोत्पत्तिरभावाद् भवितुमर्हति, कारणपदेन तदुपादानदर्शनात्, अत एवानन्तर्यनियमोऽप्युपपन्नः, न च कार्यकारणयोरभेदात् सत्कार्यमिति वक्तव्यम्, तयोः प्रत्यक्षसिद्धभिन्नस्वरूपत्वात् ।

यत्तु निरालम्बना कारकप्रवृत्तिरिति चोदितं परिहृतं तद् भाष्यकारेण
15 'बुद्धिसिद्धन्तु तदसत् इति' । वृद्धव्यवहारतः कार्यकारणभावमवगम्यामुष्मात् कारणादिदमीदृशं कार्यमुत्पद्यत इति बुद्धौ निर्धार्य कारकाणि कर्ता नियुङ्क्ते इति न निर्विषयः कारकव्यापारः । तदेवं सत्कार्यवादस्य निष्प्रमाणकत्वात् तन्मूलान्वयादिहेतुसिद्ध्यभावान्न प्रधानास्तित्वसिद्धिः, तदभावाच्च न तद्विकृतिर्नित्या बुद्धिः, अपि तु ज्ञानोपलब्धिरूपैवेति सम्यक् सूत्रितं 'बुद्धिरुपलब्धिर्ज्ञान-
20 मित्यनर्थान्तरम्' इति ।

**बुद्धेरनित्यत्वात्माश्रितत्वे च**

इतश्चानित्या बुद्धिः, जानामि ज्ञास्याम्यज्ञासिषमित्युपजननापायधर्मतया पाकादिवत् कालत्रयेऽपि प्रकाशमानत्वात्, ज्ञातृव्यतिरिक्तायाश्च बुद्धेरप्रतिभासनात् ।

---

25 **बुद्धिसिद्धन्तु तदसत् इति ।** 'प्राङ् निष्पत्तेर्निष्पत्तिधर्मकं नासदुपादाननियमात् । कस्यचित् सिद्धये किञ्चिदुपादेयम्, न सर्वं सर्वस्य' इति । अस्य निराकरणायाह—बुद्धिसिद्धन्तु तदसदिति । इदमस्योत्पत्तये समर्थं न सर्वमिति प्रागुत्पत्तेर्नियतकारणं कार्यं

अयन्तु विशेषः, पाकादिक्रियाणामोदनादिफलावच्छेदद्वारकं कालवैतत्यमपि भवति, उपलब्धेस्तु वस्तुस्वरूपप्रकाशनमात्रपरिसमाप्तप्रयोजनायाः कालवैतत्यं नास्त्येव, अत एवानित्यत्वेऽप्युत्पन्नापवर्गिणीमेव बुद्धिमाचक्षते शब्दवन्न घटादिवत् कालान्तरस्थायिनीमिति; सा चेयं बुद्धिरात्मान्तःकरणशब्ददीपेन्द्रियार्थाद्यनेककारककलापकार्यापि सती न बाह्ये, न बाह्यकर्मणि 5 समवैति, न बाह्यकरणे चक्षुरादौ, नान्तःकरणे मनसि किन्तु कर्तर्येव। कर्तापि च नित्यो विभुरात्मा, न भूतसङ्घातस्वभावः कार्यः तस्या आश्रय इत्यात्मपरीक्षायां निर्णीतं गुणत्वमपि च तस्यास्तत्रैव दर्शितम् ।

**बुद्धेरनित्यत्वप्रदर्शनम्**

नन्वेवं तर्हि न बुद्धेरनित्यत्वं विनाशकारणाभावाद्, द्विविधो हि गुणानां 10 विनाशहेतुराश्रयविनाशो विरोधिगुणप्रादुर्भावो वा, नेहाश्रयविनाशो नित्यत्वादात्मनो, न च विरोधिनमस्याः कञ्चिद् गुणमुपलभामहे, न, शब्दवदाशुविनाशित्वात्, नित्याकाशगुणोऽपि शब्दः शब्दान्तरमारभ्य यथा विनश्यति तथा बुद्धिर्बुद्ध्यन्तरमारभ्य विनश्यतीति तथादर्शनात् कल्प्यते, यावांश्च कश्चन विनाशदर्शनभेदोपलम्भादिः शब्दस्यानित्यतायां न्याय उक्तः 15 स सर्वोऽपि बुद्ध्या प्रयोजनीयः, अत एव न बुद्धीनामेकप्रमातृवृत्तीनां यौगपद्यं विद्यते शब्दानामिवैकवक्तृप्रयुक्तानाम् । विनश्यदविनश्यद्दशयोस्तु बुद्ध्योराशुविनाशित्वेऽपि यौगपद्यमनुभवादुपेयत इत्यलमतिविस्तरेण । बुद्धेरनित्यतायाञ्च प्रायेण सर्ववादिनामविवादः, अन्यथा कथमाह जैमिनिः

---

बुद्ध्या सिद्धम्, उत्पत्तिनियमदर्शनात् । तस्मादुपादाननियमोपपत्तिरिति । **ओदनादिफलावच्छेदेति** । यावता कालेन ओदनादिफलप्रादुर्भाव आदित आरभ्य तावत्कालावस्थायिन्येव पाकादिक्रिया । 20

ननु यदि बुद्धिः बुद्ध्यन्तरमुत्पाद्य विनश्यति तदा तज्जातीयपदार्थदर्शनानन्तरं सुखसाधनत्वात् स्मरणकाले तज्जातीयपदार्थदर्शनस्य विनाशात् स्मरणानन्तरमुपलभ्यानुवादेन परामर्शज्ञानं सुखसाधनत्वज्ञानं वा न स्यादित्याशङ्क्याह **विनश्यदविनश्यद्दशयोरिति** । स्मरणसमये वध्यघातकन्यायेन विनश्यत्ता अतः तस्य विनाश इति । 25

'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्' इति ।

अचिररुचिवत् तस्माद् बुद्धिर्निसर्गविनश्वरी
भवति जनकः स्वात्मा तस्याः स एव तदाश्रयः ।
भवमनुभवैस्तापैः पापा तमेव युनक्ति सा
5 व्यसनजननीमेतामस्मात् त्यजेत् परमार्थवित् ।।

**मनः परीक्षणम्**

**युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ।।**

मनसो यदेव सत्त्वे प्रमाणं तद्गम्यत्वमेवास्य लक्षणम्, समानेतरजातीयव्यवच्छेदकारित्वात् ।

10 ननु मनस इन्द्रियत्वात् तद्वर्ग एव पठनं युक्तं किमर्थोऽयं पृथङ्निर्देशः ? न, धर्मभेदात् । भौतिकानीन्द्रियाणि नियतविषयाणि, सगुणानाञ्चैषामिन्द्रियभावो मनस्तु न भौतिकं न नियतविषयं न चास्य सगुणस्येन्द्रियभाव इति । तच्च न भौतिकमकार्यत्वादत एव न तद्गुणयोगि, न च नियतविषयं सर्वविषयत्वन्त्वस्य सकलबाह्येन्द्रियाणामधिष्ठानत्वात् तदधिगम्यसुखादिविषयग्राहित्वाच्च । 15 बाह्येन्द्रियाणि हि मनोऽधिष्ठितानि स्वविषये प्रवर्त्तितुमुत्सहन्ते चक्षुरादीनि नान्यथा, कस्मादेवमिति चेद् युगपज्ज्ञानानुपपत्तेः, उत्तरकालञ्च बाह्येन्द्रियव्यापारविरहेऽपि तदर्थावमर्षात् ।

अस्त्येकेन्द्रियगम्येषु क्वचिज्जातिगुणादिषु ।
विज्ञानयौगपद्यं यन्मनसस्तन्न साधनम् ।।

20 तत्र विषयादिदोषेण दूरत्वादिना जात्यादेर्युगपद् ग्रहीतुमशक्यत्वात् ।

यत्तु नानेन्द्रियग्राह्येषु युगपत्सन्निहितेष्वपि गन्धरसरूपादिषु विषयेषु तद्ग्रहणेषु च स्वकार्यानुमितसन्निधानेषु सत्स्वपि यदसन्निधानात् तेषु

---

बुद्धिजन्म तत्प्रत्यक्षमिति । बुद्धेः जन्म उत्पत्तिः ।

अस्त्येकेन्द्रियगम्येष्विति । दूराद्धि कदाचिद् जातिमात्रग्रहणं 'गौरयमायाति' 25 कदाचित् तु गुणमात्रग्रहणं 'शुक्लोऽयं कश्चित्' इति ।

करणेषु युगपदुपलब्धयो न भवन्ति ततोऽवसीयते नूनं कारणान्तरधर्मेषु करणेषु युगपदुपलब्धयो न भवन्ति तच्च मन इत्याख्यायते ।

**बुद्धेर्यौगपद्याभाव एव मनःसाधनम्**

ननु च

सुगन्धि शीतलां दीर्घामश्नन्तः पूपशष्कुलीम् ।
कपिलब्राह्मणाः सन्ति युगपत्पञ्चबुद्धयः ।। 5

अपि च अयं खल्वध्यापकोऽधीते व्रजति कमण्डलुं धारयति पन्थानं पश्यति शृणोत्यरण्यजाञ् शब्दान् बिभ्यद् व्याललिङ्गानि बुभुत्सत इति क्रमाग्रहणाद् युगपदेता बुद्धयोऽस्य भवन्तीति ? न, आशूत्पत्तेः । सुच्यग्रभिद्यमानकोकनददलकदम्बकवदतिसूक्ष्मत्त्वात् कालस्य क्रमस्तत्र न विभाव्यते भवितव्यन्तु तेनेति । यदि कारणान्तरनिरपेक्षचक्षुरादिकरणसाध्या एव रूपादिविषयोपलब्धयस्तदुत्तरकालमुपहतकरणानामपि कथं स्मरणादिरूपस्तदवमर्शः ? अतो नूनं नयनादिवत् करणान्तरं तद्ग्राहि विद्यते । 10

अव्यापकञ्च तत्, व्यापित्वे हि बुद्धीनां यौगपद्यं न निवर्त्तेत । अपि चायं व्यवहारः, उक्तेऽपि क्वचिद् वचसि कश्चिदाह नाहमेतदश्रौषमन्यत्र मे मनोऽभूत् इति, तस्माद् न व्यापकं मनः । 15

प्रतिशरीरमेकञ्च च तत्, अनेकत्वे पुनरपि ज्ञानयौगपद्यानपायात् ।

क्रियावच्च तन्निष्क्रियेणेन्द्रियाणामधिष्ठातुमशक्यत्वात् ।

मूर्तञ्च तत्, अमूर्तस्य क्रियानुपपत्तेः, मूर्तत्वे सति नित्यञ्च निरवयवत्वादनाश्रितत्वाच्च । मूर्तत्वन्त्वनित्यतायामप्रयोजकमिति वक्ष्यामः । 20

निरवयवञ्च तत्, अवयवकल्पनायां प्रमाणाभावात् ।

वेगवच्च तत्, आशुसञ्चारात्, आशुसञ्चारमन्तरेणोपलब्धिदैर्घ्यस्य दृष्टस्यानुपपत्तेः ।

---

**दीर्घामश्नन्त** इति । दीर्घामित्यनेन भक्ष्यमाणायाश्चक्षुर्ग्राह्यतामप्याह, दैर्घ्याद् बहिर्भागस्य चक्षुषा ग्रहणाद् । 25

इन्द्रियसंयोगि च तत्, द्रव्यत्वाद्, द्रव्यञ्च तत्, वेगादिगुणयोगात्, क्रियावत्त्वाच्चेतनाश्रितत्वाच्च ।

अचेतनञ्च तत्, करणत्वादितरेषां ह्येकत्र शरीरे चेतनद्वयसमावेशादव्यवहारः स्यादिति, तस्मादेवंरूपं मनः ।

5 सांख्योक्तन्तु तस्य रूपमयुक्तमिति तत्प्रक्रियानिषेधादेव व्याख्यातम् ।

अन्यान्यपि स्मृत्यनुमानागमसंशयप्रतिभास्वप्नोहज्ञानानि अनन्तरसुखदुःखेच्छाद्वेषादिविषयग्राहीणि च ज्ञानानि मनसो लिङ्गानि सन्त्येव, तेषां बाह्येन्द्रियव्यापारसाध्यत्वासम्भवात्, करणरहितायाश्च क्रियाभिनिर्वृत्तेरदर्शनादिति । स्मृतिस्तावन्मनोजन्यैव, अनुमानागमज्ञानन्तु परोक्षार्थविषयत्वान्मानसं, 10 संशयोऽपि मानसः कश्चिद् वक्ष्यते, प्रतिभा सा मानसी दर्शितैव 'श्वो मे भ्राता आगन्तेति' । स्वप्नज्ञानमुपरतेन्द्रियग्रामस्य भवत् कथं न मानसम् ? तर्कोऽपि संशयवत् क्वचिद्विषये मानसो भवत्येव, सुखादीनान्तु ज्ञप्तिवदुत्पत्तिरपि मनोनिबन्धनैव, कार्याणामात्मगुणानामुत्पत्तौ प्रत्यासन्नकारणान्तरसम्भवेऽप्यात्ममनःसंयोगस्यावधृतसामर्थ्यस्यासमवायिकारणत्वात्, अतश्च विषयानु- 15 भवजन्येऽपि सुखादौ मनःसंयोगः कारणम्, सुखादीनाञ्च बोधस्वरूपत्वं संवेद्यत्वञ्च निरस्तम्, अतस्तदुपलब्धौ मनस एव कारणता ।

**शरीरे एव आत्ममनःसंयोगः**

तदिदं मनः पूर्वकृतशुभाशुभकर्मसंस्कारवतात्मना तद्वशादेव शरीरदेशे संयोगं प्रतिपद्यते तत्रैव च जीवनव्यवहारः, विपच्यमानकर्माशयसहित 20 आत्ममनःसंयोगो जीवनमिति हि वदन्ति, संयुक्तमात्मना मनस्तेषु तेषूपपत्ति-

---

**प्रत्यासन्नकारणान्तराभावेऽपीति** । ज्ञानाद्यपि तत्र कारणमस्त्येव किन्तु मूर्च्छाद्यवस्थानन्तरकालं ज्ञानोत्पत्तौ तस्याभावादकारणत्वेनाव्यापकत्वम् । अतोऽन्येषां व्यभिचारात् तस्यैव सामर्थ्यावधारणम् ।

**विपच्यमानकर्माशयेति** । आशयः संस्कारः, तत्सहितः, केवलस्य संयोगस्य 25 मृतावस्थायामपि नित्यत्वेन व्यापकत्वेन चात्मनः, सद्भावात् । उपपद्यते, देहसम्बन्धमनुभवति येषु तानि **उपपत्तिस्थानानि** ।

स्थानेषु नानाविधभोगसाधनतया संसारकारणं भवति, नित्यत्वादात्ममनसोः संयोग इति । न हि प्रथमो नाम कश्चित् कालः समस्ति आदिसर्गस्यापि पूर्वसर्गसापेक्षत्वात्, ईश्वरोऽपि कर्मापेक्ष एव विचित्रस्य जगतः स्रष्टेति निर्णीतमेतदिति कृतं विस्तरेण ।

विदधत् सुखादिभोगं वहच्च तरलेन्द्रियाश्वसारथिताम् । 5
बन्धनिमित्तं मन इति मनस्विना यत्नतो हेयम् ।।

**प्रवृत्तिपरीक्षा**

**प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः ।।**

वागिति वर्णात्मकशब्दकारणसंयोगाद्युच्यते नेन्द्रियमिति व्याख्यातम् । बुद्धिरिति मन इहोच्यते नोपलब्धिः । शरीरं प्रसिद्धम्, तेषामारम्भो व्यापारः 10 सैवारम्भ इति सर्वथा तदीयक्रिया प्रवृत्तिरित्युच्यते ।

**प्रवृत्तिविभागः**

सा च द्विविधा पुण्या पापिका च । तत्र पापिका, वाचा चतुर्विधा, मनसा त्रिविधा, शरीरेण त्रिविधैवेति दशविधा । वाचा प्रवृत्तिस्तत्रानृतपरुषसूचनासम्बद्धवचनरूपा चतुर्विधा, परद्रोहपरद्रव्याभिलाषनास्तिक्यानु- 15 ध्यानरूपा त्रिविधा मनसः प्रवृत्तिः । हिंसास्तेयप्रतिषिद्धाचरणरूपा त्रिविधा शरीरेण प्रवृत्तिः, मैथुनकरणमेवंप्रकारसुखाद्युपलक्षणम्, सेयं दशविधा प्रवृत्तिरनवरतमभिज्वलतो निरतिशयदुःखवेदनादायिनो नरकानलस्येन्धनम् । पुण्यापि सत्यप्रियहितवचनस्वाध्यायाध्ययनरूपा चतुर्विधा वाचा प्रवृत्तिः, जप- 20 यज्ञो हि स्वाध्यायपाठः, उपांशुनान्तः सङ्कल्पेन वा, अस्पृहानुकम्पापरलोकश्रद्धात्मिका त्रिविधा मनसा प्रवृत्तिः, दानपरित्राणपरिचरणरूपा त्रिविधा शरीरेण प्रवृत्तिरितीयमपि दशविधैव । एषा च स्वर्गसदनद्वारसोपानकल्पा । सेयमुभयतो विंशतिभेदा प्रवृत्तिः सङ्क्षेपतो द्विधैव विधिनिषेधात्मकतदवगमोपायभेदात् ।

**प्रवृत्तेरेव संसारकारणता**

विधिनिषेधकारण एव हि सदसत्कर्मावगमः, तत्र विहितानुष्ठानं स्वर्गाय निषिद्धाचरणं नरकायेत्येवं सुखदुःखोपभोगस्थानशरीरेन्द्रियाद्यनभिसम्बन्ध-निबन्धनमेषा प्रवृत्तिर्भवन्ती संसारस्य परमं कारणं भवति। यो ह्ययं
5 देवमनुष्यतिर्यग्भूमिषु शरीरसर्गः, यश्च प्रतिविषयं बुद्धिसर्गः, यश्चात्मना सह मनसः संसर्गः स सर्वः प्रवृत्तेरेव परिणामविभवः। प्रवृत्तेश्च सर्वस्याः क्रियात्वात् क्षणिकत्वेऽपि तदुपहितो धर्माधर्मशब्दवाच्य आत्मसंस्कारः कर्मफलोपभोगपर्यन्तस्थितिरस्त्येव, न च फलमदत्त्वा धर्माधर्मौ क्षीयेते। अन्त्य-सुखदुःखसंविद्विरोधिनौ हि धर्माधर्मावुदाहरन्ति, न च जगति तथाविधं
10 किमपि कार्यमस्ति वस्तु यन्न धर्माधर्माभ्यामाक्षिप्तसम्भवमिति तदुच्छेदे मुमुक्षुणा यत्न आस्थेयः।

इति वितनुतः पुण्यापुण्यप्रवृत्तिसमुद्भवौ
निगमवदिमौ धर्माधर्मौ रुचं भवबन्धने।
यदि निरवधेर्दुःखस्यान्तं चिकीर्षसि सर्वथा
15 परिहर मनोवाक्कायानां प्रवृत्तिमनर्गलाम् ॥

**दोषपरीक्षा**

**प्रवर्तनालक्षणा दोषाः ॥**

प्रवर्तना प्रवृत्तिः, सा लक्षणमेषामिति प्रवर्तनलक्षणा दोषाः। दोषप्रयुक्तो हि पुरुषः पुण्ये कर्मणि पापे वा प्रवर्तते।

20 ननु च प्रत्यात्मवेदनीयदोषाणां स्वरूपमपरोक्षमेतत्, किमेतेषां लक्षणतो रूपं निरूप्यते ? सत्यम्, प्रत्यात्मवेदनीयत्वेऽपि यदेषां प्रवर्तनालक्षणत्वमुप-दिश्यते तदनेन रूपेण संसारकारणत्वज्ञापनार्थम्, धर्माधर्मविहितो हि शरीरादि दुःखाधिष्ठानसम्बन्धः, तद्बीजस्य च कर्मणः कारणं दोषाः कर्मणि पुमांसं

---

अन्त्यसुखेति। यतः परं फलमन्यत् ताभ्यां देयं नास्ति तदन्त्यम्।

प्रवर्तयन्तीति प्रवर्तनालक्षणा इत्युक्ताः । परसन्तानवर्तिनां दोषाणामप्रत्यक्षत्वात् तत्प्रतीतये प्रवर्तनालक्षणत्वकथनमिति त्वपव्याख्यानमल्पप्रयोजनत्वादिति ।

**दोषविभागः**

तेषां दोषाणां त्रयो राशयो भवन्ति रागो द्वेषो मोह इति । तत्रानुकूले-ष्वर्थेष्वभिलाषलक्षणो रागः, प्रतिकूलेष्वसहलक्षणो द्वेषः, वस्तुपरमार्थापरिच्छेद 5 लक्षणो मिथ्यावसायो मोहः ।

**दोषविभागे न्यूनतापरिहारः**

ननु चेर्ष्यासूयालोभमानमदमत्सरादिदोषान्तरसम्भवात् कथं त्रय एव दोषाः ? न, ईर्ष्यादीनां यथानिर्दिष्टेष्वेवान्तर्भावात् । कामो मत्सरः स्पृहा तृष्णा लोभ इति पञ्चप्रकारो रागपक्षः । स्त्रीसम्भोगेच्छा कामः, यदन्यस्मै निवेद्य- 10 मानमपि वस्तु धनवन्न क्षीयते तदपरित्यागेच्छा मत्सरः, अनात्मीय-वस्त्वादित्सा स्पृहा, पुनर्भवप्रतिसन्धानहेतुभूतेच्छा तृष्णा, निषिद्धद्रव्य-ग्रहणेच्छा लोभ इत्यभिलाषप्रकारभेदाद्रागपक्ष एवायम् ।

द्वेषपक्षोऽपि पञ्चविधः क्रोधेर्ष्यासूयाद्रोहोऽमर्ष इति । अक्षिभ्रूवादि-विकारहेतुः प्रज्वलनात्मकः क्रोधः, साधारणेऽपि वस्तुनि परस्य दर्शनाद्य- 15 सहनमीर्ष्या, परगुणेष्वक्षमासूया, परापकारो द्रोहः, अदर्शितमुखादिविकारः परं प्रति मन्युरमर्ष इत्यसहनप्रकारभेदादेव द्वेषपक्षः ।

मोहपक्षस्तु चतुर्विधो मिथ्याज्ञानं विचिकित्सा मानः प्रमाद इति । अतस्मिंस्तदिति ज्ञानं मिथ्याज्ञानम्, किंस्विदिति विमर्शो विचिकित्सा, असद्गुणाध्यारोपेण स्वोत्कर्षबुद्धिर्मानः, कियदेतदित्यवज्ञया कर्तव्याकरणं 20 प्रमादः, स एव मद इत्याख्यायते, सोऽयं तत्त्वापरिज्ञानप्रकारभेदान्मोहपक्षः । एवं त्रय एवैते दोषाः, शोकहर्षौ तु सुखदुःखे उच्येते न दोषान्तरम् । तेषान्तु मोहः पापतमः इतरयोस्तु तदधीनात्मलाभत्वात् । मूढस्य हि रागद्वेषौ भवतो

---

**परसन्तानवर्तिनामिति ।** स्वात्मनि रागादिनिबन्धनां प्रवृत्तिमनुभूतवान्, अतः 25 परत्रापि प्रवृत्तिं दृष्ट्वा दोषसम्बन्धमनुमिमीत इति ।

मिथ्यासङ्कल्पादुत्पद्यमानयोरनुभवात्, कुसङ्कल्पश्च मिथ्याज्ञानप्रवृत्तिरेव। मिथ्याज्ञानस्यैव भगवतः सर्वमिदं विलसितं योऽयमनेकप्रकारः संसारदुःखभारः। यद्येवं न तर्हि मोहस्य दोषत्वं दोषकारणत्वादिति ? न, लक्षणानपायात्, सत्यपि दोषान्तरहेतुत्वे स्वयमपि पुरुषप्रवृत्तिप्रयोजकत्वलक्षणयोगाद्
5 रागवद् दोषत्वं न मोहो विजहाति।

### दोषस्य हेयत्वम्

त इमे दोषाः संसारहेतव इति यत्नतः शमनीयाः। कथं पुनरमी शमयितुं शक्याः ? उक्तमत्र नाकस्मिका न नित्या नाज्ञातशमनोपाया न चाशक्यप्रतिक्रिया इति। विस्तरतश्चैतदपवर्गाह्निके परीक्षिष्यते, मिथ्याज्ञान-
10 निमित्ताः खल्वेते दोषास्तस्मिन् सम्यग्ज्ञानप्रभावनिहते हेतोरभावाद् न भवन्त्येवेति।

नन्वेवं प्रसवविनाशकारणयोरेकत्वादेक एव दोषो भवेदिति त्रित्वं नोपपद्यते, न, अनुभवसिद्धभेदत्वात्। अनुभूयते हि रागद्वेषमोहानामितरेतरविभक्तं स्वरूपम्, कारणैकत्वन्तु न प्रयोजकम्, एकस्मादेव ज्वलनसंयोगा-
15 दुत्पद्यमानानां विनश्यताञ्च पार्थिवपदार्थवृत्तीनां गन्धरसरूपस्पर्शानां नानात्वदर्शनात्। अतः सूक्तं दोषाणां त्रैराश्यमिति।

संसारकाराभवनप्रवेशमार्गास्त एते त्रय एव दोषाः।
एषां प्रहाणोद्यममादधानो न जन्ममृत्यू पुनरभ्युपैति ॥

### प्रेत्यभावपरीक्षणम्

20 **पुनरुत्पत्तिः प्रेत्यभावः ॥**

कस्येयं पुनरुत्पत्तिरुच्यते, आत्मनः शरीरस्य वा ? तत्रात्मनो नित्यत्वादुत्पत्तिरेव नास्ति का कथा पुनःशब्दार्थस्य। शरीरस्य तूत्पत्तिरस्ति न तु पौनःपुन्येन। न हि मृतं शरीरं तदेव पुनरुत्पद्यते, तस्मात् पुनरुत्पत्तिः

---

**न चाशक्यप्रतिक्रिया इति।** ज्ञातशमनोपायानामपि तदुपायस्य वैकल्येनप्रतिक-
25 र्तुमशक्यत्वादशक्यप्रतिक्रियत्वम्।

प्रेत्यभाव इत्यवाचकं सूत्रम्। उच्यते, पुनःशब्दार्थस्य यत्नत उपदिष्टस्य परिहर्तुमशक्यत्वादात्मनश्च स्थायित्वेन क्रियाभ्यावृत्तिसम्भवात् तस्यैव पुनः पुनरुत्पत्तिं ब्रूमः, उत्पत्तिवन्मरणमपि। सोऽयमात्मन एव मृत्वा पुनर्जन्म प्रेत्यभाव इति।

ननु जन्ममरणे उभे अपि नित्यत्वादात्मनो न संस्त इत्युक्तम्, सत्यम्, शरीरादिसंयोगवियोगयोस्तु तथाभिधानान्न दोषः। मरणम्‌आत्मनो भोगायतन-देहेन्द्रियादिवियोग उच्यते, जन्म तु तत्सम्बन्धः। ते च ते विपच्यमानकर्माशया-नुसारेण देहेन्द्रियादित्यागोपादाने एव मरणजन्मनी क्रियाभ्यावृत्त्या भवन्ती प्रेत्यभाव इत्युच्यते। स एव च संसारः। तदित्थमनुध्यायतः कस्य सचेतसो निर्वेदो नोदीयात्? तदुक्तम्

जरावियोगमरणव्याधयस्तावदासताम्।
जन्मैव किं न धीरस्य भूयो भूयस्त्रपाकरम्॥

## शरीराद्युत्पत्तौ कारणत्वेन परमाणुसाधनम्

अथ यैरुत्पद्यमानैर्देहेन्द्रियादिभिरात्मनः सम्बन्धस्तेषां कथमुत्पत्तिरित्युक्तं सूत्रकृता 'व्यक्ताद् व्यक्तानामुत्पत्तिः प्रत्यक्षप्रामाण्यात्' इति। व्यक्तादिति कपिलाभ्युपगतत्रिगुणात्मकाव्यक्तरूपकारणनिषेधेन परमाणूनां शरीरादौ कार्ये कारणत्वमाह।

तथा हि पार्थिवमाप्यं तैजसं वायवीयमिति चतुर्विधं कार्यं स्वावयवा-श्रितमुपलभ्यते। तत्र यथा घटः सावयवः कपालेष्वाश्रित एवं कपालान्यपि सावयवत्वात् तदवयवेषु, तदवयवा अपि तदवयवान्तरेष्वित्येवं तावद् यावत् पर-माणवो निरवयवा इति। यत्र यावतः कार्यंजातस्य स्वावयवाश्रितस्य प्रत्यक्षेण ग्रहणं तत्र तदेव प्रमाणम्, तदपि हि कार्यं सावयवत्वात् परिदृश्यमानकार्यवत्। निरवयवत्वे तु तस्य परमाणुत्वमेव। परमाणुषु च सावयवत्वस्य च हेतोरसिद्ध-

व्यक्ताद् व्यक्तानामिति। व्यक्तात् परिमितात् व्यक्तानां परिमितानामुत्पत्तिः, प्रत्यक्षेण व्यक्ताश्रितस्य कार्यभूतस्य व्यक्तस्य दर्शनाद् नाव्यक्ताश्रितस्येत्यर्थः।

त्वान्नावयवान्तरकल्पना। तेषां हि सावयवत्वे तदवयवाः परमाणवोऽनुमीयन्ते। लोष्टस्य प्रविभज्यमानस्य भागास्तद्भागानाञ्च भागान्तराणीत्येवं तावद् यावदशक्यभङ्गत्वम् अदर्शनविषयत्वञ्च भवति। तद् यदि ततः परमवयवविभागो न सम्भवति ते परमाणव उच्यन्ते, तेष्वपि हि विभज्यमानेषु तदवयवाः
5 परमाणवो भवेयुर्न ते। तदेवमुत्पत्तिविनाशक्रमस्येदृशो दर्शनात् सन्ति परमाणवः।

अत्र हि त्रयी गतिः, अस्य घटादेः कार्यस्य निरवयवत्वमेव वा, अवयवानन्त्यं वा, परमाण्वन्तता वा। तत्र निरवयवत्वमनुपपन्नमवयवानाम् पटे तन्तूनां घटे च कपालानां प्रत्यक्षमुपलम्भात्। अनन्तावयवयोगित्वमपि न युक्तम्, मेरुसर्ष-
10 पयोरनन्तावयवयोगित्वाविशेषेण तुल्यपरिमाणत्वप्रसङ्गात्। तस्मात् परमाण्वन्ततैव युक्तिमती।

**अचेतनानां परमाणूनां न स्वतः संयोग इति तदर्थम् ईश्वरसिद्धिः**

त इमे परमाणवश्चेतनेच्छाप्रेरणमन्तरेण विशिष्टक्रमकमितरेतरसङ्घटनमलभमानाः कार्यसिद्धये न पर्याप्नुयुरचेतनत्वादिति चेतन एषामधिष्ठाता
15 सकलभुवननिर्माणमतिरीश्वरोऽभ्युपगतः। तत्सिद्धये च सकलकुतर्कतिमिरतिरस्कारपूर्वकं पूर्वमेव निरवद्यमनुमानमुपपादितम्। ईश्वरोऽपि नानेकात्मवृत्तिविपाकोन्मुखधर्माधर्मसंस्कारवैचित्र्यमननुरुध्यमानो विचित्रस्य जगतो जन्म निर्मातुमर्हतीत्येतदपि दर्शितम्।

**परमाणुभिर्द्व्यणुकादिक्रमेणैव कार्योत्पत्तिः**

20 न च सकृदेव सतो निर्वर्त्यमानकार्यपरिमाणानुगुणसंख्याः परमाणव एकत्र संयोज्य कार्यमारभन्ते, किन्तु द्व्यणुकादिक्रमेण, सकृदारम्भे हि कुम्भे भज्यमाने कपालशर्कराकणचूर्णादिक्रममपहाय प्रथममेव परमाण्वन्तता भवेत्। सर्वसंयोगस्य सर्वविभागेन सहसैव विनाशादतश्च कर्परादिक्रमदर्शनं विरुध्येत। अविनष्टेऽपि पटादौ तन्त्वाद्यवयवाश्रितत्वस्य ग्रहीतुमशक्यत्वात्, परमाणूनां
25 घटस्य च मध्ये कार्यान्तरानारम्भादिति। तस्माद् द्व्यणुकादिप्रक्रमेण परमाणवः कार्यमारभन्ते।

**द्व्यणुकारम्भे युक्तिः**

ननु द्वावेव परमाणू प्रथमं सङ्घटेते इत्यत्र का युक्तिः ? उच्यते, बहुत्वसंख्याया महत्त्वपरिमाणकारणत्वदर्शनात् त्रिषु परमाणुषु प्रथमं मिलत्सु तत्कार्ये बहुत्वसंख्यया महत्त्वारम्भात् तत्प्रत्यक्षत्वं प्रसज्येत । न च तत्प्रत्यक्षमतिसूक्ष्मत्वादतो द्वाभ्यां परमाणुभ्यां द्व्यणुकमादावुत्पद्यते, तच्च परमाणुवदप्रत्यक्षमेव महत्त्वानुत्पादात् । द्व्यणुकद्वयेन तु कार्यारम्भ इष्यमाणे तदविशेषप्रसङ्गात्, द्व्यणुक इव तत्रापि महत्त्वोत्पत्तौ कारणाभावात् । अतस्त्रिभिर्द्व्यणुकैस्त्र्यणुकमारभ्यते, तत्र च बहुत्वसंख्यया महत्त्वमारप्स्यते प्रत्यक्षञ्च तद्भविष्यति, ततः परन्तु क्रमसामान्ये प्रमाणमस्ति लोष्टादिभक्तेः सावयवखण्डावयवनिदर्शनम् । क्रमविशेषे तु प्रमाणं नास्तीत्थमारम्भ इति । यत्र वा दर्शनमस्ति तत्र तदस्तु क्रमविशेषप्रमाणम्, आरभ्यारम्भकत्वन्तु नेष्यते मूर्तानां समानदेशत्वविरोधात् । न हि परमाणवः प्रथमं कार्यमारभ्य तदनु त एवोत्तरोत्तरकालं कार्याण्यारभन्ते किन्तु यत् परमाणुनिर्वृत्तं कार्यं द्व्यणुकं तत् कार्यान्तरस्यारम्भकम्, तदप्यन्यस्य कार्यस्येत्येवं तावद् यावत् परिपूर्णावयविनिष्पत्तिः । इत्थञ्च तन्तुभिः पटः क्रियते न तन्त्ववयवैरंशुभिः, इतरथा ह्युत्तरोत्तरकार्यारम्भेऽपि पूर्वपूर्वकारणानपायान्मूर्तानामेकदेशत्वं स्यात्, न च तद् दृश्यत इति यथोक्त एव क्रमः श्रेयान् । तदेवमनेकात्मसमवेतधर्माधर्मसंस्कारपरिपाकानुरूपप्रसरदीश्वरेच्छाप्रेर्यमाणपरमाणुक्रियानुपूर्वीनिर्वर्त्यमानद्व्यणुकादिकार्यक्रमेण शरीराद्यवयविनिर्वृत्तिरिति स्थितम् ।

**द्व्यणुकादिप्रक्रमेण शरीरोत्पत्तिविरुद्धदर्शनानि प्रमाणविरुद्धानि**

एतद्विपरीतानि तु मतान्तराणि प्रमाणविरुद्धानि । तथा हि नित्यमेव

---

**तत्प्रत्यक्षत्वं प्रसज्यते, न च तत्प्रत्यक्षमिति ।** तस्य हि प्रत्यक्षतायां भूयोऽवयवग्रहणसहकारिणेन्द्रियेणावयविग्रहणात् परमाणोः प्रत्यक्षत्वं प्राप्नोतीति केचित् । तस्य महत्त्वानुत्पादकत्वादेव वा अग्रहणमिति युक्तम् । तदेवाह **महत्त्वानुत्पादादिति । आरभ्यारम्भकत्वेति ।** यदि ह्येकमारभ्यान्यदप्यारभ्येत तर्हि मूर्तानां कार्याणामेकदेशत्वं स्यात् । तद्यथा, तदेकं यत्र वर्तते एवं द्वितीयमपि तत्रैव वर्तेत । न चायं मूर्तानां धर्मो दृश्यत इति ।

शरीरादि अनुत्पत्तिधर्मकमिति प्रत्यक्षविरुद्धम्, पृथिव्यादेरप्यवयवसन्निवेश-
विशिष्टतया कार्यत्वादितीश्वरसिद्धौ निर्णीतम् । आकस्मिकत्वमपि शरीरादेः
कार्यस्य न युक्तम्, कारणनियमोपलम्भादनिमित्तायाश्च भावोत्पत्तेरनुपपत्तेः ।
अभावादपि भावोत्पत्तिस्तादृगेवेति । गुणात्मकप्रधानविकारमहदहङ्कारादि-
5 कारणकत्वमपि कार्यस्य पृथिव्यादेः प्रागेव प्रपञ्चतः प्रतिषिद्धम् । अनारब्धा-
वयविरूपकार्याः परमाणव एवैते सञ्चयविशिष्टाः सन्तो लोकयात्रां
वहन्तीत्येतदपि न समीचीनम्, सञ्चयस्य भेदाभेदविकल्पाभ्यामनुपपद्यमानत्वात्,
परमाणूनाञ्चातिसौक्ष्म्यादप्रत्यक्षत्वात् । पौद्गलिककार्यपक्षेऽपि पर्यायान्तरेण
परमाणूनां कथनम्, अप्रमाणकत्वं वा । शब्दविवर्तत्वं तदनुगमाग्रहणादनुप
10 पन्नम् । परमात्मोपादानत्वमपि न सम्भवति तस्यैव निष्प्रमाणकत्वात् । न च
न कदाचिदनीदृशं जगदिति पादप्रसारिकामात्रं कर्तुमुचितम्, सर्गप्रबन्धप्रलय-
प्रबन्धस्य समर्थितत्वादिति ।

अतश्च पक्षान्तरदुर्बलत्वाद् यथोदितः सिध्यति भूतवर्गः ।
तं यस्तु पश्यन्नपि निह्नुवीत तस्मै नमः पण्डितशेखराय ।।

---

15 **अनारब्धावयविरूपकार्या** इत्यादिना सौत्रान्तिकमतमाह । **पौद्गलिककार्या** इत्यादिना अर्हन्मतमुक्तम् । **पर्यायान्तरेण** परमाणुशब्देन । **तदनुगमाग्रहणादिति** । मृद्वि-
वर्ता घटादयो मृद्रूपानुगता गृह्यन्ते नैवं शब्दानुगतार्थस्ता अर्थाः । **परमात्मो-
पादानत्वमिति** । सर्वत्र पृथिव्यादौ परिणामवशेन चैतन्याभिव्यक्तिदर्शनात् चेतनोपादान-
त्वमेव सर्वस्य युक्तम् नाचेतनप्रधानपरमाण्वाद्युपादानत्वम् अचेतनावदुत्पत्त्यसम्भवादिति
20 परमात्मोपादानत्ववादिनां मतम् । प्रमाणमप्याहुः यत् सामान्यविशेषवद् वस्तु तत् सर्वं
कारणैकनिष्ठम्, यथा घटादि, यत् पुनः कारणैकनिष्ठं न भवति तत् सामान्यविशेषवदपि
न भवति । परमकारणं परमात्मा, न हि तस्यैकत्वात् केनचित् सह सामान्यं रूपमस्ति,
एकत्वादेव च न तस्य कुतश्चिद् विशेष इति । अत एव न परमाणूनां परमकारणत्वं
प्रधानस्य च, तेषामपि सामान्यविशेषवत्त्वात् । तथाहि, परमाणूनां परमाणुत्वं सामान्यम्,
25 अन्त्यविशेषाश्च विद्यन्त एव । सत्त्वरजस्तमसामपि अचेतनत्वं सामान्यम्, परस्परञ्च
विशेषा विद्यन्त एव, अन्यथा त्रित्वानुपपत्तेरिति । श्रुतिमप्याहुः, "यथोर्णनाभिः सृजते
गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात् केशलोमानि तथा
अक्षरात् सम्भवतीह विश्वम्" इति ।

अनादौ संसारे स्थितमिदमहो मूढमनसां
जनित्वा जन्तूनां मरणमथ मृत्वापि जननम् ।
इयं सा दुःखानां सरणिरिति सञ्चिन्त्य कृतिना
विधातव्यं चेतो जननमरणोच्छेदिनि पदे ॥

**फलपरीक्षा** 5

**प्रवृत्तिदोषजनितोऽर्थः फलम् ॥**

प्रवृत्तिर्दोषाश्च व्याख्याताः, तज्जनितोऽर्थः फलमित्युच्यते । अर्थग्रहणं गौण-मुख्यभेदप्रदर्शनार्थम् । सुखदुःखे मुख्यं फलं तत्साधनन्तु शरीरेन्द्रियविषयादि गौणम् । सर्वं हीदं प्रवृत्तिदोषाक्षिप्तं फलमित्युक्तम् । तदिदमनादिना प्रबन्धेन प्रवर्तमानं फलं पुनरुपयुज्यते पुनस्त्यज्यत इति महतः खेदस्य हेतुरिति भाव्य- 10
मानं निर्वेदवैराग्यादिमार्गेणापवर्गोपयोगितां प्रतिपद्यते ।

आत्तमात्तं विजहतस्त्यक्तं त्यक्तञ्च गृह्णतः ।
पुंसः फलपटीयन्त्रमहो कष्टः परिश्रमः ॥

तत् पुनः फलं कर्मणा किं सद्य एव सम्पद्यते कालान्तरेण वा ? उच्यते, द्विविधं कर्म विहितं निषिद्धञ्च, तत्र विधिफलानां कालनियमो नास्ति, 15
क्रियाफलं दोग्धि पचतीति समनन्तरमुत्पद्यमानं दृश्यते । विधिफलानान्तु नैष नियम इति शब्दपरीक्षायां चित्राक्षेपपरिहारावसरे निरूपितमेतत् । विधिफलमपि च किञ्चन चोदनावचनपर्यालोचनया सद्य इति निश्चीयते वृष्टिरिव कारीर्याः, किञ्चिदैहिकफलमपि कर्म वस्तुबलात् कालान्तरापेक्षं भवति पुत्रेष्ट्यादि, न हि सहसैव निधिलाभवत् पुत्रलाभः सम्भवति गर्भसम्भवहेतुभूत- 20
भार्यापरीरम्भादिक्रमापेक्षत्वात् । ज्योतिष्टोमादि तु स्वर्गफलं कर्म फलस्वरूप-महिम्नैव पारलौकिकफलमवतिष्ठते । स्वर्गो हि निरतिशया प्रीतिस्तदन्यथा-नुपपत्तिपरिकल्पितः कनकगिरिशिखरादिर्वा देशः, उभयथापि नैतद्देहोप-भोग्यतां प्रतिपद्यते ।

अनियतफलन्तु चित्रादि कैश्चिदुक्तम्, तच्च युक्तमयुक्तं वेति तत्रैव 25
परीक्षितम् । निषिद्धस्य तु कर्मणः सर्वस्यैव प्रायेण परलोक एव फलम्,

परदाराभिमर्षणादौ हि क्रियाफलं सुरतसुखादि सद्यः फलम्, निषेधविधिफलन्तु नरकपतनं पारलौकिकम्, स्वर्गवन्नरकस्यापि निरतिशयदुःखात्मनस्तदन्यथानुपपत्तिकल्पितदेशस्य वा एतच्छरीरानुपभोगयोग्यत्वात् । तीव्रसंवेगनिर्वृत्तकर्म विहितमितरद् वा प्रत्यासन्नविपाकमिहैव भवति नन्दीश्वरनहुषयोरिवेत्यागमविदः । चौरब्रह्मघ्नादयश्च केचित् प्रत्यासन्नप्रत्यवायाः प्रायेण दृश्यन्त एवेत्येवमेष विचित्रः कर्मणां विपाकः ।

यदपि चोच्यते कर्मकाले फलं नास्ति फलकाले कर्म नास्ति कालान्तरे च फलस्यान्यत् प्रत्यक्षं कारणमुपलभ्यते सेवादिकमिति, तदपि पूर्वं परिहृतम् । कर्मणां विनाशेऽपि तज्जनितस्यात्मसंस्कारस्य धर्माधर्मशब्दवाच्यस्य भावात्, दृष्टस्य च सेवादेः कारणस्य व्यभिचाराददृष्टकल्पनाया अवश्यम्भावित्वात् । 'धर्मादेरात्मनि फलसमवायात् फलस्य च पुत्रपश्वादेरन्यसमवेतत्वाद् भिन्नाधिकरणत्वं कर्मफलयोः' इत्यपि न चोद्यम्, मुख्यस्य सुखदुःखात्मनः फलस्य भिन्नाश्रयत्वानुपपत्तेः, सुखदुःखे ह्यात्मनि वर्तेते धर्माधर्मौ च तत्स्थावेवेति ।

दृष्टेनैव सुखस्य कारणमतस्तद्धेतुरागेण किं
दुःखस्यापि न तन्निबन्धनमिति द्वेषस्तदर्थेषु कः ।
तस्मात् कर्मनिमित्तकं फलमिति ध्यायन्न कुर्यात् कृती
सङ्गं कर्मणि येन दुस्तरमसौ संसारमापद्यते ॥

---

**नन्दीश्वरनहुषयोरिति** । नन्दिनामा ब्राह्मणकुमारको विप्रेभ्य आत्मनोऽल्पायुष्ट्वमवगम्य तादृशं तीव्रतपोविशेषरूपं कर्माकरोद् येन तेनैव शरीरेण भगवतः शङ्करस्य गणाधिपत्यपूर्वकमजरामरत्वमवाप येनाद्यापि नन्दीश्वर इति ईश्वरशब्देन व्यवह्रियते । नहुषाख्यश्च सोमवंशप्रभवो राजर्षिर्महता पुण्यकर्मसम्भारेणैन्द्रपदमवाप्य ब्राह्मणान् स्ववाहनकर्मण्यश्ववद् नियुञ्जानो ब्राह्मणशापात् सद्य एवाजगरत्वमवाप । **तीव्रसंवेगेति** । तीव्रसंवेगेन महता प्रयत्नेन सर्वात्मना तत्परायणत्वेन निर्वृत्तम् ।

**फलस्य च पुत्रपश्वादेरन्यत्र समवेतत्वादिति** । अन्यत्रसमवेतत्वं स्वावयवसमवेतत्वम् पुत्रादेरत्र विवक्षितम् । **मुख्यस्य** पुत्रजन्मजस्य । **तद्धेतुरागेण** सुखहेतुरागेण ।

## दुःखपरीक्षा

**बाधनालक्षणं दुःखम् ॥**

बाधना पीडनं सन्तापनम्, सा लक्षणमस्येति बाधनालक्षणं दुःखम् । तत्र मुख्ये दुःखे लक्ष्ये लक्षणशब्दो यथाश्रुत एव, बाधनयैव हि दुःखस्वरूपं लक्ष्यते बाधयति पीडयतीति । गौणे तु दुःखे शरीरादौ लक्ष्ये बाधनानुषक्तमिति व्याख्येयम् ।

ननु च पूर्वसूत्राख्यातेन फलग्रहणेनैव दुःखस्योपदिष्टत्वात् किमर्थं पुनरुपदेशः, सुखप्रत्याख्यानार्थमिति चेत्, न, पूर्वापरविरोधात्, सकलप्राणभृदनुभवसाक्षिकत्वेन च सुखस्य प्रत्याख्यातुमशक्यत्वात् । तत्प्रत्याख्याने च विवक्षिते किमर्थं प्रमेयसूत्रे फलोपादानम् ? फले खलु सुखदुःखे इति व्याख्यातम्, ततश्च सुखप्रत्याख्याने दुःखमेवावशिष्यते तच्चानेन दुःखशब्देनैव निर्दिष्टमिति किं फलग्रहणेन ? उच्यते, न सुखलेशस्य संसारे जन्तुभिरन्तरान्तरानुभूयमानस्य प्रत्याख्यानाय दुःखग्रहणम्, सर्वत्र तथात्वभावनोपदेशार्थं सन्नपि सुखलवो दुःखमेवेति भावयितव्यस्तत्साधनमपि सर्वं दुःखमेवेति मन्तव्यम् ।

न तद् व्यवसितं पुंसां न तत् कर्म न तद् वचः ।
न तद् भोग्यं समस्तीह यन्न दुःखाय जायते ॥

तदित्थं दुःखमुत्कृष्टं तिरश्चाम्, मध्यमं मनुष्याणाम्, हीनं देवानाम्, हीनतरं वीतरागाणामित्यागमविदः । वीतरागाणां दुःखतानवं युक्तितोऽप्यवगम्यते, दुःखस्य रागनिबन्धनत्वात् ।

तत्त्वतश्चिन्त्यमानं हि सर्वं दुःखं विवेकिनः ।
विषसम्पृक्तमधुवत् सर्वं दुःखीभवत्यदः ॥
सुखाधिगमलोभेन यतमानो हि पूरुषः ।
सहस्रशाखमाप्नोति दुःखमेव तदर्जने ॥
एवं सर्वमिदं दुःखमिति भावयतोऽनिशम् ।
सर्वोपपत्तिस्थानेषु निर्वेदोऽस्य प्रवर्त्तते ॥

---

न पूर्वापरविरोधादिति । पूर्वं दुःखवत् सुखस्यापि फलतया प्रतिपादनात् ।

निर्विण्णस्य च वैराग्यं विरक्तस्य च देहिनः ।
क्लेशकर्मप्रहाणादिद्वारो निःश्रेयसोदयः ।।

नन्वेवं तर्हि फलग्रहणं न कर्तव्यम्, दुःखपदेनैव गतार्थत्वादित्युक्तं, मैवम्, तस्यान्यप्रयोजनत्वात् । प्रवृत्तिदोषजनितत्वेन हि फलमनुचिन्तितवतस्तत्कारण-
5 योरनुकूलप्रतिकूलयोरस्य रागद्वेषौ मा भूताम्, अभ्यावृत्त्या च ससाधनस्य फलस्य हानोपादानस्रोतसोह्यमानस्तत्रात्यन्ताय निर्विद्यतामिति फलग्रहणम् । तदेवमन्यथा फलस्य निःश्रेयसोपयोगित्वमन्यथा तु फलत्वे सत्यपि दुःखस्येति ।

दीर्घस्य दुःखस्य निमित्तभूतं सुखञ्च दुःखात्मकमेव सर्वम् ।
मुमुक्षुणा हेयतया विचिन्त्यं देहादिदुःखान्तमिदं प्रमेयम् ।।
10 इति निपुणमतिर्यो दुःखमेवेति सर्वं
परिहरति शरीरे क्लेशकर्मादिजातम् ।
अजममरमनन्तं चिन्तयन्नात्मतत्त्वं
गतभयमपवर्गं शाश्वतं सोऽभ्युपैति ।।

**इति श्रीभट्टजयन्तस्य कृतौ न्यायमञ्जर्यामष्टममाह्निकम् ।।**

---

15 **तत्कारणयोरनुकूलप्रतिकूलयोरिति** । तदा हि तयोरकारणत्वाद् न तद्विषयौ रागद्वेषौ युक्तौ ।

**अजममरम्** जन्मविनाशरहितम्, **अनन्त**मात्मनस्तेन रूपेणावस्थानात्, **शाश्वतम्** व्यापकमिति ।

भट्टश्रीशङ्करात्मजचक्रधरकृते
20 न्यायमञ्जरीग्रन्थिभङ्गे
अष्टमम् आह्निकम्

# न्यायमञ्जर्य्यां पठिता विशिष्टपारिभाषिकशब्दाः

## प्रथमं परिशिष्टम्

| विशिष्टशब्दाः | पृष्ठाङ्काः |
|---|---|
| **अ** | |
| अक्षपादपक्षः | १०४ |
| अक्षिनिकोचम् | १६७ |
| अखण्डगेयं | २७८ |
| अगदद्रव्यम् | २८२ |
| अग्निहोत्रम् | २६३ |
| अङ्कुरादयः | २८४ |
| अजगरत्वं | ३१० |
| अञ्जनशलाकादेः | २७४ |
| अतिदेशषट्कः | ८८ |
| अत्रभवन्तः | २३० |
| अत्र वदन्ति | १४२, २०३ |
| अत्रैके | ४६ |
| अदृष्टम् | २६२ |
| अधिकारविधिः | ८५ |
| अध्यात्मविदः | १७१ |
| अध्यापकः | २९९ |
| अध्यापनविधिः | ८५ |
| अध्येषणम् | ७३ |
| अनधिगतव्याकरण० | १६५ |
| अनिर्मुक्तकौतुका | २९१ |
| अनुज्ञा | ७४ |
| अनुप्रवेशपक्षे | २१५ |
| अन्त्यजनपद० | १८७ |
| अन्धपरम्परा | १९१, १९३ |
| अन्ये | ४३, ४४, ४५, ४६, ६०, ७०, ७७, ७८, ९४, १२६, १४९, १८२, २२८, २६७ |

# अत्रोद्धृतानां श्रुति-स्मृति-सूत्रवचनानि

## द्वितीयं परिशिष्टम्